# अमरमङ्गलम्

( नाटकम् )

भट्टपल्ल्यभिजन-काशीस्थ-

राज्यत नानादर्शनपरमाचार्य्य-सर्व्वतन्त्रस्वतन्त्र-

श्रीपञ्चाननतर्करत्नभट्टाचार्य्य-विरचितम् ।

भट्टपल्ली-संस्कृतमहाविद्यालयात् तदध्यक्षेण कलिकाता-
विश्वविद्यालयाध्यापकेन एम० ए० इत्युपाधिकेन
श्रीश्रीजीव-न्यायतीर्थभट्टाचार्य्येण
स्वकृतटीकया मेलयित्वा प्रकाशितम् ।

शकाब्दाः १८६१

[द्वितीयं सं ]. [ मूल्यं छात्राणां १) रूप्यकमेकम्
तदन्येषां २) रूप्यकद्वयम् ]

# नाटकोल्लिखितपात्राणि

[ तत्र पुरुषाः ]

| | | |
|---|---|---|
| अमरसिंहः | ... | उदयपुरराजः |
| समरसिंहः | ... | तस्य कपटमित्रं मानसिंहचरः |
| शालुम्ब्रापतिः | ... | उदयपुरसामन्तभूस्वामी |
| भणसिंहः | ... | ,, ,, ,, |
| वान्दाठक्कुरः | ... | ,, ,, ,, |
| [illegible]सिंहः | ... | दिल्लीश्वरसेनाध्यक्षोऽम्बरराजः |
| राज्य[illegible]तिः | ... | अम्बरराजसेनाध्यक्षः |
| क्षोमानन्दः | ... | राजगुरुः । |
| शैलदेवः | ... | एकलिङ्गप्रधानपुरोधाः |
| भद्रदेवः | ... | चितोरेश्वरी-पुरोधाः |
| सागरसिंहः | ... | दिल्लीश्वरनियुक्तश्चितोरराजः |
| अमात्यः | ... | सागरसिंहमन्त्री |
| शिवसेनः | ... | उदयपुरराजचाराध्यक्षः |
| नारायणः | ... | शैलदेवशिष्यः |
| परायणः | ... | ,, |
| कञ्चुकी | ... | उदयपुरराजान्तःपुराध्यक्षः |
| प्रतीहारी | ... | दौवारिकः ( मानसिंहस्य द्वाररक्षी ) |
| वृद्धो दैवज्ञश्च | ... | मानसिंहचरौ |

नगरपालो ब्रह्मचारिणौ सूत्रधारः, तत्सहकारी विदूषकश्च

[ तत्र स्त्रियः ]

देवी ... उदयपुरराजमहिषी

वीरा ... मानसिंहनियुक्ता क्षत्रियकन्यात्वेन दत्तपरिचया वाराङ्गना

सुबला ... राजमहिषी-सहचरी

जरती ... वीराया दास्येन परिचिता तदीयजननी

सिद्धतापसी ... तपोव्रतरता वीरा

भल्ला ... उदयपुरराजान्तःपुरदौवारिकी

---

## अवश्यद्रष्टव्यम् ( त्रुटितपूरणादि )

| त्रुटितम् | पूरणम् | पृष्ठ | [illegible] |
| --- | --- | --- | --- |
| आलम्बयावः । | आलम्बयावः (२) | ७८ | [illegible] |
| कार्य्यम् । | कार्य्यम् । (२) आलम्बं समन्ताद् दीर्घं कुर्व्वः, नियोगानुसारेण कार्य्य-स्थानं वर्द्धयाव इति भावः। एतेन चतुर्थाङ्कप्रदर्शनीय-चाटुकारद्वयसंग्रहः सूचितः। वर्त्तमानसामीप्ये भवि-ष्यति लट्। | ,, | १८ |
| वश्रणं एणेदं (मान | वश्रणं एणेदं (प्रतीहारी निष्क्रान्तः, मान | १४२ | ३ |
| **परिवर्त्तनीयम्** | | | |
| दासि | भल्ले | ६५ | १७ |
| गुड़गुड़शब्दात् । | गुड़गुड़शब्दात् | १२८ | १५ |
| त्वया | त्वयि | ३२० | ५ |

# भूमिका

अस्ति किल प्रतीच्यां दिशि राजपुतानेति प्रसिद्धे भूभागे मेवारेति विख्यातो महान् विषयः, यं केचिन् मिवारेत्यपि वदन्ति। यस्य च देवभाषामयं कल्पितं नाम मेदपाट इति। तस्य तावद् वीरप्रसूरित्यन्वर्थमभिधानमद्यापि सर्व्वत्र प्रचरति। तत्र च दुर्गालङ्कृता प्राचीनराजधानी 'चितोर'नगरम् 'अन्तला' (उण्टला) प्रभृतयो राज्यत[illegible] 'हल्दीघाट' 'दोवारि' 'रणपुर' प्रभृतीनि पूर्व्वतनप्रसिद्धक्षेत्राणि (प्रसिद्धतमश्चैतेषु हलदीघाटस्थानम्) तथैकलिङ्गायतनचितोरेश्वरीपत्तनादीनि देवस्थानानि तीर्थभूतानि वर्त्तन्ते। तस्य चाधिपतीनां प्राचीनः पूर्व्वपुरुषः किल भगवतः श्रीरामचन्द्रस्य द्वितीयतनयो लवो नाम।

तद्वंशसम्भवो वाप्पादित्यनामा वाप्पेति प्रसिद्धस्त्रिहायणो भिल्लैर्निहतपितृको हृतराज्यश्च शान्तशीलब्राह्मणगणरक्षितः पश्चाच्छैवयोगिनो हारीतमुनेः शिष्यतामधिगम्य निजभुजबलविजितं सावान्तरविषयं चितोरनगरमध्यकार्षीत्। स हि श्रीगुरोः प्रसादात् साक्षाद्भवानीप्रदत्तकृपाणपाणिर्मार्त्तण्डमण्डलाङ्कितनवजवालोहित - विजयवैजयन्तीरोचिषा भूयांसमेव भूखण्डमस्खलितगतिरनुरञ्जयामास। अद्यापि तदन्ववायमेव भजते कुलक्रमागता मेवारराजलक्ष्मीः। परमेतावान् विशेषो यत् पूर्व्वं चितोरनगरं राजधान्यासीत् परस्ताच्चोदयपुरमिति। चितोरशब्दस्तु 'चित्रकूट' शब्दस्यापभ्रंशभूतचित्तौड़शब्दादुत्पन्नो वङ्गभाषा-प्रसिद्ध इति जनाः कथयन्ति। वीरनिकरभूयिष्ठायामेतत् कुलपरम्परायां समर-राहुप-कुम्भ-हामिर-संग्राम-प्रतापादयः सुगृहीतनामानः प्रादुरासन् भूयांसो भूपतयः।

तेषु समरसिंहो दिल्लीश्वरपृथ्वीराजसहायभूतो भारताक्रमणार्थमुपागतमगणितजवन-सैन्यपरिवृतमभिषेणयन् जवनसेनापतिं निरन्तर-सञ्चालित-कृपाण-पात-निहत-बहुशत-यवनयोधः श्रमगृहीतोऽप्य-पराङ्मुखीभूतः प्रतिपन्न-शस्त्र-प्रहार-क्षत-कलेवरो दृषद्वतीतीरे मरण-सुखमाश्रयन्नमरतामवाप। तदीयकुलजो राहुपः शिशोद-प्रदेश-जयचिह्नं राणा इत्युपाधिं 'शिशोद' संज्ञाञ्चालभत।

तद्वंशसम्भवे मेवारराजसिंहासनमधितिष्ठति लक्ष्मणसिंहे चितोर-नगरं जवनाक्रान्तमभूत्। तस्मिन्नवसरे वाप्पावंशसम्भवानां महा-वीराणां शोणितेन रञ्जिता चितोरभूमिः कीर्त्या च दिगन्तरालम्। ते च परेषां कामानबन्दुकेति प्रसिद्धनामधेयैर्बृहत्क्षुद्रनालिकास्त्रैर्वि… कृतसदस्त्रप्रयोगनैपुण्याः सम्मुखीना एव नश्वरं शरीरं परित्यजुः न रत्निनश्वरं मानं कीर्त्तिं वा। जवनकरामर्शशङ्कया ज्वलदनलनिपतिताः कुलाङ्गना धूममलिनां दिवं पुण्यप्रभया समुद्भासयन्त्यो गौरीसालोक्यं प्रतिपेदिरे। एवं श्मशानभूतं चितोरनगरं जवनाधिकृतमासीत्।

यश्च हामीरसिंहापरनामा लक्ष्मणसिंहपौत्रो हामिरसिंहः स हि जवनाधिकृतं पैतामहं चितोरनगरमुपायेनाधिकृत्य विजित्य बद्ध्वा च महम्मदखिलिजिनामकदिल्लीश्वरं स्वर्गतानां पूर्व्वजानामाशीराशि-पात्रं बभूव।

यश्च कुम्भो नाम स खलु दिल्लीश्वरविजेतारौ मालवगुर्ज्जर-देशयोर्ज्जवनाधिपती विजित्य तयोर्मालवपतिं निगड़बन्धमनयत्। अथ नैसर्गिककरुणया मासषट्कानन्तरं विनैव निष्क्रयं मालवाधिपतिं बन्धागारादुन्मुमोच। एवमेतावन्यांश्च रिपुनरपतीन् विजित्य चतु-रशीतिविजयस्तम्भैर्दुर्गप्रासादादिभिश्च चितोरपुरमलञ्चकार।

यश्च सङ्गेति प्रसिद्धः संग्रामसिंहो नाम कृत्स्नमेव भारतवर्षं स्वायत्तीकर्तुं प्रयतमानो भारतवर्षीय[illegible] [illegible] मोगलवीरेण

वावरेण तथा निर्व्याजमसंग्राममयत्, यथा खलु मोगलवीरो जयाशां परित्यज्य जीविताशामेव बलवतीं मेने। तथा च तदानीं सन्धिरेव तस्मै रोचते स्म न तु संग्रामः। सत्यप्येवं दैवविडम्बितः संग्रामसिंहो जवनकपटमिलितेन विश्वासघातिना तुयारवंशीयेन निजसेनापतिना शिलादित्येन वञ्चितः पराजयलाघवमन्वभूत्। वावरस्तु तेनैव निर्वृतो दिल्लीं प्रतिजगाम। अथ न खल्वनिर्जितशत्रुः पराभूतः प्रवेष्टुमर्हति चितोराभ्यन्तरं वाप्पावंशसम्भव इति बहिरेव धृतव्रते निषीदति संग्रामसिंहे पराजयजनितक्षोभादल्पीयसैव कालेनास्तमुपगते बभूव महावसादतिमिरावृता मेवारभूमिः। यदतिरेकभ्रष्टमार्गा पदे पदे स्खलन्ती चिरपरिचितमपि चितोरमपहाय शनैरुदयपुरमाशिश्रिये राज्यलक्ष्मीः।

तथा हि, व्यसनविपर्य्यस्तबुद्धिरुदयसिंहो नाम संग्रामसिंह-सूनुर्वावरपौत्रेण नीतिविदांवरेण भारतेश्वरेणाकब्बरेणाक्रान्तः समुत्सृज्य मानकीर्त्तिं चितोरञ्च, कलङ्ककालिमानमरण्यमलिनम् 'आरावली' गिरिपरिसरपरिक्षिप्तं दुर्गभूमिखण्डञ्चाललम्बे। तत्रैव चोदयपुरं नाम राजधानीमतिष्ठिपत्। पलायिताधिनाथमपि चितोरमाबाल-वृद्ध-वनिता-विजृम्भमाण-विक्रम-तेजः-सन्धुक्षित-क्षत्र-वीर-निकर-परिरक्ष्यमाणं परैरनभिभवनीयं बभूव। पलायितुरधिनाथस्य कुलोचितविक्रमाभावेऽपि स्वातन्त्र्यरक्षणकाम्या योग्योपायाविष्करणपाटवञ्च प्रशंसनीये बभूवतुः। यदवलम्बनो हि तत्रत्यशिलाङ्कितपद्यबन्धो जागर्त्ति; तथा हि—'स शूरः पश्चिमादुद्यन् क्रामन्नाकबरः क्षितिम्। किं न हीनकरो भूयात् प्राप्योदयमहीभृतम्' इति। अथ कूटयोधिनामरीणां नालिकाख्य-दूरपाति-कूटानलप्रहरण-विध्वंसित-दुर्गप्राकारम्, एकतः क्षत्रवीरप्रकराणां कृपाणघात-समुत्पतित-स्फुलिङ्ग-लिङ्ग-प्रतापज्वलनैः, अन्यतः सतीधर्म्म-रक्षार्थमङ्गनाभिः स्वयं प्रदत्त-कोमल-कलेवराहुति-देदीप्यमान-चितानल-ज्वालाभिरालोकितदिङ्मण्डलं क्रमेण तत् तिमिरावृतमभूत्, एवं किल

हृष्ट-पुष्ट-नरनारी-संबाधमपरिमितधनरत्न-समृद्धं शिल्पप्रकर्ष-परिशोभितं महानगरमचिरादेव श्मशानायमानमासीत्।

तदेवमसदृशमधःपतनमसहमान इव क्षात्रप्रतापः स्वयं गृहीतमूर्त्ति-रुदयसिंहस्य पुत्रात्मना प्रादुर्बभूव। यो हि प्रतापसिंह इत्यन्वर्थ-संज्ञया विज्ञायते। स खलु जवनसंसर्गिणः क्षत्रभूपतीन् पान-भोजनादिव्यवहारेणापि दूरतः परिहरंश्चितोरोद्धारमेव कामयमानो यावच्चितोरोद्धारो न भविष्यति तावत् पानभोजनादिषु, स्वर्णरजतादि-पात्रव्यवहारं सौधवासं कोमलशयनीयं श्मश्रुकर्म्म रणादियात्रासु वाद्यभाण्डानां पुरोयायित्वञ्चाकुलक्रमं प्रतिषिध्य तृणपर्णादिगृहवासी तृणपर्णादिपात्रभोजी धृतव्रतस्तस्थौ। अथ कदाचित्, जवनैः संसर्ग-परिवृंहिततेजा बहुदेशविजयी मानसिंहः स्वयं स्वीकृतातिथ्यः सहपानभोजनादिना तं दूषयितुं तदानीन्तनतदास्पदं "कमलमीर" नामकं पुरमुपजगाम। स तु प्रतापसिंहः स्वयमागतमतिथिमाद्रियमाणोऽपि तं सहपानभोजनाभ्यामुपस्थातुं नैच्छत्। एवं गते त्यक्तातिथ्यादरो मानसिंहो दृढबद्धवैरः प्रतापसिंहं तर्ज्जयन् स्वधर्म्मपरायणेन तेन च तेजस्विना सावज्ञं प्रत्युक्तो निर्ज्जगाम। तदनुरुद्धेनाकब्बरसाहेनास्कन्दितः सुगृहीतनामा प्रतापसिंहः पञ्च-विंशतिं वत्सरान् युयुधे। तदानीञ्च कदाचिद् विनिहत-बहुशत-जवन-योधः क्षतपरीताङ्गो विह्वलः कदाचिद्वा हृतसकलजनपदः प्रजामात्राव-लम्बो गिरिदरीकाननकान्तारमाश्रयन् छन्नाकारस्तस्थौ। स हि दरीगर्भमन्तःपुरमिति प्रांशुवनस्पतिस्कन्धनिखातकीलविलम्बिकरण्ड-मध्यं शिशुशयनमिति तृणबीजशस्यमन्नमात्रेति परित्यक्तजनपदा वनचरीभूता निरन्नाः प्रजा मित्राणीति शस्त्रलक्ष्यीभूताः प्रमत्ता जवन-योधाश्चेत्यवसरापेक्षी कालमनैषीत्। अन्तरान्तरा च क्षुधायामन्नं तृषायामम्भः शीते वस्त्रमातपे व्यजनं वर्षासु निकेतनञ्च न केवलं तेन असूर्य्यम्पश्यरूपया तन्महिष्या शिशुभिरपि दुरवापमासीत्। तथापि

नायमात्ममानं लघूकृत्यानन्यसुलभमयाचितोपनतमपि जवनप्रसादं लब्धुमैच्छत्। अथासौ कुलक्रमागतमन्त्रिप्रदत्तधनराशिव्ययेन शनैरुपचितबलः पूर्व्वोपचितं सावान्तरविषयं चितोरमन्तरेण वैरिविनिर्ज्जितान् प्रायेण सर्व्वान् प्रदेशानरिकवलात् पुनरुज्जहार। एवमतिदृढ़ालम्बितस्वधर्म्माणं विजयमानमपरिहीनमानं तेजस्विनं प्रधानममुमवलोक्य हीयमानोऽपि मनस्वी तावदाकब्बरसाहस्तद्गुणमुद्घोषयन् युद्धविरतिमादिदेश। मानिनामग्रेसरो महात्मा प्रतापसिंहस्तु पुनरिममेव शत्रोरनुग्रहं मत्वा विलोक्य च स्वबलानामवसादं यावदवसरप्रतीक्षोऽभूत् तावत् कृतान्तदुर्व्विलसितं सर्व्वमन्यथाकार्षीत्; तथा हि शमनसहोदरः शार्दूलराजः कदाचिदागत्य कतिचन ग्रामान् निर्म्मानुषानिव कर्त्तुमध्यवसितः, दुरारोहगिरिदरी चास्य सुप्तिस्थानमासीत्। वारं वारं दन्धोऽसावित्युपश्रुत्य प्रजारक्षार्थं स्वयमेव महाराणाप्रतापसिंहो गिरिगात्रतिर्य्यक्प्ररूढ़महावनस्पतिनिबद्धरज्जुप्रान्तदृढ़बद्धपीवरोदरो विटपस्थापिताभुग्नकन्धरोऽव्यर्थभल्लाघातेन सुप्तिस्थानस्थितं शार्दूलराजं न्यवधीत्। बन्धनविपर्य्यस्तनाड़ीरुजा च कियद्भिरेवाहोभिश्चितोरोद्धारनिराशो हाहा चितोरेति विलपन्नपूर्णमनोरथस्तदभिमुख-निबद्धदृष्टिर्जीवितममुञ्चत्। विकानीरराजभ्राता कवीन्द्रपृथ्वीराजेनान्यैश्च कविभिरुपनिबद्धास्तदीयकीर्त्तिगाथाः प्रवीणचारणमुखोद्गीताः सर्व्वानेव श्रोतॄनद्यापि विस्मयप्रीतिगौरवविमुग्धान् कुर्व्वन्ति।

तत्सूनुरमरसिंहः पितृसिंहासनमवाप्य पेशला (पेछला) ह्रदतीरे राजपर्णशालामपाकृत्य सौधावलिं निर्म्ममे, ताञ्चाधिवसन् व्यसनाभिभूतो बभूव, ततश्चाकब्बरसाहमरणोत्तरं नवदिल्लीश्वरेण जाहाङ्गिरेण मेवाराधिकाराय महती वाहिनी प्रहिता। तदानीमप्यनपगतव्यसनासक्तिरसौ शालुम्ब्रापतिकृष्णप्रभृतिभिः सामन्तैः परिबोधितो भर्त्सितो बलेन राजासनादवतार्य्य च समराय हयमारोपितस्तथा कुलानु-

रूपमाचरितुं प्रवृत्तः, यथा सप्तदशकृत्वो दिल्लीश्वरं पराजयमानो निखिलं मेवारमण्डलं प्रपितामह इवाप्रतिहतशासनः कतिचिद् वत्सरान् शशास। तदन्तर एव तत्पितृव्येण राजपदे जवनेश्वराभिषिक्तेन सागरजीतिप्रसिद्धनाम्ना सागरसिंहेन समर्पितं तस्मै चितोरनगरम्। चूंड़ावदिति प्रसिद्धान् चूंड़ेति देशप्रथितस्य चण्डस्य कुलजान् प्रति शक्तावदिति प्रसिद्धानां शक्तवंशीयानामीर्ष्यासम्भूतगृहविवादप्रशमनाय तत्कृतोपायप्रयोग-फलभूतश्चान्तलादुर्गाधिकारः। इत्येष स्वाधीनशिशोदकुलस्य संक्षिप्तवृत्तान्तः। किञ्च—जाहाङ्गिराधिकारकाले मानसिंहस्य मानहानिः, अम्बरनगरे प्रत्यागमनञ्चेति ऐतिहासिकं वार्त्तान्तरम्।

अत्र नायकीकृतस्यामरसिंहस्य चरितोत्कर्षसम्पादनाय "अन्यथा वा प्रकल्पयेत्" इत्यालङ्कारिकनिदेशमङ्गीकृत्य तस्य व्यसनादिकं कृत्रिमं प्रयोगविशेषविजृम्भितमिति नाटकेऽस्मिन्नुपवर्णितम्, स्त्रीपात्राणि च कल्पितानि, अन्यानि च कानिचिदप्रधानभूतानि। यथा शाकुन्तले रक्षिपुरुषादिपात्राणि। महाराणामरसिंहचरित्रं च नाटकस्यास्य कथा वस्तु।

तदपेक्षितस्तूच्यते चण्डशक्तयोः परिचयस्तत्र चूंड़ेति तद्देशप्रसिद्धश्चण्डो नाम महाराणा-कुम्भजनकमुकुलस्य ज्यायान्। स हि राठोरराजदुहितुर्व्वरार्थमुपगते दूते "न खलु वृद्धा वयं क्वापि वरणीया भवितुमर्हामः" इति पितुः परिहासवचनविन्यासमन्यथा समुपलभ्य तां कन्यामारोपितमातृभावतया स्वाविवाह्यां मेने। ततो बहुशः प्रतिबोधयन्नपि पिता न शशाक यदा तं चालयितुं न च गृहीतोपायनो दूतं प्रत्याख्यातुं तदा क्रुद्धः स्वयमेव विवोढुमङ्गीचकार कथयामास च चण्डं योऽस्यामुत्पत्स्यते पुत्रो राज्यं सोऽधिकरिष्यतीति। स च प्रसन्नमुखो बाढ़मित्युवाच। अथ वृद्धराजपरिणीतायां राठोरराजदुहितरि मुकुलो जज्ञे, ततः कियता कालेन पितरि देवभूयमापन्ने गुणविक्रमानुगतनिखिल-सामन्त-पौर-जानपद-प्रार्थिताभिषेकोऽपि तमनङ्गीकुर्व्वन् दृढ़-

व्रतश्चण्डः पञ्चवर्षदेशीयमनुजं मुकुलं पित्र्यराज्येऽभ्यषिञ्चत् । स्वयञ्च तद्रक्षको बभूव । तमेवं स्थितमपि सुविश्वस्तमविश्वसती पितृकुलोपजप्ता विमाता राजधान्या दूरमधिवस्तुमादिदेश । तदाज्ञां पुरस्कृत्य तथानुतिष्ठति चण्डे विमातृपित्रादीनां मेवारराज्याधिकारप्रयत्नस्तथा प्रवृद्धो येन स्वपुत्रस्य जीवितसंशयमाकलय्य निजदोषमनुशोचन्ती विमाता पुनस्तमेव चण्डं दूतद्वारा शरणमापेदे । तेनापि विमातृवचनावस्थितेन त्वरितमागम्य मृत्युमुखाद्रक्षितो वैमात्रेयः । ततः प्रभृति विमातुरादेशेन प्रधानसामन्तपदमङ्गीकुर्व्वंस्तत्रैव स स्थितः । राजप्रमाणपत्रेषु प्राक् तस्य भल्लचिह्नं तदधश्च राजनामलिपिरितीदं कुलक्रमागतं गौरवं राज्ञा मुकुलेन प्राप्तवयसा तस्य प्रतिपादितमिति ।

[illegible] शक्तसिंहेति प्रथितः प्रतापसिंहदेवस्यानुजन्मा । स हि राज्यार्थं ज्यायसा विवदमानोऽलब्धमनोरथश्च दिल्लीश्वरं शरणमुपगतः । अथ दिल्लीश्वरेण सार्द्धं प्रतापसिंहदेवस्य महासमरारम्भे दिल्लीश्वरसेनाधिष्ठितः शक्तसिंहो भ्रातुरसामान्यरणनैपुण्यं स्वदेशस्वधर्म्मरक्षार्थमात्मोत्सर्गञ्चावलोक्य जातानुशयः समयापेक्षी तस्थौ । यावदतिसमरपरिश्रान्तं नालिकास्त्रविद्धाङ्गमवसन्नमेकाकिनमश्वारूढमरण्याय प्रतिष्ठमानमुपांशु हन्तुमनुसरन्तौ जवनाववलोक्य पृष्ठतोऽनुगच्छंस्तावेव जघान पपात च कृतपूर्व्वापराधश्चरणयोरग्रजातस्य । इत्थं पुनरुपचितप्रेम्णोः सहोदरयोरनुजन्मा परित्यजन् दिल्लीश्वरबहुमानमग्रजन्मा चानन्दाश्रुसन्तानं निर्व्वृतिमापन्नौ । शक्तसिंहात्मजेषु ज्येष्ठो भगसिंहः, यो हि भगजीतीतिहासपरैराख्यायते ।

इति द्वारीभूतामिमां भूमिकामनुप्रविशन्तो नाटकाभ्यन्तरमवलोकयन्तु श्रीमन्तः । क्षणमपेक्षन्तान्तु चितोर-मेवार-जवनशब्दपरीक्षणाय ; तत्र प्रसिद्ध्यनुसारेण चितोर-मेवार-शब्दावेव गृहीतावस्माभिः ननु चित्रकूटमेदपाटशब्दौ, चित्रकूटशब्दस्यान्यत्र रूढत्वात् मेदपाटशब्दस्य कल्पितत्वाच्च । न च नाम्नो व्युत्पन्नत्वनियमः, डित्थडवित्थादौ व्यभि-

चारात्। किञ्चानयोः शब्दयोरस्त्यपि काचिद् व्युत्पत्तिः, तत्राद्यस्य—चितं व्यूढम् उरो येषां ते चितोरसः वीराः तान् करोति इति णिचि ततोऽच् प्रत्ययेन वीरसूरित्यर्थकत्वसम्भवात्। द्वितीयस्य तु—सेवार्थक-मेव-धातोरङि मेवा सेवा ताम् आराति आदत्ते इति मेवारः, यो हि देशः सेव्यते भृत्यवदन्यैः, न त्वन्यदेशवासिनां सेवकः अथवा राज-स्थानमध्ये सुखार्थिभिर्यो देशः सेव्यते स मेवारः सुखसेव्यो देश इत्यर्थ-कत्वसम्भवात्। तृतीयस्य परीक्षा यथा,—द्वौ खलु शब्दौ जवनो यवन-श्चेति। जवनश्चवर्गतृतीयादिरिति स्मार्त्ताः। ये तावज्जवनदेश-वासिनः क्षत्रियाः भगीरथवृद्धप्रपितामहेन सगरेण हन्यमाना भगवता वशिष्ठेन च धर्म्महरणविनिमयेन रक्षितप्राणास्त एव स्मार्त्तोक्ता जवनाः, ये चाक्षत्रिया गोयोनिदेशोद्भवा मिश्राः सङ्कीर्णा वा ते षड्विंशत्य[illegible]नादि-यवनशब्दवाच्या भवन्ति। एवं द्वैधे जवनदेशोद्भवा क्षत्रिया एव त्यक्तवैदिकधर्म्माणः परस्ताद्भारतं व्यजैषतेति निर्णयवद्भिश्चवर्गतृती-यादिराहतोऽस्माभिर्जवनशब्दः। अन्येषाञ्चापभ्रंशरूपेणाव्युत्पन्नतया च प्रतीयमानानां नाटकोल्लिखितपात्रनगरादिनाम्नां शाब्दिकी साधुता विद्वद्भिरूहनीयेति* शुभमस्तु।

नाटकरचयितुरयमुपन्यासः।

---

* जहाँगीर इति ऊर्दू भाषाप्रचलितनाम्नो वङ्गानुभाषणं जाहाङ्गीर इति तदेव जाहाङ्गिर इति रूपेण भूमिकायां नाटके च लिखितम्। आकब्बरवाबरशब्दयो-र्वंकाररूपं च टीकादर्शनेन निर्णेयम्। इति टीकाकारः।

# अमरमङ्गलम् ।

॥ नान्दी ॥

नाना-रूप-धरामरैक-शुभदा रक्ता विशुद्धात्मनां
मान्यामानपरापरा त्रिजगतो धात्रीं स्वकीयैर्गुणैः ।
दृप्यद्वैरिशिरोहराभयकरा स्मेराचितोरस्थितिः
श्यामा भीमगतिर्व्वरायुधवती देवी शिवायास्तु वः ॥ (१)

---

टीकाकृतो मङ्गलाचरणम्

मूर्द्धनि जीवनधारां दधदाननपङ्कजे च पञ्चत्वम् ।
मदनारिरर्द्धनारी-युतो जयति सद्गतिः स्थाणुः ॥

साक्षाद् वाक्पतिमक्षपादमथवा व्याचक्षते यं बुधा-
स्तं नत्वा किल तातपादमखिलज्ञानैकमूर्त्तिं गुरुम् ॥
टीकां तत्कृतिनाटकस्य कृतिनां प्रीत्यै तनोत्यङ्गिरो-
मूलाङ्गोऽमरमङ्गलस्य विमलां श्रीजीवशर्म्मा श्रिया ॥

सत्स्वपि बहुषु प्राचीनकविनिबद्धेषु रूपकेषु नवीननाटकनिर्म्माणाय योऽयं समुद्योगस्तन्निदानं कविर्नान्दीमयमङ्गलमुखेन विवक्षति—नानारूपधरेत्यादिश्लोकद्वयेन । प्रथमे तावत् श्यामादेवीं मेवारभूमिञ्च द्वितीये च श्लोके गीर्व्वाणवाणीं परमदेवतास्वरूपजन्मभूमिञ्च कविः स्मरति । देवतानामुपासनमिव परमदेवतात्मजन्मभूमेः स्वातन्त्र्यरक्षणादि-लक्षणमङ्गलसाधनमभ्युपासनविशेष एवेति नाटकस्यास्य प्रतिपाद्यो विषयः । स च नाटकान्तरेषु दुर्लभ एवेति सप्रयोजनोऽयं नवारम्भः । तथा च

काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये ।
सद्यः परनिर्व्वृतये कान्तासम्मिततयोपदेशयुजे ॥

इत्युक्तेषु काव्यरचनप्रयोजनेषु शिवेतरक्षतेरपि जागरूकत्वेन परमपूजनीयाया जन्मभूमेर्म्महिमकीर्त्तनद्वारा देशवासिनामवासादादिरूपबहुलामङ्गलपरिहारोऽत्रासाधारणं प्रयोजनम्। जन्मभूमेश्च भगवदभिन्नत्वेनालम्बनं श्रीमद्गीतायामुपलभ्यते, 'गतिर्भर्त्ता प्रभुः साक्षी निवासः शरणं सुहृत्' इति निवासपदश्रवणात्।

'नेयं स्वर्णपुरी लङ्का रोचते मम लक्ष्मण।
जननी जन्मभूमिश्च स्वर्गादपि गरीयसी'॥ इति

श्रीरामायणोक्त्या च तस्याः परमपूज्यत्वं व्यवस्थापितम्।

नानारूपेत्यादिः श्लोकद्वयी अष्टपदा नान्दी प्रतिश्लोकं पादचतुष्टयवत्त्वेन द्वयोः पादाष्टकवत्त्वात्। 'श्लोकपादं पदं केचित् सुप्तिङन्तमथापरे' इत्युक्तेः। नान्दीलक्षणं तु—

आशीर्व्वचनसंयुक्ता स्तुतिर्यस्मात् प्रयुज्यते।
देवद्विजनृपादीनां तस्मान्नान्दीति संज्ञिता॥
माङ्गल्यशङ्खचन्द्राब्जकोककैरवशंसिनी।
पदैर्युक्ता द्वादशभिरष्टाभिर्वा पदैरुत॥

इति तु प्राचां मतम्। तथाच दर्पणकारः—"एतन्नान्दीति कस्यचिन्मतानुसारेणोक्तम्। वस्तुतस्तु 'पूर्व्वरङ्गस्य रङ्गद्वाराभिधानमङ्गम्' इत्युच्यते। उक्तप्रकारायाश्च नान्द्या रङ्गद्वारात् प्रथमं नटैरेव कर्त्तव्यतया न महर्षिणा निर्द्देशः कृतः।......उक्तञ्च, रङ्गद्वारमारभ्य कविः कुर्य्यादित्यादि।...यच्च पश्चात् नान्द्यन्ते सूत्रधार इति लिखनं तस्यायमभिप्रायः–'नान्द्यन्ते सूत्रधार इदं प्रयोजितवान् इतः प्रभृति मया नाटकमुपादीयत' इति कवेरभिप्रायः सूचितः इति"। अत्राद्यं नान्दीपदं तदा नटकर्त्तव्यसूचनाय।

(१) नानारूपेत्यादि प्रथमपद्यस्यार्थत्रयम्। तच्च महाशक्तिपक्षे, मेवारभूमिपक्षे, नाटकार्थसूचनपक्षे च (क) (ख) (ग) चिह्नैः क्रमशो विव्रियते।

(क) अन्वयः। नानारूपधरा अमरैकशुभदा रक्ता अ-परा स्वकीयैः गुणैः त्रिजगतो धात्री दृप्यद्वैरिशिरोहरा अभयकरा वरायुधवती चितोरस्थितिः भीमगतिः स्मेरा विशुद्धात्मनां मान्या अमानपरा श्यामा देवी वः शिवाय अस्तु।

(क) व्याख्या। नानारूपधरा = अनेकवर्णा, अनेकमूर्त्तिधारिणी च नानारूपधारणं विवृणोति—अमरैकशुभदेत्यादिना। 'अमरैकशुभदा' 'रक्ता' 'अपरा' इति

विशेषणत्रयस्य विशेष्यं धात्रीति। विशेषणत्रयवती त्रिजगतो धात्री च देवीत्यस्य विशेषणम्। एतेन जगद्धात्रीरूपं सूचितम्; तद्विवरणं कात्यायनीतन्त्रे ७८ पटले यथा,—

पुरा पुरन्दरमुखाः स्वेश्वरत्वाभिमानिनः।
प्राहुः किमीश्वरोऽस्त्यस्मदतिरिक्तः सुरानिति॥
अथ दुर्गा जगन्माता नित्या चैतन्यरूपिणी।
एतेषां धर्म्मसेतूनामिन्द्रादीनां नियन्त्रणम्॥
करिष्यामीति निश्चित्य ज्योतीरूपं दधत्यलम्।
तेषामाविरभूद्दुर्गा जगद्धात्री जगन्मयी॥ इत्यादिना

\+ + +

इयमेवेश्वरी नूनं स्तोष्यामो नेश्वरा वयम्।
इति निश्चित्य सुखिनस्तुष्टुवुः परमेश्वरीम्॥

\+ + +

इत्युक्तानां सुबुद्धीनामाविरासीच्छिवाम्बरे।
चतुर्भुजा महादेवी रक्ताम्बरधरा शुभा॥
बालार्कसदृशीदेहा नागयज्ञोपवीतिनी॥

इत्यन्तेन।

अथवा,—नाना त्रीणि रूपाणि यत्र तत् पञ्चीकृतं तेजः इत्यर्थः तस्य धरा, मतान्तरे तद्धरति दधाति या सा नानारूपधरा, अनेकवर्णाश्रयस्थूलतेजोधारिणीत्यर्थः। देवीमूर्त्तीनां तैजसत्वेऽपि रूपभेदः पञ्चीकरणात् तेजसः, पञ्चीकरणञ्च आकाशवायुजलपृथिवीरूपभूतचतुष्टयांशसम्मेलनेन तेजसः स्थूलत्वसम्पादनम्। तस्मिन् स्थूले तेजसि स्वीयं रक्तं रूपं जलस्य शुक्लरूपं पृथिव्याः कृष्णरूपञ्चेति रूपत्रयं वर्त्तते। देव्या इच्छाविशेषेण तस्मिन् तत्त्रयान्यतमस्य मिश्रस्य वा बहिःस्फुरणमिति बोध्यम्। तेजसो रक्तरूपं तु 'यदग्ने रोहितं रूपम्' इति श्रुत्यनुसारात्। 'लोहितशुक्लकृष्णाम्' इति श्रुतौ प्रथमं रक्तस्य अन्ते कृष्णस्य च निर्देशात् सन्दंशन्यायेन मध्यवर्त्तिनः शुक्लस्य ग्रहणमिति बोधयितुं प्रथमं रक्तेति अन्ते श्यामेति चास्मिन् पद्ये कीर्त्तितम्॥

अमरैकशुभदा=अमराणाम् इन्द्रादिदेवानाम् एकं मुख्यं शुभं श्रेयः ददाति या सा।

ऐश्वरस्वरूपसाक्षात्कारात् परं शुभं नास्तीति तदेव मुख्यं शुभम्, इन्द्रादीनां तत्सम्पादनेन सा अमरैकशुभदा। अनेन पूर्व्वोक्तजगद्धात्री-मूर्त्तेः परामर्शः। रक्ता = रक्तवर्णा, अपरा = अनन्या सती, स्वकीयैः = स्वाश्रितैः स्वोपाधिभूतैरित्यर्थः गुणैः = सत्त्वरजस्तमोभिः, मायावादिमते मायास्वरूपमेवेदं गुणत्रयम्, सांख्यमते प्रकृतिस्वरूपमिदं गुणत्रयम्। त्रिजगतः = त्रिभुवनस्य, धात्री = माता; अपरा अनन्या, त्रिजगतो धात्रीति जगद्धात्री जगन्मयीति तन्त्रोक्तपदयोरर्थः। त्रिजगदभिन्ना त्रिजगतो माता इति पर्य्यवसितार्थः। रूपान्तरमाह—दृप्यद्वैरिशिरोहरेत्यादिना—दृप्यद्-वैरिशिरोहरा = दृप्यतां वैरिणाम् असुराणां शिरांसि हरति छिनत्ति स्वीकरोति च सा सदर्पासुरमुण्डहारिणी। अभयकरा = अभयं अभयमुद्रा करे यस्याः सा। वरायुधवती = वरो वरमुद्रा आयुधं खड्गश्च वरायुधे ते विद्येते यस्याः सा, वरमुद्रा-खड्गधारिणी। चितोरस्थितिः = चितोरसि चितावक्षसि स्थि[illegible]चितामध्यस्थितेत्यर्थः। प्रकटितचितायां हरवधूम् प्रविष्टामिति कर्पूरादिस्तोत्रवचनात्। भीमगतिः = भीमः शिवः तस्मिन् गतिः प्राप्तिः पादचारो वा यस्याः सा, शिवारूढा। स्मेरा स्मितविकसितमुखी, स्मेराननसरोरुहामिति ध्यानोक्तेः। विशुद्धात्मनां = शुद्धचित्तानाम्, मान्या = मननीया, मन् धातोर्ण्यति रूपम्। अमानपरा = सदृशरहिता, श्रेष्ठरहिता च। मीयते अनेनेति मानः सदृशः, परः श्रेष्ठः, न विद्येते मानपरौ यस्याः सा। 'न तत्समश्चाभ्यधिकश्च दृश्यते' इति श्रुतेः। श्यामा = कृष्णवर्णतया तन्नाम्ना प्रसिद्धा। देवी = द्योतमाना; स्वप्रकाशमहाशक्तिरित्यर्थः। वः = युष्माकम्। शिवाय = मङ्गलाय, अस्तु = भूयात्। या खलु महाशक्तिर्जगद्धात्रीरूपेण श्यामारूपेण चाविर्भवति सा युष्माकं कल्याणकरी भूयादिति तात्पर्य्यम्।

व्याकरणविचारः। नानारूपधरा = नाना रूपाणि इति सुप्सुपासमासः। पचादेराकृतिगणत्वाद् धर इति धृधातोरचि सिद्धम्। स्त्रीत्वादाप्। 'नानारूपधरे देवि' इति प्राचीनप्रयोगः, 'नानारूपवती मता' इति च भाषापरिच्छेदे प्रयोगो दृश्यते, 'नानादेशजनोपज्ञा' इति नैषधेऽपि। तेषां धरा इति पश्चात् समासः, अन्यथा कर्म्मण्यण् इत्यनेनाचो बाधः स्यात्, गङ्गाधर-भूधरादिशब्दसाधुत्वमनेन

प्रकारेण सिद्धान्तकौमुद्यां सम्पादितम्। सुपद्मव्याकरणे च प्रायोऽण् विषये चेति वार्त्तिकसूत्रं विधाय नानारूपाणि धरतीति कर्म्मोपपदाद् धृधातोरच् प्रत्ययः सम्पादितः। तस्मात् कर्म्मोपपद-विशेषाद् धृधातोरच् प्रत्यय एव नत्वण्। अन्यथा गङ्गां धरतीत्यादिवाक्याद् गङ्गाधार भूधार-इत्यादिकमपि स्यादिति सुपद्म-कृतामाशयः। नानारूपेति बहुव्रीहिपक्षस्तु पूर्व्वमुक्तः। विशुद्धात्मनामिति कृत्यप्रत्यययोगात् कर्त्तरि वैकल्पिकी षष्ठी। कृत्यप्रत्ययश्च मान्येत्यत्र ण्यत्। 'ऋहलोर्ण्यत्' इति ३।१।१।२४ पाणिनिसूत्रात्।

त्रयाणां जगतां (भूर्भुवः स्वर्लोकानाम्) समाहारः इति त्रिजगत् द्विगुसमासः। दृप्यद्वैरि-शिरोहरा = 'हरतेरनुद्यमनेऽच्' इति ३।२।९ पाणिनिसूत्रात् अण् प्रत्ययं वाधित्वा कर्म्मोपपदात् हृञ् धातोरच्।

चितोरा[illegible]र्रोरः इति विसर्गस्य लोपः 'खर्परे शरि वा विसर्गलोपो वक्तव्यः' इति वार्त्तिकविधानात्।

अलङ्कारविचारः। आद्ये एकस्य रेफस्यासकृत् साम्यात्, श्यामा भीमे-त्यत्रैकस्य मकारस्य सकृत्साम्याच्च वृत्त्यनुप्रासः। परापरेत्यत्र यमकम् एकस्थानो-च्चार्य्यमाणव्यञ्जनावृत्त्या त्रिजगतो धात्री स्वकीयैरित्यादौ श्रुत्यनुप्रासः पद्येऽत्र श्लेषालङ्कारश्च। स च व्यक्तीभविष्यति। शार्दूलविक्रीड़ितं नाम वृत्तम्।

(ख) अन्वयः। नानारूप-धरामरैकशुभदा आरक्ता स्वकीयैः गुणैः त्रिजगतो विशुद्धात्मनां मान्या मानपरा दृप्यद्वैरिशिरोहरा अभयकरा स्मेरा भीमगतिः वरायुधवती श्यामा देवी आचितोरस्थितिः परा धात्री वः शिवाय अस्तु।

(ख) व्याख्या। नानारूपाः बहुविधाः, नाना बहूनि रूपाणि सारस्वतादयोऽ-वान्तरभेदा; येषां ते सारस्वतकान्यकुब्जादिभेदेन पञ्चाशीतिप्रकाराः धरामराः ब्राह्मणाः, तेषाम् एकं मुख्यं शुभम् = जवनेभ्यो निःशङ्कत्वरूपम् अथवा वृत्तिस्वरूपं तद् ददातीति। जवनोपद्रुता ब्राह्मणा मेवारभूमिमाश्रयन् तद्वंश्या इदानीमपि तत्र निवसन्ति भुञ्जते च राजप्रदत्तवृत्तिम्। आरक्ता = आ समन्तात् रक्तं शोणितं यस्याः, वीररुधिररञ्जिता, मेवारवासिनां हृदयशोणितेन रञ्जिता, अभियातृशत्रूणां रक्तेन चार्द्रभूतेयमित्यारक्ता। स्वकीयैः गुणैः त्रिजगतो विशुद्धात्मनां मान्या। स्वकीयैः

गुणैः स्वाभिजातसम्बन्धिभिः शौर्य्यादिभिः, एतेन मान्यताहेतुरुक्तः। त्रिजगतः = त्रैलोक्यसम्बन्धिनाम्, विशुद्धात्मनां = विशुद्धः द्वेषादिदोषशून्यः गुणग्रहणतत्परश्च आत्मा चित्तं येषां ते विशुद्धात्मानः तेषां मान्या माननीया। यद्वा विशुद्धात्मनाम् आरक्ता आ—सम्यग् रक्तं रागो यस्यां सा सम्यग् रागपात्रभूता सती मान्या, विशुद्धात्मानो हि मेवारभूमिमनुरागेण मानयन्ति, मानपरा = सम्मानेन देशान्तरापेक्षया, चित्तसमुन्नत्या वा श्रेष्ठा। अत्र हेतुः, दृप्यद्वैरिशिरोहरेत्यादिविशेषणेन बोध्यः। दृप्यन्तो ये वैरिणः मेवारशत्रवः तेषां शिरोहरा शिरांसि हरति आत्मसात्करोति या सा छिन्नशत्रुमुण्डनिचिता। अभयकरा = अभयस्य जवनोपद्रवभयध्वंसस्य करा कर्त्री। अथवा अभयः परकर्तृकहरणशङ्कारहितः करः राजस्वं यस्याः। स्मेरा = बहुविधपुष्पविकाशमयी, स्वाभिजातानां सुखसम्पदा स्मितमुखीवेत्युत्प्रेक्षितम्। यद्वा महाराणाहामिरेण महाराणाकुम्भेन च जवनविनिग्रहात् स्मेरा स्मेरवदाचरतीति क्विवन्तादच् प्रत्ययात्। भीमगतिः = भीमा शत्रूणां भयङ्करी गतिः मार्गः यात्रा वा यस्याम्। वरायुधवती = भवानी-वरस्वरूपं यदायुधं वाप्पाराव-भूपस्य तरवारिः तन्नित्यसङ्गिनी, सदा तदाश्रयभूतेत्यर्थः। भगवती भवानी वाप्पाराव-नाम्ने मेवारराजवंशस्थापकाय राज्ञे वरस्वरूपेण द्विधारतरवारिं दत्तवतीतीतिहासः, तदायुधमद्यापि मेवारभूमौ वर्त्तते। श्यामा = शस्यश्यामला, राजस्थानमध्ये अस्या एव शस्यसमृद्धिशालित्वमित्यनेन सूचितम्। देवी = देवतात्मा महीस्वरूपेण यतः स्थितासीति स्मरणात्। आचितोरस्थितिः = आचितोरं चितोरमभिव्याप्य स्थितिः संस्थानं यस्याः सा परा = प्रकृष्टा, धात्री = भूः मेवारभूरित्यर्थः आचितोरस्थितिर्वरायुधवतीति विशेषणाभ्यां मेवारमात्रलाभः। 'धात्री जनन्यामलकीवसुमत्युपमातृषु' इति मेदिनी। वः शिवाय अस्तु।

(ग) अन्वयः। नानारूपधरामरैकशुभदा विशुद्धात्मनां मान्या आयुधवती मानपरा स्वकीयैर्गुणैः त्रिजगतः परा धात्री दृप्यद्वैरिशिरोहरा अभयकरा श्यामा भीमगतिः स्मेरा चितोरस्थितिः वरा देवी वः शिवाय अस्तु।

(ग) व्याख्या। नानारूपधरा = शत्रुनिवारणार्थं छद्मवेशाङ्गीकाराद्बहुरूपधारिणी। रक्ता = अनुरागयुक्ता सती, अमरैकशुभदा = अमरस्य उदयपुरपतेः

अपि च—

मृताप्यमृतनिष्यन्दा निष्पदापि चतुष्पदा ।
अवर्णा बहुवर्णापि माता गौरस्तु वः श्रिये ॥ (२)

---

अमरसिंहस्य मुख्यशुभदा चितोराधिकारस्वरूपपरममङ्गलहेतुभूता, विशुद्धात्मनां मान्या = सर्व्वेषां सत्पुरुषाणां मान्या । आयुधवती = यथावसरं धृतास्त्रा । मान-परा = मानस्य मानसिंहनाम्नोऽम्बरपतेः परा शत्रुः । स्वकीयैर्गुणैः त्रिजगतः परा धात्री = न केवलं मेवारभूमेः किन्तु पातिव्रत्योचितैः धर्म्मैः लोकत्रयस्य धात्री । "तस्मात् साध्व्यः स्त्रियः पूज्याः सततं देववज्जनैः । तासां राज्ञा प्रसादेन धार्य्यते च जगत्त्रय[म्] ।" इति शुद्धितत्त्वधृतमत्स्यपुराणवचनात् । दृप्यद्वैरिशिरोहरा = सदर्पाणां शत्रूणां प्राणहारिणी । अभयकरा मेवारवासिनां वैरिभयनाशिनी, श्यामा =

शीतकाले भवेदुष्णा ग्रीष्मकाले च शीतला ।
पद्मगन्धि मुखं यस्याः सा श्यामा परिकीर्त्तिता ॥

इत्युक्तलक्षणोपेता—भीमगतिः=भीमः भीमानन्दः स गतिः ज्ञानदाता गुरुर्य्यस्याः । स्मेरा सती चितोरस्थितिः, तस्याश्चितोरगमनमष्टमाङ्के वर्णितम् । तत्राभिषेकाच्च स्मेरेति । वरा देवी = पट्टमहिषी । श्लेषेण काव्यार्थसूचनं नान्दी-विशेषज्ञापकम् । तथा च नाट्यदर्पणे

यस्यां वीजस्य विन्यासो ह्यभिधेयस्य वस्तुनः ।
श्लेषेण वा समासोक्त्या नान्दी पत्रावली तु सा ॥

अत्रापि श्लेषेण नाट्यबीजोपन्यासादियं पत्रावली-संज्ञिता नान्दी । (प्राचीनमतम्)

(२) मृताप्यमृतेत्यादि । माता गौः=देवभाषा, जन्मभूमिः सौरभेयी च ।

देवभाषापक्षे । मृता = बहुशास्त्रग्रन्थलोपेन भाषान्तरेण हृताधिकारतया च प्राप्तापचया, अपि अमृतनिष्यन्दा = न विद्येते मृतनिष्यन्दौ यस्याः मृतं मरणं निष्यन्दः क्षरणञ्च इति मृतेत्यनेन विरोधः; परिहारस्तु अमृतवत् निष्यन्दः निर्गलितार्थरसो यस्याः सा ।

निष्पदा = निश्चरणापि चतुष्पदा चतुश्चरणा इति विरोधः निष्पदा निष्प्रदेशा वङ्गभाषादिवत् प्रदेशविशेषनियन्त्रिता न भवति। पदशब्दस्य प्रदेशार्थकत्वात्। चतुष्पदा, नाम-धातु-प्रत्ययोपसर्गरूपचतुर्व्विधपदेषु स्थितत्वात् चतुष्पदेति परिहारः।

'बहुवर्णापि अवर्णा' वर्णहीना इति विरोधः। बहुवर्णा = पञ्चाशद्वर्णात्मिका वर्णयितुमशक्या च, देवभाषायाः प्रकर्षातिशयेन वर्णनाया असाध्यत्वादिति भावः एवञ्च विरोधपरिहारः। माता = जगत एव शब्दप्रभवत्वात्।

'अनादि-निधना नित्या वागुत्सृष्टा स्वयम्भुवा।
आदौ वेदमयी नित्या यतः सर्व्वाः प्रवृत्तयः॥'

इति स्मृतेः, सृष्टिः शब्दप्रभवेति श्रुतौ ब्रह्मसूत्रे चोपपादितम्।

इति माता गीर्देवभाषैव। अन्यासां भाषाणां जगन्मातृत्वविरहात्। वः = युष्माकम्, श्रिये सरस्वत्यै सरस्वतीं प्रीणयितुं वा त्रिवर्गलाभाय वा अस्तु भूयात्। 'लक्ष्मी-सरस्वती-धीत्रिवर्गसम्पद्विभूतिशोभासु। उपकरणवपरचनाविधासु च श्रीरिति प्रथिता'। इति व्याडिकोषात्।

भूमिपक्षे—माता भूमिः भारतभूमिः, मातृभूता भूमिर्जन्मभूमिरित्यर्थः, विरोधः पूर्व्ववत्; परिहारस्तु,—मृतापि = मृततुल्यापि, अमृतनिष्यन्दा = गङ्गादि-नदीप्रवाहवती, अमृतं न मृतं मरणविरोधी मोक्षहेतुरिति यावत् निष्यन्दः जलप्रवाहो यस्याम्। अमृताय मोक्षाय निष्यन्दो यस्यां वा अमृतमिव निष्यन्दः यस्यामिति वा सुधास्वादुजलेत्यर्थः।

निष्पदा = निर्व्यवसिता, व्यवसितम् एकाग्रबुद्धिरुद्योगश्च, तस्मात् निष्क्रान्ता। पूर्व्वम् एतद्देशप्रभवाणां यादृग् व्यवसितमासीत् तस्यापायात्। 'पदं व्यवसितत्राण-स्थानलक्ष्माङ्घ्रिवस्तुषु' इत्यमरः।

चतुष्पदा = चतुर्णाम् आश्रयमाणां पदं चिह्नं यस्यां सा।

बहुवर्णा = ब्राह्मणादिवर्णाधारभूता तथापि अवर्णा = (सम्प्रति) पराधीन-तया अयशोभागिनी।

वः श्रिये त्रिवर्गाय अस्तु, धर्म्मार्थकामप्रदा भवतु।

सौरभेयीपक्षे। मृता = मरणोन्मुखी, क्रमादपचीयमानसंख्याका। अमृत-निष्यन्दिनी = दुग्धघृतप्रसविनी।

निष्पदा = [illegible] ; चतुष्पदा = चतुश्चरणा । बहुवर्णा = [illegible]

नान्द्यन्ते सूत्रधारः (१)।

अलमति-प्रपञ्चेन। आदिष्टोऽस्मि भट्टपल्ली-समाज-मूर्द्धन्यै (२) र्वासिष्ठ-गौतम-सावर्ण-मौद्गल्यादिभिर्द्विजवरै (३) र्यदयं महासारस्वतोत्सवः केनापि नवेन प्रयोगेन (४) निर्व्वर्त्यतामिति। तत् कतमं नाम नवं प्रयोगमवलम्बिष्ये। (इति चिन्तां नाटयन् स्मृत्वा) आं

योहि कण्ठगतं हारं विस्मृत्य व्याकुलीभवन्।
इतस्ततोऽनुसन्धत्ते तदवस्थां गतोऽस्म्यहम् ॥ (५)

---

वर्णविशिष्टा, अवर्णा—वर्णयितुमशक्या, साम्प्रतं गवां क्लेशाधिक्यादिति। माता = 'गावस्त्रैलोक्यमातरः' इति स्मृतेः। गौः = सौरभेयी। श्रिये = ऐश्वर्य्याय।

अलङ्कारः—विरोधाभासः उपमा व्यञ्जना च। सौरभेयीपक्ष उपमानभूतः। तथा च—माता गौरिव मृतापि अमृतनिष्यन्दा इत्यादिविशेषणवती देवभाषा जन्मभूमिश्च वः श्रिये अस्तु इति तात्पर्य्यम्।

(१) नान्द्यन्ते सूत्रधारः = प्राचीनमते अष्टपदायाः यथोक्तप्रकारायाः नान्द्याः अन्ते अवसाने सूत्रधारो वक्ष्यमाणमाह इत्यर्थः। दर्पणकारमते तु सूत्रधारेण स्वयं निर्व्वर्त्तितायाः नान्द्याः अन्ते अवसाने पूर्व्वोक्तश्लोकद्वयीरूपं रङ्गद्वाराभिधानमङ्गं प्रयोजितवान् सूत्रधारः वक्ष्यमाण-प्रकारमाह इत्यर्थः।

(२) भट्टपल्ली = 'कलिकाता'नगर्य्या उत्तरेण क्रोशैकादशकं भागीरथीप्रवाहपूत-पश्चिम-प्रान्तो ब्राह्मणप्रधानो ग्रामः। समाज-मूर्द्धन्यैः = समाजप्रधानभूतैः।

(३) वासिष्ठगौतमेत्यादि = एते पाश्चात्त्यवैदिकाः।

(४) प्रयोगेन = नाटकेन, प्रपूर्व्वकयुज्धातोः कर्म्मविशेषः अर्थः, स चाभिनयः। प्रयुज्यतेऽसौ इति प्रयुज् + घञ्, अभिनीयमानं नाटकमित्यर्थः। घञन्तत्वात् पुंस्त्वम्।

(५) योहि कण्ठगतमित्यादि। पेटिकाया बहिष्कृत्य परिहितं हारम्

तथा हि साम्प्रतमङ्गिरसामन्यतमेन वासिष्ठीसूनुना गौतम-गोत्रेण कविकुलपूजितश्रीनन्दलालविद्यारत्नभट्टाचार्य्यात्मज-श्री-पञ्चाननतर्करत्नभट्टाचार्य्येणामरमङ्गलं (६) नाम नाटक-मभिनिर्म्माय सद्यः प्रयोक्तुमस्मभ्यमर्पितम्, तदद्य विस्मृत्य नवप्रयोगाय किमप्यनुसन्दधानो नितरां व्रीड़ितोऽस्मि। अतएव ब्रवीमि (यो हि कण्ठगतं हारमित्यादि पुनः पठति) तद्विदूषक-माहूय प्रयोगमिमं प्रवर्त्तयामः।

( नेपथ्याभिमुखमवलोक्य )

वयस्य। तपन्तक! गृहे वर्त्तसे?

( नेपथ्ये ) हूं।

(अशृण्वन्) वयस्य। तपन्तक! गृहे वर्त्तसे चेदविलम्बित-मिह सन्निधेहि।

( शक्तुपूर्णमुखः काम्बोजवेषो (७) विदूषकः प्रविश्य ) हूं।

---

अन्यमनस्कतया विस्मृत्य पुनः पेटिकादिकं योऽनुसन्धत्ते तस्यावस्थामिव अवस्थां प्राप्तोऽस्मि इति समुदितार्थः। अत्र निदर्शनालङ्कारः।

(६) अमरमङ्गलम् = अमरस्य अमरसिंहनाम्न उदयपुरपतेः मङ्गलम् युद्ध-विजयचितोराधिकाररूपं यत्र यत्प्रतिपाद्यमित्यर्थः। अथवा अमरस्य मङ्गलं तदाचष्टे इति सुवन्ताण्णिचि अच्प्रत्ययेन सिद्धम्। अमरमङ्गलमित्यस्य नाटक-विशेषणत्वात् क्लीवत्वम्। प्राचीनप्रयोगानुसरणे तु अमरस्य मङ्गलम् अमर-मङ्गलम् इति षष्ठीतत्पुरुषसमासः। तस्य च तत्प्रतिपादके नाटके अभेदोपचारः। शारीरकं भाष्यमितिवत्।

(७) काम्बोजवेषः = काम्बोजदेशोद्भवा मुण्डितशिरोमात्राः सगरराजकृतवेष-वैरूप्या जातिविशेषाः, तेषां वेष इव वेषो यस्य।

सूत्रधारः। (साशङ्कम्) तपन्तक इत्युक्ते क एष काम्बोज इव लम्बकूर्च्च कञ्चुक-दुर्लक्षावयव-सन्निवेश (८) स्तपन्तक इव भोजनैकरसो (९) मुखकुहरच्चर(१०) मन्नमनिगिरन्नेव (११) सत्वरतया हूमित्युत्तरयति ? किं नु खलु परित्यक्तकुलधर्म्मा तपन्तकहतक (१२) एवायम् ? अथवा कश्चित् काम्बोज एव शाब्दभ्रमा (१३) दत्रोपस्थितः। भवतु तत्त्वमत्राव-गच्छामि ( पुनर्नेपथ्याभिमुखमवलोक्य ) वयस्य, तपन्तक !

विदू। (मुखगर्भस्थान् निगीर्णशिष्टान् शक्तूनुद्गीर्य्य) भाव ! एसो म्हि उबट्ठिदो, तह बि जइ अक्खिहिं ण मं पेक्खसि, ता फंसेण पेक्ख।

[ भाव ! एषोऽस्मि उपस्थितः, तथापि यदि अक्षिभ्यां न मां प्रेक्षसे, तत् स्पर्शेन प्रेक्षस्व। ]

( इति स्प्रष्टुमुपसर्पति )।

---

(८) लम्बकूर्चकञ्चुक-दुर्लक्षावयवसन्निवेशः = लम्बो दीर्घः कूर्चः श्मश्रु कञ्चुकश्च स्यूतगात्रावरणभेदः ( 'जामा' 'कुर्त्ता' इति च भाषा ) ताभ्यां दुर्लक्षः अवयवसन्निवेशः अङ्गसंस्थानं यस्य, प्रत्यभिज्ञातुमशक्य इत्यर्थः।

(९) भोजनैकरसः = एकरसः अद्वितीयानुरागयुक्तः भोजने एकरसः ( सप्तमीतत्पुरुषसमासः )। (१०) मुखकुहरचरम् = मुखविवरे परावर्त्तमानम्।

(११) अनिगिरन् = गलाधोगतमकुर्व्वन्। (१२) तपन्तकहतकः = तपन्तक एव हतकः मृतकः भाग्यहीनो वा। (१३) शाब्दभ्रमात् = शब्दजनितभ्रमात्। मत्प्रयुक्तशब्दस्य तदर्थस्य वा भ्रमादित्यर्थः।

सूत्र। (अपसृत्य) हा धिक् परित्यक्त-कुलधर्म्मा तपन्तक एवासि। आः पाप! परिहरणीयस्पर्शोऽपि (१४) कथं स्पर्शेन मां दूषयितुमिच्छसि। (इत्यपसर्पति)

विदू। ही ही भाव! मा क्खु मा क्खु एदं, अपरिच्चत्तकुल-धम्मा पवित्तो ज्जेव ह्मि। जवणभएण ज्जेव गहिद-काम्बोजवेस-मेत्तो संवुत्तो।

[ही ही भाव! मा खलु मा खल्वेतत्, अपरित्यक्तकुलधर्म्मा पवित्र एवास्मि। जवनभयेन गृहीतकाम्बोजवेषमात्रः संवृत्तः।]

सूत्र। (साकूतम्) कुतस्तवेयं जवनभीतिः?

विदू। सुणादु भावो, अहं क्खु भअवदीं चिदोरेस्सरीं पेक्खिदुं चिदोरं गदो।

[शृणोतु भावः, अहं खलु भगवतीं चितोरेश्वरीं प्रेक्षितुं चितोरं गतः।]

सूत्र। युज्यत इदम्। आराध्या हि सा सर्व्वतो मेवार-वास्तव्यानाम्। ततस्ततः।

---

(१४) परिहरणीयस्पर्शः = परित्याज्य-गात्रपरामर्शः।

अकार्य्याणि च वक्ष्यामि यानि तानि निबोध मे। लोकवेदविरुद्धानि तान्ये-काग्रमनाः शृणु॥ स्वधर्म्मस्य परित्यागः परधर्म्मस्य च क्रिया इत्यादि अकार्य्य-कर्त्तॄणां (महाभारत शान्तिपर्व्वं ३४ अध्याये) प्रायश्चित्तमप्युक्तम्। अकृत-प्रायश्चित्तानां तेषां स्पर्शस्य पापजनकत्वात्।

आलापाद् गात्रसंस्पर्शात् निश्वासात् सहभोजनात्। सञ्चरन्ति हि पापानि सहशय्यासनादपि॥ इति प्रायश्चित्तविवेकधृतवचनात्।

विदू। तदो तस्सिं अ तित्थकज्जं कदुअ पड़िणिउत्तंतस्स मे अग्गदो तित्थगुरुएण अज्जभद्द-देवेण भणिदं, वच्छ ! काइं बि दिवसाइं इध ज्जेव चिट्ठ। दाणीं जवणाणं उच्छवो वट्टदि, ताणं मदुद्धतेहिं पुरसेहिं मग्गे मग्गे परिब्भमंतेहिं बलादो ज्जेव अणेकाणं दुब्बलाणं धम्मो विणासिअदि त्ति।

[ ततस्तस्मिंश्च तीर्थकार्य्यं कृत्वा प्रतिनिवर्त्तमानस्य मे अग्रतस्तीर्थ-गुरुणा आर्य्यभद्रदेवेन भणितं वत्स ! कान्यपि दिवसानि इहैव तिष्ठ। इदानीं जवनानामुत्सवो वर्त्तते, तेषां मदोद्धतैः पुरुषैः मार्गे मार्गे परिभ्रमद्भिर्दुर्व्वलादेव अनेकेषां दुर्व्वलानां धर्म्मो विनाश्यत इति। ]

सूत्र। (सखेदम्) अहो चितोरनगरमपि म्लेच्छदेशवत् प्रति-षिद्धगमनमचिरादेव भविष्यतीति मन्ये। हा शिशोद-कुल-पालिते (१५) चितोरवसुन्धरे ! ध्रियमाणे शिशोदकुले तवापीय-मवस्था ! अथवा किमस्माकमिदानीमनया चिन्तया। सखे ! ततस्ततः।

विदू। तदो तं अ सुणिअ कादरेण मए भणिदं, अज्ज बहु-कुड़ुम्बओ दरिद्दो ह्मि, ण पारेमि विलम्बिदुं। ता को एत्थ मे उवाओ त्ति, तदो अणिच्छंतेण ज्जेब तेण ईसि विहसिअ

---

(१५) शिशोदकुलपालिते = शिशोद इति वाप्पारावपूर्व्वजस्य राहुपस्य शिशोदप्रदेशजयजनितं संज्ञान्तरम्। राणेति संज्ञा शिशोदीयसंज्ञा च तस्मात् प्रवृत्ता। राणानाम्नः साधुता च—रणस्येदम् इत्यण्, राणं वैरिविजयादिकम् अयते [illegible]

अअं बेसो मे काढु' उबदिट्टो णिव्वट्टिदो बि। भणिद' अ तेण, वच्छ! अप्पमत्तो मूओो विअ जाहि, सद्दाविदो बि ण उत्तरं पड़िबज्जस्स त्ति। अहं बि तह ज्जेब कदुअ णिविग्घो दाणीं ज्जेब पच्चाअदो।

[ ततस्तच्च श्रुत्वा कातरेण मया भणितम् आर्य्य! बहुकुटुम्बको दरिद्रोऽस्मि, न पारयामि, विलम्बितु' तत् कोऽत्र मे उपाय इति, ततः अनिच्छतैव तेन ईषद्विहस्य अयं वेषो मे कर्त्तु'मुपदिष्टो निर्व्वर्त्तितोऽपि। भणितं च तेन, वत्स! अप्रमत्तो मूक इव याहि, शब्दायितोऽपि (१६) नोत्तरं प्रतिपद्यस्वेति। अहमपि तथैव कृत्वा निर्व्विघ्न इदानी-मेव प्रत्यागतः। ]

सूत्र। तत् किमिदानीमपि तेन वेषेण स्थीयते।

विदू। सुणादु मे कधासेसं भावो।

[ शृणोतु मे कथाशेषं भावः। ]

सूत्र। कथय कथय।

विदू। ( सखेदम् ) अदिमेत्त-वुभुक्खादो विह्वरिदबेसंतर-दाए अपरिग्गहिदणिजबेसो जाव पाधेअसत्तु' बही ज्जेब भक्खेमि दाव सद्दाविदो ह्मि भावेण। ता भोअण-प्पड़िवंधओो अअं बेसो दूरीहोदु ( इति कृत्रिमश्मश्रूवादिकृतं काम्बोजवेषं त्यजति )।

---

(१६) शब्दायितः = आहूतः, शब्दं करोति इति शब्दादुत्तरं क्यङ् ततो णिचि क्तः।

[ अतिमात्रबुभुक्षातः विस्मृतवेषान्तरतया अपरिगृहीतनिजवेषो यावत् पाथेयशक्तु (१७) वहिरेव भक्षयामि तावत् शब्दायितोऽस्मि भावेन । तद्भोजनप्रतिवन्धकोऽयं वेषो दूरीभवतु । ]

सूत्र । मूढ़ ! इदमप्यनुचितमाचरितम् (१८) ।

यत:—

वेदमूले कुले जातो धर्म्मार्थं जीवनं त्यजेत् ।
स्वजातियोग्यवेषोऽपि धर्म्मस्तं कथमुत्सृजेत् ॥ (१९)

यद्भवतु, न खल्वेवं पुनरपि प्रतिपद्येथाः (२०) ।

---

(१७) पाथेयशक्तुम् = पथि साधुः पाथेयः पथि भोज्य इत्यर्थः ।

(१८) इदमप्यनुचितमाचरितम् = अपिकारः अनुक्तसमुच्चयार्थः । यद्यपि मूर्ख ब्राह्मणस्य विदूषकस्य वहूनि अनुचिताचरणानि वर्त्तन्ते, प्रकृतानुपयोगेन नात्र तदुल्लेखः, तथापि तद्दृष्टान्तेनापरमनुचितं नाचरणीयमिति भावः ॥

(१९) वेदमूले कुले = वेदे वेदप्रतिपाद्यं मूलम् आदिकारणं यस्य 'ब्राह्मणोऽस्य मुखमासीत्' इत्यादि ऋङ्मन्त्रः ब्राह्मणक्षत्रियादिवंशस्यादिकारणे प्रमाणतया ज्ञेयः वेदमूलकुलं ब्राह्मणादिकुलम् ।

स्वजातियोग्यवेषोऽपि धर्म्मः =

वयसः कर्म्मणोऽर्थस्य श्रुतस्याभिजनस्य च ।
वेषवागबुद्धिसारूप्यमाचरन् विचरेदिह ॥

इति मनुस्मरणात् ( ४।१८ )

धर्म्मार्थं जीवनं त्यजेत् = न जातु कामान्न भयान्न लोभाद् धर्म्मं जह्याज्जीवितस्यापि हेतोरिति भारतसावित्रीस्मरणात् ।

अलङ्कारः—वेदमूले कुले जात इत्यादिसामान्यवचनाद् विशेषस्य 'तव प्राणोत्सर्गः कर्त्तव्य आसीत्' इत्यस्य गम्यमानत्वादप्रस्तुतप्रशंसानामालङ्कारः ।

(२०) प्रतिपद्येथाः = व्यवहर्त्ताः ।

विदू। जं भावो आणवेदि। अध कधं सद्दाविदो ह्मि भावेण।

[ यद् भाव आज्ञापयति। अथ कथं
शब्दायितोऽस्मि आर्य्येण। ]

सूत्र। सुष्ठु स्मारितं श्रीमता। त्वदीयवेषविड़म्बन-व्यासङ्गेन (२१) महानस्माभिरुत्पादितो रङ्गक्षोभः (२२) तत्त्वरितमेव सङ्गीतमारभ्याराध्यतामियं परिषत्।

विदू। भोदु एव्वं ( इति गायति )।

पुरदो दोसदि एसा फुरंत-चवला बलाहअ-स्सेणी।
रविअर-रंजिअ-सिहरा सित्ता णीला बणाली व्व॥ (ङ)

[ भवतु एवम्।

पुरतो दृश्यत एषा स्फुरच्चपला वलाहकश्रेणी।
रविकररञ्जितशिखरा सिक्ता नीला वनालीव॥ (२३) ]

---

(२१) त्वदीयवेषविड़म्बनव्यासङ्गेन = विड़म्बनम् अनुचितानुकरणम्। व्यासङ्गः = चित्तविक्षेपः। (२२) रङ्गक्षोभः = रङ्गस्थदर्शकसमूहस्य क्षोभः व्याकुलत्वाचाञ्चल्यम्।

सभापतिः सभासभ्या गायका वादका अपि।
नटी नटश्च मोदन्ते यत्रान्योन्यानुरञ्जनात्।
अतो रङ्ग इति ज्ञेयः। इति भावप्रकाशिकालक्षणम्॥

(२३) पुरत इत्यादि। स्फुरच्चपला = स्फुरन्ती प्रकाशमाना चपला विद्युत् यत्र सा। वलाहकश्रेणी = मेघमाला, रविकररञ्जितशिखरा = रविकरैः सूर्यकिरणैः रञ्जितं

सूत्र। साधु तपन्तक ! साधु ; मन्ये—

अनेन तव गानेन मुग्धो रङ्गोऽद्य सर्व्वतः ।
मेघविद्युदभावेऽपि तत्सत्यमवगच्छति ॥ (२४)

तदस्यालीकवातवर्षोद्वेग-निवृत्तये त्वद्गीतोपगूढं भूतार्थ-मावेदयामि (२५)—

इयमुदयपुरान्ते स्निग्ध-नीला वनाली
न तु जलधरमाला नापि विद्युच्चकास्ति ।
तरणि-किरण-भास्वद्धार-खड्गादिदीप्तो
नृपतिरमरसिंहः किन्त्वयं शीघ्रमेति ॥ (२६)

---

अरुणितं शिखरं अग्रं यस्याः सा । सिक्ता = आर्द्रा ; नीला = श्यामवर्णा ; वनाली = अरण्यानी ; इव पुरतो दृश्यते । अपह्नुतिरलङ्कारः । उपमाया भेदवाचकत्वेन प्रकृतवनालीनिषेधपूर्व्वकं तत्र तदन्यवलाहकश्रेणीत्वेन स्थापनम् अत्र बोध्यम् ।

(२४) अनेनेत्यादि । मेघश्च विद्युच्च मेघविद्युत् समाहारद्वन्द्वे क्लीवै-कत्वम् ॥ तत् = मेघविद्युत्, सत्यमवगच्छति = यथार्थतया जानाति । अलङ्कारः— अत्र सत्यतयावगमे मुग्धत्वं हेतुरिति काव्यलिङ्गम् ।

(२५) तदस्यालीकेत्यादि । तत् = तस्मात्, अस्य = रङ्गस्य, अलीकः = अयथार्थः यः वात-वर्षोद्वेगः = वायुवृष्टिजनितभयम्, तन्निवृत्तये = निवृत्तिः निरासः तस्यै । त्वद्गीतोपगूढम् = तव गीते प्रच्छन्नतया स्थितम् । भूतार्थम् = सत्यार्थम् । आवेदयामि = ज्ञापयामि ।

(२६) इयमुदयेत्यादि । इयं = पुरतो दृश्यमाना ; उदयपुरान्ते = उदयपुर-राजकस्य अन्ते प्रान्तभागे । स्निग्धनीला = स्निग्धा अरूक्षा न नीला श्यामवर्णा

अथ कोऽयमपरो नाम ? (निरूप्य साशङ्कम्) अहो मानसिंहप्रयुक्तप्रणिधि(२७)रयं दुर्ज्जनसिंहो झालापतेः (२८) प्रणष्टपुत्रतया ख्यापितात्मा (२९) समरसिंहनामकपटो (३०) मित्रीभूतो महाराजमनुवर्त्तते, परिहरणीयदर्शनः खल्वयं पापीयान्, तन्न युक्तमत्रावस्थानमावयोः। (इति निष्क्रान्तौ)

प्रस्तावना। (३१)

---

चेति विशेषणयोः कर्म्मधारयसमासः पाणिनिमते तु एकस्य विशेषणस्य विशेष्यत्वविवक्षया। वनाली = अरण्यानी, न तु जलधरमाला = मेघमाला ; नापि विद्युत् चकास्ति = दीप्यते, किन्तु तरणि-किरण-भास्वद्धार-खड्गादिदीप्रः = तरणेः रवेः किरणैः करैः भास्वन्ति दीप्यमानानि हारखड्गादीनि हारादिभूषणानि खड्गादिशस्त्राणि च (आदिपदात् मुकुटभल्लादीनां परिग्रहः) तै दीप्रः समुज्ज्वलः, अमरसिंहो नृपतिः शीघ्रम् एति। विद्युत्-साधर्म्म्यद्योतनाय शीघ्रमिति पदम्। अत्र निश्चयालङ्कारः। "अन्यन्निषिध्य प्रकृतस्थापनं निश्चयः पुनः" इति साहित्यदर्पणलक्षणम्।

(२७) प्रणिधिः = गुप्तचरः। (२८) झालापतेः = झालापतिः हल्दीघाटयुद्धे स्वप्राणविसर्ज्जनेन महाराणा-प्रतापसिंहस्य प्राणान् ररक्षेति ऐतिहासिकी वार्त्ता। (२९) ख्यापितात्मा दत्तपरिचयः। (३०) समरसिंहनामकपटः = समरसिंहनाम कपटो यस्य। कपटः = मिथ्याचारः।

(३१) प्रस्तावनालक्षणं यथा साहित्यदर्पणे—

नटी विदूषको वापि पारिपार्श्विक एव वा।
सूत्रधारेण सहिताः संलापं यत्र कुर्व्वते॥
चित्रैर्व्वाक्यैः स्वकार्य्योत्थैः प्रस्तुताक्षेपिभिर्म्मिथः।
आमुखं तत्तु विज्ञेयं नाम्ना प्रस्तावनापि सा॥

इदानीं पूर्व्वरङ्गस्य सम्यक् प्रयोगाभावादेक एव सूत्रधारः सर्व्वं प्रयोजयतीति स्थापकोऽपि सूत्रधार उच्यते इति च दर्पणोक्त्या शाकुन्तलादिवदत्रापि तादृशेन सूत्रधारेण सहितस्य नटाद्यन्यतमस्य संलापः। विशेषस्त्वेषः, यदत्र न नटीपारिपार्श्विकयोः संलापः किन्तु विदूषकस्य।

इयञ्च प्रस्तावना अवलगिताख्या। तल्लक्षणं यथा,—

यत्रैकत्र समावेशात् कार्य्यमन्यत् प्रसाध्यते।
प्रयोगे खलु तज्ज्ञेयं नाम्नावलगितं बुधैः॥

यतो विदूषकस्य वर्षावर्णनव्याजपद्यं श्रोतॄणां मेघविद्युदर्थबोधकं सत् उदयपुरपतेरमरसिंहस्य प्रवेशरूपस्य कार्य्यान्तरस्य साधकं भवति।

अथवा उद्घात्यकसंज्ञेयम्। तल्लक्षणं यथा,—

पदानि त्वगतार्थानि तदर्थगतये नराः।
योजयन्ति पदैरन्यैः स उद्घात्यक उच्यते॥

'पुरदो दीसदि' इत्यादि पद्यस्थ-प्रथमार्द्धपदानामर्थग्रहाभावे सूत्रधारेण "इयमुदयपुरान्ते" इत्यादिपद्यस्थपदैः प्रकृतार्थनिरूपणात्।

---

# प्रथमोऽङ्कः

ततः प्रविशति यथोक्त-परिचयेन समरसिंहेनानुगम्यमानो राजा ।

समरसिंहः । ( स्वगतम् ) न तावदस्योपांशुघातो (१) महाराजमानसिंहस्यानुमतः, तद् यथानिदेशमाचरामि । ( दीर्घं निश्वस्य ) देव ! इयमेव तावदुदयपुरराज्यस्य प्राची सीमा (२) ।

राजा । ( सखेदम् ) ननु वक्तव्यं क्षत्रियराज्यस्येति । ( दीर्घं निश्वस्य ) कष्टम् !

ससागरा धरा येषां राज्यमासप्तमान्मनोः ।
तेषामद्यतनं स्थानं भुवः क्षुद्रतरेंऽशके ॥ (३)

---

(१) उपांशुघातः = गुप्तहत्या । उपांशुपदमव्ययम् ।

(२) प्राची सीमा = पूर्व्वप्रान्तः ।

(३) ससागरेत्यादि । सप्तमात् मनोः आ वैवस्वतमनुमारभ्य ससागरा धरा येषां क्षत्रियाणां राज्यं राष्ट्रं आसीदिति शेषः भुवः क्षुद्रतरेंऽशके तेषामद्यतनं वर्त्तमानं स्थानम् अधिकार इति यावत् । अद्यशब्दात् तुट् प्रत्ययः, तुट् प्रागनादेश इति सिद्धान्तकौमुदी । अन्यमते अद्यशब्दात् तनट् प्रत्ययः । पृथिवीमण्डलस्यैकदेशो भारतवर्षं तदेकदेशो राजपुतानाख्यः प्रदेशः तस्याप्येकदेशभूता मेवारभूमिः इति क्षुद्रतरः अंशः । तन्मध्ये चितोरस्य पराधिकारात् एतदंशस्य निन्दितत्वं सूचितम् इति अंशके इति कप्रत्ययः । जवनाधिकृतभारतीयप्रदेशान्तरापेक्षया अस्य स्थानस्य क्षुद्रतरत्वम् । [illegible] ।

समरः । (आत्मगतम्) इदमपि न भविष्यति (प्रकाशम्) देव ! कृतं विषादेन, दैवं (४) खल्वत्र प्रभवति । किञ्च महाराज ! मनु (५) मान्धातृ (६) ककुत्स्थ (७) हरिश्चन्द्र-सगर-भगीरथ-रघु-रामचन्द्र-प्रमुखाणां ससागरधरामण्डलाधीश्वराणां वाप्पा (८)

---

(४) दैवं = भाग्यम् । (५) मनुः = वैवस्वतो मनुः आदिराजः ।

(६) मान्धाता = युवनाश्वस्य पुत्रः सार्व्वभौमो राजा । ककुत्स्थात् अधस्तनः षोड़शः पुरुषो युवनाश्वः अपुत्रतया निर्व्विण्णो मुनीनामाश्रमं जगाम । कृपापरवशैस्तैः पुत्रार्थमिष्टिः कृता ; राज्ञ्याः पानार्थं ततोऽभिमन्त्रितजलपूर्णकलसं वेदीमध्ये स्थापयामास । निद्रितेषु मुनिषु पिपासार्त्तो युवनाश्वः तान् अनुत्थाप्य अज्ञानतस्तदेव जलं पपौ । प्रातरुत्थाय मुनिभिः शून्यं कलसं वीक्ष्य पृष्टं केनैतज्जलं पीतमिति । इत्याकर्ण्य स राजा अजानता मया पीतमित्याह । गर्भश्च युवनाश्वोदरेऽभवत् । प्राप्तसमयश्च दक्षिणं कुक्षिं निर्भिद्य निश्चक्राम न चासौ राजा ममार जातोऽयं कं धास्यतीति ते मुनयः प्रोचुः । अथागम्य देवराड् अब्रवीत्—मामयं धास्यतीति ततो मान्धाता नामतोऽभवत् । वक्त्रे चास्य प्रदेशिनी देवराजेन न्यस्ता, तां पपौ, ताञ्चामृतप्रसविनीमासाद्य व्यवर्द्धत । ततः स मान्धाता चक्रवर्त्ती सप्तद्वीपां महीं बुभुजे इत्यभ्यर्हितत्वेन तस्य ककुत्स्थात् प्राङ् नामनिर्देशः ।

(७) ककुत्स्थः = अस्य पूर्व्वनाम परञ्जयः । इन्द्रस्य वृषभरूपधारिणः स्कन्धमारुह्य अशेषानसुरान् स निजघानेति वृषभककुदि स्थितत्वात् ककुत्स्थ इति प्रसिद्धिं लेभे (विष्णुपुराणम्) ।

(८) वाप्पादीनाम् ऐतिहासिकी वार्त्ता भूमिकातो ज्ञातव्या ।

वाप्पेति देशीयभाषानुकरणशब्दः, वत्स इति तस्य संस्कृतः प्रतिशब्द इति वदन्ति । अत्र पूर्व्वकाद् आप धातोः 'अन्येभ्योऽपि दृश्यन्ते' इति पाणिनिसूत्रानुसारेण

समर-हामिर (९) कुम्भ-संग्रामादीनां स्वाधीन-नरपतीनां वंशप्रदीपेन विशेषतो जवनवनसमूलोन्मूलनप्रभञ्जनकल्पस्य (१०) तत्रभवतः (११) सुगृहीतनामधेयस्यार्य्यकुलगौरवरवेः सिंहप्रतापस्य (१२) महाराणा (१३) प्रतापसिंहदेवस्यात्म·

---

कर्म्मणि विचि ( मतान्तरे क्विपि ) वाप्, तं वापं ( पैतृकराज्यहानावपि प्राप्तं राज्यम् ) पाति पा-धातोः क्विपि वाप्पापदनिष्पत्तिरपि सम्भवति ।

(९) हामिरः = हकारो मङ्गलवाचकः । तम् आमथितुं पीड़यितुं शील-मेषाम् इति हामिनः तेषां रः अग्निस्वरूपः । हामीर इति पदस्य निरुक्तिर्यथा हकारो मङ्गलवाचकः तम् आमथितुं पीड़यितुं शीलमेषाम् इति हामिनः तान् ईरयति कम्प-यति इति हामीरः, ईर गतौ कम्पने चेति सिद्धान्तकौमुदीधातुपाठः ।

(१०) जवनेत्यादि । जवना एव वनम् जवनवनम् । मूलेन सहेति समूलं समूलञ्च तत् उन्मूलनञ्चेति (कर्म्मधारयः) निरवशेषमुत्पाटनम्, जवनवनस्य निरवशेषमुत्पाटनम्, तत्र प्रभञ्जनकल्पस्य ( सप्तमीतत्पुरुषः ) ईषदसमाप्तः प्रभञ्जनः वायुः, ईषदसमाप्तौ कल्प्-प्रत्ययः, वायुसदृशस्य ।

(११) तत्रभवतः = पूज्यस्य । (१२) सुगृहीतनामधेयस्य—सुगृहीतं पुण्य-जनकतया उच्चारितं नामधेयं नाम यस्य, पुण्यश्लोकस्येत्यर्थः । आर्य्यकुलेति—आर्य्यं पूज्यं यत्कुलं तस्य गौरवम् । अथवा आर्य्याणां ब्राह्मणक्षत्रियवैश्यानां यत्कुलं तस्य गौरवम् महत्त्वम्, तस्य रविः सूर्य्यः प्रकाशक इत्यर्थः । रवित्वारोपाधीनः गौरवे पद्मत्वारोप आर्थः । आर्य्यकुलगौरवं सङ्कुचितमासीत् प्रतापसिंहेन तद् विस्फारित-मिति भावः । सिंहप्रतापस्य = सिंहस्य प्रताप इव प्रतापो विक्रमो यस्य स तस्य सिंहप्रतापस्य । अथच सिंहप्रतापस्य सिंहराशौ तस्य स्वक्षेत्रत्वात् सिंहे प्रतापः प्रभावः यस्य इति श्लिष्टार्थबलात् प्रतापसिंहे रवित्वारोपः सुसङ्गच्छते ।

(१३) महाराणेत्यादि । रणस्येदमिति राणं राणमयते इति राणशब्दादय-धातोः क्विपि य लोपे 'राणा' इति पदं सिध्यति महांश्चासौ राणा चेति महाराणा ।

सम्भवेन श्रीमता बहुमन्तु (१४) मशक्यमपि वयं पुनरेताव-देव बहुमन्यामहे यदिदानीमपि कुलक्रमागता राज्यश्रीरन्त-र्भारत (१५) मेकमेव महाराजमनुवर्त्तते।

तथा हि—

स्वल्पं वा सुमहद्वास्तु यत्स्वातन्त्र्येण भुज्यते।
तदेवावितथं राज्यं तदन्यत्तु विडम्बनम् ॥ (१६)

राजा। सखे! प्रत्यावृत्ते चितोराधिकारे कथञ्चिदिय-माश्वासना युज्येत, न पुनरिदानीम्; यतः—

परविक्रमविच्युताधिकारैः स्थितवद्भिर्विवरप्रलीनकल्पैः।
पशुवद्विधृता स्वतन्त्रता या परिहासास्पदमेव सा न तथ्या॥ (१७)

अपि च—

---

(१४) बहुमन्तुम् = आदर्तुम्। (१५) अन्तर्भारतम् = भारतस्यान्तः (अव्ययीभावसमासः) भारतमध्ये।

(१६) स्वल्पमित्यादि। स्वल्पं क्षुद्रं सुमहत् विस्तृतं वा अस्तु भवतु, यत् स्वातन्त्र्येण स्वाधीनतया भुज्यते परिपाल्यते तदेव अवितथं यथार्थं राज्यं राष्ट्रम्; तु किन्तु तदन्यत् तद्भिन्नं पराधीनं राज्यम् इत्यर्थः विडम्बनं राज्यशब्दानुकरण-मात्रम्, राज्याभास इत्यर्थः।

(१७) परविक्रमेत्यादि। परविक्रमविच्युताधिकारैः = परेषां शत्रूणां विक्रमेण विच्युतः स्खलितः अधिकारः स्वामित्वं येषां ते तैः विवरप्रलीनकल्पैः = विवरेषु गर्त्तेषु प्रलीनाः प्रविष्टाः तत्सदृशाः तैः जनैरिति शेषः। या स्वतन्त्रता स्वाधीनता पशुवत् पशुभिरिव विधृता रक्षिता सा परिहासास्पदमेव परिहासयोग्यैव; आस्पदशब्दस्य अजहल्लिङ्गत्वात् क्लीबत्वम्। न तथ्या न सा सत्या स्वाधीनता। उपमालङ्कारः।

चितोरस्योद्धारो न पुनरभवद्धिग् भुजबलं
प्रतिज्ञां मे धिग्धिग् धिगपि मम देहस्थितिमिति।
उवाचाश्रूद्रेक-स्खलित-वचनं यन्मम पिता
तदद्यापि भ्राम्यद्धृदय-तलमालोड़यति मे ॥ (१८)

समरः। चितोरमधिकुर्व्वता देवेन दुःखमिदमचिरेण परिहास्यते (१९)।

राजा। सखे! ज्ञातस्त्वया तावदालस्योपहतानां (२०) सामन्तानामन्तर्गतो भावः (२१)। तत् को मे चितोराधिकाराश्वासः (२२)?

---

(१८) चितोरस्येत्यादि। मम पिता, "पुनः चितोरस्य उद्धारः मोचनम् पराधिकारादिति शेषः न अभवत् इति मे भुजबलं धिक् मे प्रतिज्ञां सङ्कल्पं धिक् मम देहस्थितिं शरीरधारणम् अपि धिक्" इति एवम्प्रकारं यद् अश्रूद्रेकस्खलित-वचनम् = अश्रूणां वाष्पानां उद्रेकेण उद्गमेन स्खलितं अर्द्धरुद्धं वचनं वाक्यं उवाच तत् अद्यापि भ्राम्यद् घूर्णमानं पुनःपुनः स्मृतिपथमारूढं सत् इति भावः मे मम हृदयतलं चित्तभूमिं आलोड़यति व्याकुलं करोति। मन्थनदण्डः घूर्णमानः सन् भाण्डस्थितं स्थिरं दधि आलोड़यतीति वस्तुध्वनिः।

(१९) परिहास्यते = दूरीकरिष्यते।

(२०) आलस्योपहतानाम् = आलस्येन दूषितानां निवर्त्तितन्याय्यकर्म्मणाम् इत्यर्थः। (२१) सामन्तानां = सामन्तत्वेन प्रसिद्धाः तेषाम्, स्वविषयानन्तरा भूमिः समन्ता तस्या इमे सामन्ताः समीपवर्त्तिनो वश्या भूस्वामिनः। ते च प्रस्तुतत्वात् उदयपुरराजाधीनाः। अन्तर्गतो भावः = आशयः। (२२) चितोराधिकाराश्वासः = चितोरस्य अधिकारे आश्वासः आशाप्रदानम्।

समरसिंहः । (सोत्साहम्) देव, कृतं सामन्तसाहायकेन, (२३) पश्यतु भवानिदमुलुपभूयिष्ठं (२४) विशालमन्तरालस्थलम् (२५) । अत्र प्रच्छन्नकल्पितबलसन्निवेशै (२६) रस्माभिरल्पीयसापि (२७) मुख्याश्वीयबलेन (२८) निशान्धकारनिलीनै (२९) रतर्कितै (३०) राक्रम्याधिकार्य्यश्चितोरदुर्ग (३१) इति । तदेतत्प्रत्यक्षमुपदर्शयितुमिह रहस्यु-(३२) पानीतो देवः ।

राजा । (निश्वस्य) युज्यत इदम्, किन्तु बहूनां सामन्तानां शालुम्ब्रापतेर्वा (३३) मतमुपादाय समर-

---

(२३) सामन्तसाहायकेन = सामन्तानां साहायकं साहाय्यम् । सम्बन्धे षष्ठी । सहायस्य भावः साहायकम् सहायशब्दाद् वुञ्प्रत्ययः । 'योपधाद् गुरूपोत्तमाद् वुञ्' (५।१।१३२) इति पाणिनिसूत्रस्य वार्त्तिकं 'सहायाद्वा' इति । मतान्तरे सहायशब्दाद् अकण् प्रत्ययः । अलम् इत्यर्थकस्य 'कृतम्'पदस्य योगात्तृतीया ।

(२४) उलुपभूयिष्ठं = उलुपास्तृणविशेषाः तैः भूयिष्ठं प्रचुरोलुपमित्यर्थः । (२५) अन्तरालस्थलम् = अवकाशभूमिः । (२६) प्रच्छन्नकल्पितबलसन्निवेशैः = प्रच्छन्नं गूढं यथा स्यात्तथा कल्पितः रचितः बलसन्निवेशः सैन्यसज्जा यैः ते तैः । (२७) अल्पीयसा = अल्पतरेण । (२८) मुख्याश्वीयबलेन = मुख्यं प्रकृष्टं अश्वीयं अश्ववृन्दं यत्र तत् तादृशेन बलेन प्रकृष्टेनाश्वारोहिसैन्येन, करणे तृतीया । (२९) निशान्धकारनिलीनैः = निशायाः रात्रेः अन्धकारः तमः तत्र निलीनैः तिरोहितैः । (३०) अतर्कितैः = अचिन्तितैः, सहसेत्यर्थः । (३१) चितोरदुर्गः = चितोरमेव दुर्गः । दुःखेन गच्छत्यस्मिन् इति दुःपूर्वाद् गमधातोर्डः । (३२) रहसि = विजनप्रदेशे । (३३) शालुम्ब्रापतेः = शालुम्ब्रा मेवारान्तर्गतः प्रदेशविशेषः तस्य पतिः राजा तस्य ।

चर्य्या (३४) विधेयेति कुलरीति (३५) मनुरुन्धतां (३६) तातपादानां नियोगेन (३७) नियन्त्रितो (३८) नाहं स्वायत्तसिद्धि (३९) रस्मि ।

समरः । ( स्वगतम् ) कथमिदमस्य पितृनिदेशस्थितिनियमव्यसन (४०) मपनेष्यामि ? अथवा परस्ताद् (४१) वाराङ्गनासाहायकमास्ते (४२) । सम्प्रति पुनरेवं तावत् । ( प्रकाशम् ) देव, यद्येवं शोचनीयाः खलु वयम् । यतोऽस्य चितोरस्य—

आनन्दोल्लासलीलाकलकलमुखरा द्यां स्पृशन्ती शिरोभिः
प्रासादश्रेणिरुच्चै शुभमधिनगरं स्वर्गतेभ्यो नृपेभ्यः ।

---

(३४) समरचर्य्यां = रणकर्म्म । (३५) कुलरीतिम् = वंशप्रथाम् । (३६) अनुरुन्धताम् = अपेक्षमाणानाम् । (३७) नियोगेन = आज्ञया । (३८) नियन्त्रितः = रुद्धः । (३९) स्वायत्तसिद्धिः = स्वायत्ता स्वाधीना सिद्धिः निष्पत्तिः यस्य, स्वाधीनकर्म्मा इति भावः । (४०) पितृनिदेशस्थितिनियमव्यसनम् = पितुः निदेशः आज्ञा तत्र स्थितिरेव तत्परिपालनमेव नियमः व्रतं तदेव व्यसनं विपत् कामजदोषवद्दोषविशेषो वा, तत्, पितृनिदेशपरिपालने एकान्ताग्रहम् इति वैकल्पिकपक्षे तात्पर्य्यम्; तादृशनियमस्याभिमतकार्यरोधकत्वात् वक्तुः विपत्तया दोषविशेषतया वा बोध इति भावः ।

( ४१ ) परस्तात् = एतदुत्तरम् । परशब्दादस्तातिप्रत्ययः स्वार्थे, "विभाषा परावराभ्याम्" इति पाणिनिः । (४२) वाराङ्गनासाहायकम् = वेश्यायाः साहाय्यम् ।

**ध्वस्तस्रस्तावशिष्टा मलिनमुखरुचिः स्थावरा शोकमूर्त्तिः**
**साद्य स्तम्भोपलक्ष्या कथयति नितरामत्ययं बद्धमौना ॥ (४३)**

**कष्टं ! प्रतिरुद्धवृत्तयश्च वयमिदमवलोकयामः ।**

---

(४३) आनन्दोल्लासलीलेत्यादि । आनन्दोल्लासलीलाकलकलमुखरा = आनन्दस्य यः उल्लासः बहुलीभावः तेन या लीला क्रीडा तया यः कलकलः कोलाहलः तेन मुखरा शब्दायमाना, सा । शिरोभिः = अग्रभागैः । द्यां = नभः, अथच स्वर्गं; स्पृशन्ती = चुम्बन्ती, प्रासादश्रेणिः = हर्म्यावलिः, स्वर्गतेभ्यः नृपेभ्यः ( क्रियायोगे, तुमुगर्भे वा चतुर्थी नृपान् प्रीणयितुमित्यर्थः ) अधिनगरम् शुभम् = चितोरनगरस्थं मङ्गलम् ( अधिनगरम् सप्तम्यर्थे अव्ययीभावः ) ऊर्चे इवेति गम्योत्प्रेक्षा । द्यां स्पृशन्तीति विशेषणेन हर्म्यावलीनामौन्नत्यं स्वर्गतनृपाणां समीपगामित्वञ्च सूचितम्, ( श्लेषमूलातिशयोक्तिः ) ; कलकलमुखरेति कथनोत्प्रेक्षायाः हेतुः । चितोरस्य स्वतन्त्रतादशायां पूर्णशोभा, अद्य स्वतन्त्रता-हानिदशायां ध्वस्तस्रस्तावशिष्टा ध्वस्ता च स्रस्ता च ध्वस्तस्रस्ते तयोरवशिष्टा, प्रासादश्रेणीनां काचित् चूर्णीभूता काचिदंशतः पतिता तयोरवशिष्टा काचिद् विद्यमाना । मलिनमुखरुचिः = विगतप्रधानशोभा अथच म्लानमुखकान्तिः । स्थावरा = निश्चला, शोकमूर्त्तिः = शोकस्य मूर्त्तिरिव मूर्त्तिर्यस्याः सा । स्तम्भोपलक्ष्या = स्तम्भैः महाराणाकुम्भस्य विजयस्तम्भेन भग्नप्रासादावशिष्टैः स्तम्भैश्च उपलक्ष्या ज्ञेया अथच स्तम्भेन जाड्येन उपलक्ष्या सूचितदुःखा, बद्धमौना = आनन्दकोलाहलादिशून्या अथच निर्व्वाक्, सा = प्रासादश्रेणिः नितराम् अत्ययम् = सर्व्वनाशम्, कथयति प्रकाशयतीत्यर्थः, बद्धमौनायाः कथने विरोधः स च व्याख्यया परिहृतः । अत्र स्रग्धरावृत्तम् । कस्याश्चिद् दशाविपर्य्ययजनितदुःसहशोकार्त्तायाः स्वजनसमीपे व्यवहारसमारोपात् समासोक्ति-रलङ्कारः ।

राजा । सत्यमेतत् । जानामि च—

दण्डाकारोच्चशैले पृथुविटपदृढाबद्धरज्जूढदेह-
स्तातो भल्लेन हत्वा कटकरुहतिरश्चीनवृक्षाग्रलक्ष्यम् ।
शार्दूलं कन्दरस्थं प्रसभमवतरन्नन्त्रविस्रस्तिरुग्न-
श्चामुण्डाग्रामसंस्थो निजतनुमजहान्नैव चित्ताच्चितोरम् ॥ (४४)

---

(४४) दण्डाकारेति । दण्डाकारोच्चशैले = दण्डस्य आकार इव आकारो यस्य तादृशः उच्चशैलः आरोहणायोग्य इत्यर्थः तस्मिन् ; पृथुविटपदृढाबद्धरज्जूढ-देहः = पृथुः स्थूलः यो विटपः शाखा, यस्माद्वृक्षात् शार्दूलः लक्षितः तस्यैवेति शेषः, तत्र दृढं यथा स्यात्तथा आबद्धाः याः रज्जवः ताभिः ऊढः आलम्बितः देहः यस्य सः, । तातः = पिता; कटकरुहतिरश्चीनवृक्षाग्रलक्ष्यम् = कटकः पर्व्वतमध्यभागः ( पूर्व्वोक्तशैलस्यैवेति भावः ) तत्र रोहति इति कटकरुहः ( कटकशब्दात् रुहधातोः इगुपधत्वात् कः ) यः तिरश्चीनः वक्रः वृक्षः तस्य अग्रं शिखरं ततो लक्ष्यं; कन्दरस्थं = गुहाहितं, शार्दूलं = व्याघ्रं, प्रसभं = बलात्, भल्लेन = शस्त्रविशेषेण ( करणे तृतीया ) हत्वा अवतरन् = अवरोहन् रज्जुबन्धादित्यर्थः ; अन्त्रविस्रस्ति-रुग्नः = अन्त्रस्य उदराभ्यन्तरनाड्याः या विस्रस्तिः स्वस्थानच्युतिः तया रुग्नः पीडितः सन् । चामुण्डाग्रामसंस्थः = चामुण्डानामा उदयपुरराजधान्याः क्रोशकतिपयव्यवहितो ग्रामः । तत्र स्थितः निजतनुं = स्वदेहम् । अजहात् = तत्याज, नैव चित्ताच्चितोरम् अजहात् इत्यर्थः । अत्र विशेषोक्तिरलङ्कारः । अयं वृत्तान्तः टड्प्रणीतराजस्थाननामकेतिहासग्रन्थेऽनुल्लिखितोऽपि तत्रत्येति-हासप्रसिद्धः ।

यतः—

तदेतत् प्रासादप्रकरशिखरोद्देशनिहितां
दृढां दृष्टिं बिभ्रत् स्फुरदरुण पद्मद्युतिमुषम् ।
कदाचिद्वा म्लानां शिशिरविकलेन्दीवररुचिं
श्वसन् क्रुध्यन् मुह्यन्नभजत महास्तं किल गुरुः ॥ (४५)

समरः । (स्वगतम्) तव तु ततोऽपि विषमा परिणतिः (४६) (प्रकाशम्) अहो दारुण-स्मरण (४७) मेतत्; तदिदानीं

---

(४५) तदीयेत्यादि । गुरुः पिता श्वसन् निश्वसन् क्रुध्यन् क्रोधमाप्नुवन् तदीयप्रासादप्रकरशिखरोद्देशनिहिताम् = तदीयः चितोरसम्बन्धी यः प्रासादप्रकरः हर्म्यावलिः तस्य शिखराणि अग्रभागाः तेषाम् उद्देशे अर्थात् तद्दिशि निहितां प्रेरितां दृढाम् अनिमेषां स्फुरदरुणपद्मद्युतिमुषम् = स्फुरत् प्रफुल्लं यत् अरुणपद्मं कोकनदं तस्य द्युतिं कान्तिं मुष्णाति हरति या इति मुष्धातोः क्विप्, ताम् (अत्र निदर्शनालङ्कारः) तादृशीं दृष्टिं बिभ्रत् ददत्दित्यर्थः कदाचिद्वा श्वसन् मुह्यन् = वैचित्त्यं प्राप्नुवन् म्लानां कातरां शिशिरविकलेन्दीवररुचिम् = शिशिरेण हिमेन विकलं म्लानं यत् इन्दीवरं नीलपद्मं तस्य रुचिरिव रुचिर्यस्याः (अत्र उपमालङ्कारः) तादृशीं दृष्टिं बिभ्रत् धारयन् महास्तं मृत्युम् अभजत, किल इति प्रसिद्धौ । अत्र श्वसन् इति उभयत्रान्वितं क्रुध्यन् मुह्यन् इति क्रमेणान्वयः । अत्र यथासंख्यमप्यलङ्कारः ।

(४६) विषमा परिणतिः = अधिकतरा दुर्द्दशा इत्यर्थः ।

(४७) दारुणस्मरणम् = दारुणं क्लेशकरं स्मरणं यस्य तत् ।

लङ्घितवीरमर्य्यादानां (४८) सामन्तानामतिक्रमो (४९) यदि तातपाद-प्रियकर्म्मानुष्ठानाय क्रियते, तथापि किं पितृनियोग-लङ्घनं मन्यते देवेन ?

राजा। (निश्वस्य) सखे ! शोकभग्नहृदयेन मया तातपादानुगानां सामन्तानामेवमतिक्रममसम्भावयता (५०) यथावचनं (५१) हि वाचनिकं (५२) गृहीतम् (५३)। तस्या-न्यथाकारो (५४) न मे रोचते।

समरः। तच्चिन्तनीयमिदानीम्। (स्वगतम्) समयः स्थानञ्च यथानिरूपितं प्रतिपाल्यते, कथमद्यापि न दृश्यते वाराङ्गनायाः पदवी। (५५)

राजा। (सास्रम्)—सखे ! किं चिन्तया ?
जवनस्पर्शभीतानां सतीनां प्राण-सर्पिषा।
ज्वलन्तमिव पश्यामि कृशानुं तत्र चात्र च॥ (५६)

(इति चितोरं स्वहृदयं च तर्ज्जन्या दर्शयति)

---

(४८) लङ्घितवीरमर्य्यादानाम् = वीराणां मर्य्यादा न्याय्यपथस्थितिः, लङ्घिता अतिक्रान्ता वीरमर्य्यादा यैः ते तेषाम्। (४९) अतिक्रमः = लङ्घनम्, उपेक्षा इति यावत्। (५०) असम्भावयता = अचिन्तयता। (५१) यथावचनम् = वचनानुरूपम्।

(५२) वाचनिकम् = वचनमात्रनिर्वृत्त उपदेशः। तात्पर्यविशेषमननु-सन्धाय अक्षरार्थमनुसृत्य चेत्यर्थः। (५३) गृहीतम् = स्वीकृतम्। (५४) अन्यथा-कारः = अतिक्रमः। (५५) पदवी = मार्गः।

(५६) जवनेतादि। तत्र चितोरनगरे अत्र (हृदये) च जवनानां विजितचितोराणां जवनविशेषाणाम् यः स्पर्शः तस्माद् भीतानां सतीनां प्राण-

समरः। (स्वगतम्) आः भग्नदर्पोऽस्मि, पराभिसन्धान-पदव्या (५७) महमद्याप्यनतिपटुरेव। (५८)

यतः—

कपटो हृदये कपटो वचने कपटो नयने कपटो वपुषि।
कपटस्त्वचि चेति समृद्धगुणः परवञ्चन-वर्त्मनि दक्षतरः ॥(५९)

अद्य तावदवगच्छामि—

मनसि गरलभारो वाचि पीयूषधारा
वपुषि मधुर-भावो भावनान्यादृशी च।
प्रकृतिरियमधीता किन्तु नेत्रत्वचं मे
सलिलपुलकजालं काममात्रान्न धत्ते ॥ (६०)

(इत्यधोमुखस्तिष्ठति)

---

सर्पिषा = प्राणा एव सर्पिः तेन जीवनरूपघृतेन, ज्वलन्तं = दीप्यमानम् इव, कृशानुम् = अग्निम् पश्यामि। उत्प्रेक्षालङ्कारः। (५७) पराभिसन्धानपदव्याम् = परवञ्चनमार्गे। (५८) अनतिपटुः = अनतिनिपुणः।

(५९) कपट इत्यादि। हृदये कपटः = मिथ्याचारः, स्वाभिप्रायगोपनम्। वचने कपटः = मिथ्याभाषणम्, चाटुवचनोपन्यासश्च; नयने कपटः = इच्छामात्रमश्रुपातनम्; वपुषि = देहे कपटः कुलजात्यादिप्रच्छादनम्। त्वचि = गात्रचर्म्मणि कपटः इच्छावशादेव पुलकोद्गमनम् इति एभिः कपटैः समृद्धगुणः = समृद्धः बहुलीकृतः गुणः बुद्ध्यादिर्यस्य सः। परवञ्चनवर्त्मनि = परप्रतारणपद्धतौ दक्षतरः पटुतरः। एतादृशार्थविवेचनया अत्र न तावदनवीकृतत्वदोषः। विशेषालङ्कारः।

(६०) मनसीत्यादि। मनसि गरलभारः = विषराशिः, अहितैकध्यानमिति भावः, वाचि = वाक्ये, पीयूषधारा = अमृतप्रवाहः, मधुरवचनेन हितैषिताभिनय

राजा । चितोरनित्यप्रतिष्ठे (६१) मातश्चितोरेश्वरि ! आपितामहं वञ्चिता वयं भवदवलोकन-परिचरण-भागधेयेन (६२), एतावतो महतः कालस्य क्षोदीयानंशो दिनमेकमपि नास्माकमकृतपुण्यानामद्याप्यासीदति यस्मिन्ननधिगम्य पराधिकार-प्रवेश-कालिमानं भवदच्चर्न-सुकृतमनुभवामः । सर्व्वशक्तिस्थानभूते (६३) ! राष्ट्राधिदेवते (६४) ! क्रियतां प्रसादः दीयतां शक्तिः एकस्यापि दिनस्य कृते निवर्त्त्यतामियं महती यातना ।

समरः । (सकृतकोत्साहम्) असहनीयोऽयं देवस्य तापः । तत्तिष्ठतु देवस्य समरचर्य्या । अहमेव—

---

इत्यर्थः । वपुषि = देहे, मधुरभावः = हितेच्छामूलकसाधुचेष्टाप्रकाशः ; अन्यादृशी च = अन्यरूपा च तादृशमधुरभावविरोधिनीत्यर्थः, भावना = संस्कारः, अहितसङ्कल्पजनित इत्यर्थः । इयं प्रकृतिः = एतादृशः स्वभावः, अधीता = अभ्यस्ता मयेति शेषः । किन्तु मे नेत्रत्वचं, नेत्रे च त्वक् (गात्रचर्म) च इति समाहारद्वन्द्वे क्लीवैकत्वम् अदन्तत्वञ्च, काममात्रात् = इच्छासमकालं, सलिलपुलकजालम् = सलिलं नयनसलिलम् अश्रु पुलकं रोमाञ्चः तयोः जालं समूहं न धत्ते = धारयति । अहितध्यानस्य गरलत्वेन मधुरवचनस्य च पीयूषत्वेनाध्यवसानादतिशयोक्तिरलङ्कारः ।

(६१) चितोरेत्यादि । नित्या चासौ प्रतिष्ठा चेति नित्यप्रतिष्ठा, चितोरे नित्यप्रतिष्ठा यस्याः सा तत्सम्बोधने, सदा चितोरस्थिते इत्यर्थः ।

(६२) पितामहः उदयसिंहः, परिचरणम् = सेवा, भागधेयेन = भाग्येन ।

(६३) सर्वशक्तिस्थानभूते = सर्वशक्तेः यत् स्थानमाधारः तत्स्वरूपे ।

(६४) राष्ट्राधिदेवते = राष्ट्रस्य मेवारदेशस्य अधिष्ठात्री रक्षयित्री देवी, तदभिमानिनी देवता वा राष्ट्राधिदेवता, तत्सम्बोधने ।

सोऽयं देवादिदेवस्त्रिभुवन-जननी दीप्यते सैव देवी
सैषा मेवारभूमिस्तदभिजनकुलं तत् तथा चायुधानि।
साध्वी-प्राण-प्रदान-ज्वलितहुतवहज्वाल-मालावलीढां
शत्रोः प्रत्याहरिष्ये पुनरपि नगरीं हामिरस्यानुकृत्या॥(६५)

राजा। (सहर्षमात्मगतम्) एतावती देशहितैषणा (६६) राजभक्तिरुत्साहशक्तिश्चास्य महाभागस्य (६७) कुलपरिचयमसन्दिग्धसर्पयन्ति, सन्देहबहुलं पुनर्नीतिविदां चेतः, परगुणग्रहणपराङ्मुखी (६८) च प्रायेण सामन्तानां दृष्टिः। यदेनमपि कापटिकतया (६९) सम्भावयति। (प्रकाशम्) सखे! सर्व्वमेव त्वयि सम्भाव्यते। तदद्य नवोत्साहसंवर्द्धितोऽस्मि,

---

(६५) सोऽयमित्यादि। सोऽयं देवादिदेवः एकलिङ्गेश्वरो नाम चितोरस्थितं प्रसिद्धं शिवलिङ्गमुद्दिश्य कथनम्। सा एव त्रिभुवनजननी त्रिलोकीमाता देवी भगवती चितोरेश्वरी दीप्यते शोभते। सा एषा मेवारभूमिः, तत्=प्रसिद्धं; तदभिजनकुलम्=सा मेवारभूमिः पैतृकवासस्थानं येषां ते, तेषां कुलम्; आयुधनि=अस्त्राणि च, तथा=तादृशानि एव सन्तीति शेषः, कथमस्माकं दुःखं दैन्यं चेति ध्वनिः। साध्वीनां सतीस्त्रीणां प्राणप्रदानेन=जीवनाहुत्या, ज्वलितः=दीप्तः यः, हुतवहः=अग्निः तस्य ज्वालमाला=शिखासमूहः तया अवलीढां=ग्रस्ताम्, नगरीं चितोराख्यां हामिरस्य तन्नामकमेवारवीरस्य (भूमिका द्रष्टव्या) अनुकृत्या=अनुकरणेन, पुनरपि शत्रोः प्रत्याहरिष्ये=रिपुसकाशाद् उद्धरिष्यामि। ओजोगुणोऽत्रावधेयः।

(६६) देशहितैषणा=देशस्य शुभ-काम्या।

(६७) महाभागस्य=महान् भागो भाग्यं यस्य सः तस्य। (६८) परगुणग्रहणपराङ्मुखी=परकीयगुणेष्वनादरपरायणा। (६९) कापटिकतया=वञ्चकतया

सामन्तानामत्राभिमतिमुपलब्धुं स्वयमेव भूयो यत्नमाचरिष्यामि। भगवति! चितोर-वसुन्धरे!

आजीवनं भवदुपासनमेव धर्म-
स्त्वद्गौरवाय मरणञ्च सुखं यदीयम्।
तेषां त्वदभ्युदय-दर्शन-वञ्चितानां
मातर्दयस्व तनुजेषु भव प्रसन्ना॥ (७०)

(नेपथ्ये) हा महाराअ मेवारणाह! तुह ज्जेब हत्थे अप्पाणं णिक्खिवंतीं भअदेक्कसरणं परित्ताहि क्खत्तियदारिअं रक्खिबग्गं अ जवणदस्सुहत्थादो।

[ महाराज मेवारनाथ! तवैव हस्ते आत्मानं निक्षिपन्तीं भवदेकशरणां परित्रायस्व क्षत्रियदारिकां (७२) रक्षिवर्गञ्च जवनदस्युहस्तात्। ]

समरः। (सहर्षमात्मगतम्) नूनं समागता वाराङ्गना।

राजा। (विलोक्य) सखे! दारुणं खल्वेतत्, रमणी तावदेका शवरशरभीता (७२) हरिणीव पुरोऽभिधावति,

---

(७०) आजीवनमित्यादि। आजीवनम् = आजन्म, भवदुपासनम् = भवत्याः सेवा, एव (यदीयः) धर्मः, त्वद्गौरवाय = तव गौरवं रक्षितुम् इति तुमर्थे चतुर्थी अथवा तादर्थ्ये, मरणञ्च = मृत्युरपि यदीयं सुखम् सुखकरं कार्य्यमित्यर्थः; तेषां त्वदभ्युदयदर्शनवञ्चितानाम् = तव समृद्धिदर्शनहीनानां दयस्व, मातः तनुजेषु पुत्रेषु प्रसन्ना भव। 'स्मृत्यर्थदयेशां वा' इति दयधातोः कर्मणि षष्ठी।

(७१) क्षत्रियदारिकाम् = क्षत्रियकन्याम्। (७२) शवरशरभीता = व्याधवाणपतनशङ्किता।

ताश्चान्यानुवर्त्तते (नेपथ्ये कलकलः) ततो नातिदूरे च वीराणां संमर्द्दः (७३), तरुगुल्मादिव्यवधानदुर्लक्ष्योऽपि सम्यगुन्नीयते। (७४) तथाहि—

अन्योन्यास्त्राभिघातोत्थितदहनकणोद्द्योतिखद्योतदीप्ति-
र्वल्लीगुल्मान्धकारे प्रसरति नियतं पत्ररन्ध्रोपलक्ष्या।
दण्डादण्डि प्रचण्डं विकटचटचटाध्वानसन्धानगम्यं
चीत्कारश्चोद्भटोऽयं समरपरिकरोत्साहिनां श्रोत्रमेति॥ (७५)

---

(७३) संमर्द्दः = अन्योन्यप्रहारः। (७४) उन्नीयते = अनुमीयते।

(७५) अन्योन्येत्यादि। वल्लीगुल्माधिकारे पत्ररन्ध्रोपलक्ष्या अन्योन्यास्त्राभिघातोत्थितदहनकणोद्द्योतिखद्योतदीप्तिः नियतं विकसति, विकटचटचटाध्वानसन्धानगम्यं प्रचण्डं दण्डादण्डि, समरपरिकरोत्सानिाम् अयम् उद्भटः चीत्कारश्च श्रोत्रमेति॥ इत्यन्वयः॥

वल्लीगुल्मान्धकारे = वल्ल्यः लताः, गुल्माः = स्तम्बाः, तेषां तत्सम्बन्धी योऽन्धकारः तमःपुञ्जं तत्र; पत्ररन्ध्रोपलक्ष्या = पत्राणां यानि रन्ध्राणि अवकाशाः तेषु उपलक्ष्या दृश्या; अन्योन्यास्त्राभिघातोत्थितदहनकणोद्द्योतिखद्योतदीप्तिः = अन्योन्यं परस्परं यः अस्त्राभिघातः अस्त्रसंघर्षः तस्मात् उत्थिताः उद्गताः ये दहनकणाः अग्निकणाः तेषु उद्द्योतिनी ऊर्द्ध्वं प्रकाशमाना = खद्योतदीप्तिः प्रभाकीटप्रभा, नियतम् = अविरतम्, विकसति = प्रसरति। विकटचटचटाध्वानसन्धानगम्यं = विकटः कठोरः यः चटचटाध्वानः = दण्डानां परस्पराघातजनितः शब्दविशेषः चटचटेत्यनुकरणशब्दः तस्य यत् सन्धानं कर्णेन्द्रियसन्निकर्षः तेन गम्यं अनुमेयं, प्रचण्डं = भयङ्करम्, दण्डादण्डि = दण्डेषु दण्डेषु गृहीत्वा प्रवृत्तं यद् युद्धं तत्, समरपरिकरोत्साहिनाम् = समरस्य युद्धस्य यः परिकरः समारम्भः तत्र उत्साहि-

तत्त्वरितमेहि, यावदत्याहितं (७६) न भवति तावदार्त्त-त्राणाय प्रवर्त्तामहे। (इति परिक्रामति)

समरः। (स्वगतम्) हन्त! सिद्धप्रायो मनोरथः। इदानीं जवनानां पलायनमात्रमवशिष्यते। (प्रकाशम्) यथा-ज्ञापयति देवः। (इति राजानमनुसरति)

(ततः प्रविशति जरत्यानुगम्यमाना युवतिः)

युवतिः। (हा महाराज मेवारणाह! इत्यादि पुनः पठति)।

राजा। भद्रे न भेतव्यं न भेतव्यम्।

समरः। (स्वगतं) अहो निपुणता वाराङ्गनायाः, यया तावदसम्भिन्नस्वरवर्ण-वचनया (७७) तथायमार्त्तध्वनिरुत्था-

---

नाम् उद्युक्तानाम् अयम् उद्भटः उदात्तः चीत्कारः च श्रोत्रमेति ममेति शेषः, मया श्रूयते इत्यर्थः। निदर्शनालङ्कारः।

अस्त्राणाम् अभिघातः (षष्ठी तत्) अन्योन्येषाम् अस्त्राभिघातः (षष्ठीतत्) तस्मात् उत्थितः (पञ्चमीतत्) स च दहनकणाश्चेति (कर्म्मधा) तेषु उद्द्योतिनी (सप्तमीतत्) सा चासौ खद्योतदीप्तिश्चेति (कर्म्मधा)।

(७६) अत्याहितम् = महाभयम्, जीवनाशारहितं कर्म्म। अतिपूर्वकाङ् पूर्वकाद् धाधातोः क्तप्रत्ययो भावे।

(७७) असम्भिन्नस्वरवर्णवचनया = असम्भिन्नाः अमिश्राः सुस्पष्टा इति यावत् स्वरवर्णाः स्वरः कण्ठध्वनिः वर्णाः ककारादयः यस्मिन् तादृशं वचनं वाक्यं यस्याः सा तया।

पितो यथा जानतोऽपि मे सहसा भूतार्थपरिशङ्किनी (७८) बुद्धिः समुत्पन्ना। तद्यावदिदानीं जवनानां पलायनोपायमाचरिष्यामि। (प्रकाशम्) भद्रे! मेवारनाथस्य पुरतः का ते जवनदस्युभीतिः?

युवतिः। (स्वगतं राजानं निर्व्वर्ण्य) अह्मो दीघल-सुसंहदा अमाणुसी सोम्मगम्भीराकिदी महाराअस्स। जं होदु, अअं ज्जेव मोहणसमओ, ता एव्वं, (प्रकाशम्) अअं ज्जेव सो मेवारणाहो! (इत्यर्द्धोक्ते अर्द्धस्खलितवसना मोहं नाटयति)

[अहो दीर्घसुसंहता (७९) अमानुषी सौम्यगम्भीराकृति (८०) महाराजस्य। यद्भवतु अयमेव मोहनसमयः, तदेवम्, अयमेव स मेवारनाथः।]

जरती। हा हदह्मि मन्दभाइणी, भट्टिदारिए किं ण्णेदं देहि मे पड़िवअणं, उम्मीलेहि णअणं, पेक्ख चिरसम्भुदासाफलं अग्गदो बट्टदि। उट्ठेहि सम्भावेहि महाराअं। (इति वसनाञ्चलेन वीजयति।)

---

(७८) भूतार्थपरिशङ्किनी = सत्यवृत्तान्तइति सन्देहाकुला।

(७९) दीर्घसुसंहता = दीर्घा आयता चासौ सुसंहिता सुघटिता चेति कर्म्मधारयः। उत्तरपदस्य विशेष्यभावं स्वीकृत्यैव कर्म्मधारयसमास इति पाणिनिमतम्। मुग्धबोधमते द्वयोर्विशेषणयोरपि कर्म्मधारयः।

(८०) अमानुषी = दिव्येत्यर्थः। सौम्यगम्भीराकृतिः = सौम्या प्रियदर्शना, गम्भीरा = अनभिगम्या समीपगमने भयजनिकेत्यर्थः। सौम्या च गम्भीरा चेति सौम्यगम्भीरा, तादृशी आकृतिः मूर्त्तिर्यस्य सः।

[ हा हतास्मि मन्दभागिनी । भर्त्तृदारिके ! किमेतत् । देहि मे प्रतिवचनम् । उन्मीलय नयने, प्रेक्षस्व चिरसम्भृताशाफलम् (८१) अग्रतो वर्त्तते । उत्तिष्ठ, सम्भावय (८२) महाराजम् ]

समरः । ( स्वगतम् ) अहो वैदग्धी (८३) गणिकायाः ।

तथाह्यनया—

मृणालमृदुलं वपुः कठिनभूतले पातितं
निमीलितमचञ्चलं प्रकृतिचञ्चलं लोचनम् ।
स्थितेऽपि पतनश्रमे श्वसितमल्पमल्पं तथा
क्षणेन वसनाञ्चलं स्खलितमप्रयत्नादिव ॥ (८४)

---

(८१) चिरसम्भृताशाफलम् = बहुकालादाकांक्षितं वस्तु ; चिरं सम्भृता ( सुपसुपा ) या आशा ( कर्म्मधा ) तस्याः फलम् (षष्ठीतत् ) । (८२) सम्भावय = सम्मानय । (८३) वैदग्धी = भङ्गिः, चातुर्य्यमिति यावत् ।

(८४) मृणालेत्यादि । क्षणेन अप्रयत्नादिव कठिनभूतले मृणालमृदुलं वपुः पातितम् । प्रकृतिचञ्चलं लोचनं अचञ्चलं निमीलितम् । पतनश्रमे स्थितेऽपि अल्पम् अल्पम् श्वसितं तथा वसनाञ्चलं स्खलितम् ; इत्यन्वयः । मृणालमृदुलं = पद्मनालवत् कोमलम् वपुः शरीरं ; पातितमिति अनयेति कर्त्तृपदम् । प्रकृति-चञ्चलं = वारवनितानाम् स्वभावत एव सिद्धं नेत्रचापल्यं कटाक्षविक्षेपादिकं, तथाभूतमपि लोचनं नेत्रं, जात्या एकवचनं अथवा लोचनं दृष्टिः, अचञ्चलं यथा स्यात्तथा स्थिरभावेनेति यावत् निमीलितं मुद्रितम् । पतनश्रमे स्थितेऽपि—पतन-जनितश्रमवशात् घनघनश्वास एव सम्भाव्यते, तं संगोप्य, मूर्च्छामापद्यमानाया यथा श्वासाल्पतानुभूयते तथैवानया मृदुमृदु श्वसितम् इति भावः । वसनाञ्चलम् = वस्त्रप्रान्तभागः स्खलितम्—भूमौ निक्षिप्तम् । क्षणेन = निमेषेण, अप्रयत्नात्

राजा। (स्वगतम्) अहो मदर्पित-हृदया क्षत्रिय-दारिकेयं मदवलोकनजनितहर्षातिशयेन मोहमापन्ना, न जाने—परस्तात् किं भविष्यति। (प्रकाशम्) सखे! आत्ययिकोऽयं (८५) कालः, गच्छ त्वमस्या रक्षिवर्गं परित्रातुममूं संमर्दभूमिम् (८६) अहमपि सम्प्रमूढ़ा (८७) मेनामाश्वास्या (८८) नुपद (८९) मागत एव।

समरः। (स्वगतम्) ममाप्येतदभिमतम्। (प्रकाशम्) यथाज्ञापयति देवः। (इति सत्वरं परिक्रम्य) अहो निवृत्तः कोलाहलः, मन्ये पलायिता जवनवीराः (अग्रतो गत्वा निर्वर्ण्य सविस्मयम्) हन्त किमेतत्! सर्व्व एव निहता जवनाः, विस्मयभीति-विमुग्धाश्च (९०) रक्षिभूमिकायामुप-

---

इव = चेष्टां विनैव, स्वत इवेत्यर्थः, इति तु सर्व्ववाक्येष्वन्वितम्। एकस्मिन् कारके अनेकक्रियासम्बन्धाद्दीपकालङ्कारः।

(८५) आत्ययिकः = अत्ययः कृच्छ्रं तत्सम्बन्धी, विपत्संकुलः समय इति भावः। एतेन सत्वरतायाः सावधानतायाश्चावश्यकत्वं सूचितम्।

(८६) सम्मर्दभूमिम् = क्षुद्रयुद्धस्थानम्। (८७) सम्प्रमूढाम् = मोहमापन्नाम्।

(८८) आश्वास्य = अभयप्रदानेन सान्त्वयित्वा। (८९) अनुपदम् = पश्चात् पश्चात् तवेति शेषः। पदयोः पश्चादित्यर्थेऽव्ययीभावसमासः, 'अनुगेऽनुपदं क्लीवमव्ययम्' इत्यमरः।

(९०) विस्मयभीतिविमुग्धाः = अतर्कितवाणपातेन दस्युरूपिजवनानां निधनं जातमिति रक्षिरूपिपुरुषाणां विस्मयः, स्वस्वमरणमाशङ्कमानानां च तेषां भयं ताभ्यां विमुग्धाः तत्कालकर्त्तव्यज्ञानरहिताः। अतर्कितवाणपातस्य विवरणं

स्थिता (९१) मे बन्धवो (९२) निस्पन्द (९३) मासते (९४)। केनेदमचिन्तितं कर्म्मानुष्ठितम्! यद्भवत्ववलोकयामि। (इति निष्क्रान्तः)।

राजा। वृद्धे! दुःखातिशयात् हर्षातिशयाद्वा भवति सुकुमारचेतसा (९५) मादृशो विकारः। समाश्वसिहि नेदमत्याहितं पश्य—

चलति निविड़-कृष्णं पक्ष्म वक्राग्रमेतत्
किशलय-कमनीयः कम्पते किञ्चिदोष्ठः।
स्फुरितमृदुलनासा दीर्घनिश्वासमेषा
त्यजति नलिननेत्रा नेत्रयोर्मुद्रणञ्च॥ (९६)

---

द्वितीयाङ्के प्रकाशयिष्यते। (९१) रक्षिभूमिकायामुपस्थिताः = रक्षित्वेन कल्पिताः। (९२) बन्धवः = निजपक्षीयाः पुरुषाः इत्यर्थः। (९३) निस्पन्दम् = स्थिरम्। (९४) आसते = उपविष्टाः। (९५) सुकुमारचेतसाम् = कोमलमनोवृत्तीनाम्।

(९६) चलतीति—। एतत् निविड़कृष्णं वक्राग्रं पक्ष्म चलति, किशलय-कमनीयः ओष्ठः किञ्चित् कम्पते; स्फुरितमृदुलनासा एषा दीर्घनिःश्वासं त्यजति, (एषा) नलिननेत्रा नेत्रयोर्मुद्रणं च (त्यजति)। इत्यन्वयः।

एतत् निविड़कृष्णम् = घनश्यामम्, वक्राग्रम् = वक्रम् अग्रं यस्य तत्, अग्रभागे कुटिलमित्यर्थः, पक्ष्म = नेत्रलोम, चलति = स्पन्दते, किशलय-कमनीयः = पल्लववत् सुन्दरः ओष्ठः किञ्चित् = ईषत्, कम्पते = स्फुरति, स्फुरितमृदुलनासा = स्फुरिते स्फीतिं प्राप्ते मृदुले कोमले नासे नासापुटे यस्याः सा। दीर्घनिश्वासम् = अन्तर्निरुद्धं बहुलं वायुप्रवाहम्, त्यजति = मुञ्चति, नलिननेत्रा = पद्माक्षी, नेत्रयोः = चक्षुषोः, मुद्रणं = निमीलनं, च त्यजति = परिहरति, चक्षुषी उन्मीलयतीत्यर्थः।

जरती । समस्ससस भट्टिदारिए, एसो महाराश्रो मेवारणाहो श्रग्गदो वट्टदि ।

[ समाश्वसिहि भर्त्तृदारिके ! एष महाराजो मेवारनाथोऽग्रतो वर्त्तते । ]

युवतिः । (महाराजं दृष्ट्वा ससम्भ्रममिव किञ्चिदुत्थाय, स्वगतम् ) जणणीं हञ्जेत्ति भणामि, का गई (प्रकाशम्) हञ्जे ! अजाणन्तीहिं अह्मेहिं जं अवरद्धं तं मरिसावेहि महाराअं ।

[ जननीं हञ्जे (६७) इति भणामि का गतिः। हञ्जे अजानतीभिरस्माभिर्यदपराद्धं तन्मर्षय महाराजम् । ]

जरती । (कृताञ्जलिः) मरिसेदु मरिसेदु अवराहं महाराओ आस्सिदजणाणं ।

[ मर्षयतु मर्षयतु अपराधं महाराज आश्रितजनानाम् । ]

राजा । वृद्धे ! अकृत-समुचित-समुदाचारेऽपि मयि क्षमापनमिदं (६८) भर्त्तृदारिकायास्ते महाभिजनतां (६६)

---

किशलयकमनीयः, नलिननेत्रा—इत्येतयोरुपमालङ्कारः । मूर्च्छावसानसमये प्रथमतो नेत्रलोम्नां चाञ्चल्यं तदनु ओष्ठस्फुरणमनन्तरञ्च दीर्घनिःश्वासत्यागः ततश्च चक्षुरुन्मीलनमिति अनेकक्रमवर्णनात् पर्य्यायालङ्कारः ।

(९७) चेटीं प्रति सम्बोधनवाचकं हञ्जे इत्यव्ययपदम् । (९८) अकृतसमुचितसमुदाचारे = अकृतः अदर्शितः समुचितः योग्यः समुदाचारः आदरः येन स तस्मिन् । क्षमापनम् = क्षमाप्राप्तिसाधनवाक्यं क्षमाप्रार्थनवचनमित्यर्थः । (९९) महाभिजनतां = सद्वंशसमुद्भवम् ।

सूचयति । न चेद्रहस्यं (१००) कथ्यतामेतद्गतो वृत्तान्तः ।

जरती । देव ! किं महाराअस्स पुरदो भट्टिदारिआए रहस्सं होदि । ता सुणादु महाराओ ।

[ देव ! किम् महाराजस्य पुरतो भर्तृदारिकाया रहस्यं भवति । तत् शृणोतु महाराजः । ]

राजा । अवहितोऽस्मि ।

जरती । अत्थि दाव मरुट्ठाणे राठोरकुलप्पसूदो राअसिंघो णाम सामन्तो राआ, इअं हि तस्स धीआ वीरा णाम, (स्वगतम्) णहि णहि मम धीआ वीरदत्ता णाम (प्रकाशम्) चिरं महाराअस्स अणुरत्ता ।

[ अस्ति तावन्मरुस्थाने राठोरकुलप्रसूतो राजसिंहो नाम सामन्तो राजा, इयं हि तस्य दुहिता वीरा नाम । न हि न हि मम दुहिता वीरदत्ता नाम । चिरं देवस्यानुरक्ता । ]

युवतिः । (लज्जां नाटयन् स्वगतम्) अह्मो ! अज्जुआए बि मे लज्जा होदि ।

[ अहो अज्जुकाया (१०१) अपि मे लज्जा भवति । ]

---

(१००) रहस्यं = गोपनीयम् । (१०१) अज्जुका = गणिका, नाट्योक्तौ गणिकाज्जुका इत्यमरः ।

राजा। (स्वगतम्) अस्थाने तावदनुरागः केवलं क्लेशाय। (इति निश्वस्य, प्रकाशम्) श्रुतनामाभिजना (१०२) खल्वियम्, ततस्ततः।

जरती। दाणीं से तादेण मरुट्ठाण-णाधस्स अम्बरणाधस्स अ मग्गं अणुसरन्तेण जवणराअस्स हत्थे इमं समप्पिदुं अहिलासो किदो।

[इदानीमस्याः तातेन मरुस्थाननाथस्य (१०३) अम्बरनाथस्य (१०४) च मार्गमनुसरता जवनराजस्य हस्ते इमां समर्पयितुमभिलाषः [illegible]ः।]

राजा। हा धिक्! रे क्षत्रियापसदाः,

धर्म्मो वो हृदि मा चकास्तु परमे शास्त्रेऽपि मास्त्वादरः
शिष्टाचारपरम्पराऽपि हृदये मा वः पदं यच्छतु।
युष्माकं विमला कुलस्थितिमती कन्या स्वसा वाधमै-
र्यत्साक्षादुपभुज्यते कथमहो तन्नीरवा मृष्यथ॥ (१०५)

---

(१०२) श्रुतनामाभिजना = श्रुतौ नामाभिजनौ आख्या वंशश्च यस्याः सा।

(१०३) मरुस्थाननाथस्य = मारोवाड़ इति प्रसिद्धदेशाधिपतेः। (१०४) अम्बरनाथस्य = अम्बरनामकजनपदाधिपतेः मानसिंहस्येत्यर्थः।

(१०५) धर्म्मो व इत्यादि। वः (युष्माकं) हृदि धर्म्मः मा चकास्तु, परमे शास्त्रेऽपि आदरः मा अस्तु, वः (युष्माकं) हृदये शिष्टाचारपरम्परा अपि मा पदं यच्छतु, (एते माङर्थो माशब्दाः, तेन लोट्प्रयोगः।) यत् युष्माकं कुलस्थितिमती विमला कन्या स्वसा वा अधमैः साक्षात्

अथवा अहमहमिकया (१०६) जवनेभ्यः कन्यां स्वसारं वा प्रतिपादयतो बहुमन्यमाना (१०७) यूयमपि धिक्कार-पथमतिक्रान्ता एव, परन्त्वेतदधुना दुःखाय यत्किल—

श्रुतिस्मृतिपथानुगा परिहृता स्वजातिस्थिति-
र्निजं कुलमधःकृतं जगदपूरि निन्दारवैः ।
तथापि जवनावनीपतिकृतादराकाङ्क्षिणां
मनः कलिमलीमसं क्षितिभुजां प्रलोलुभ्यते ॥ (१०८)

---

उपभुज्यते, अहो तत् कथं नीरवाः मृष्यथ ? इत्यन्वयः । चकास्तु = प्रतिभातु । परमे = उत्कृष्टे, अबाधितप्रामाण्ये इत्यर्थः । शास्त्रे = शास्त्रवाक्ये । आदरः = श्रद्धा । शिष्टाचारपरम्परा = पूर्व्वपुरुषक्रमादागता सदाचारधारा । मा पदं यच्छतु = तिष्ठतु, कुलस्थितिमती = वंशमर्यादामण्डिता, अधमैः जवनैरित्यर्थः ; (जवनानां विनष्टक्षत्त्रियधर्म्मत्वात् क्षत्त्रियजात्यपेक्षया अवरत्वम् मनुस्मृतिपाणिनि-प्रामाण्यतोऽवधारणीयम्) साक्षात् (प्रत्यक्षं) उपभुज्यते = भोग्यतया परिगृह्यते, वर्त्तमानतत्समोपसाधारणोऽयं लट्प्रयोगः ; अहो (विस्मये) तत् (कार्य्यं) कथं नीरवाः (प्रतिवादं प्रतिकारञ्च विना) मृष्यथ (सहध्वे) । कुटुम्बेष्वेकोऽपि न तत्प्रतिषेद्धा इति दुःखविस्मयहेतुर्बोध्यः ।

(१०६) अहमहमिकया = परस्परस्पर्द्धया । अहमहमिका 'परस्परं यो भवत्य-हङ्कारः' इत्यमरः । मयूरव्यंसकादित्वान्निपातसिद्धमिदं पदम् ।

(१०७) प्रतिपादयतः = ददतः क्षत्रियनृपतीनिति शेषः ।

(१०८) श्रुतीति । श्रुतिस्मृतिपथानुगा स्वजातिस्थितिः परिहृता निजं कुलम् अधःकृतम् । निन्दारवैः जगत् अपूरि, तथापि जवनावनीपतिकृतादरा-काङ्क्षिणां क्षितिभुजां कलिमलीमसं मनः प्रलोलुभ्यते । इत्यन्वयः । श्रुतिश्च स्मृतिश्च ते श्रुतिस्मृती तयोः तत्सम्बन्धिनौ यौ पन्थानौ मार्गौ तयोः अनुगा

युवतिः। (स्वगतम्) एदं सुणिअ उम्मत्तो विअ जादो अअं महाबाहू। तादस्स दोसदंसणादो अवधीरणाभीरुअं उण वेबदि मे हिअअं।

[ एतत् श्रुत्वा उन्मत्त इव जातोऽयं महाबाहुः। तातस्य दोष-दर्शनादवधीरणाभीरुकं (१०६) वेपते मे हृदयम्। ]

जरती। सुणादु महाराओ तं सुणिअ जधा इअं तधा से जणणी अ उव्वेएण उम्मत्ता विअ जादा।

[ शृणोतु महाराज! तच्छ्रुत्वा यथा इयं तथा अस्या जननी च उद्वेगेन उन्मत्तेव जाता। ]

---

अनुवर्त्तिनी। 'श्रुतिस्तु वेदो विज्ञेयो धर्म्मशास्त्रन्तु वै स्मृतिः' इति मनुः। स्वजातिस्थितिः = क्षत्त्रियजातेर्मर्य्यादा, परिहृता परित्यक्ता निजं कुलम् = स्ववंशः, अधःकृतम् = पातितम्, जगत निन्दारवैः = कलङ्ककथाभिः, अपूरि = पूरितम्। तथापि = एवं दोषबाहुल्ये सत्यपि जवनावनीपतिकृतादराकाङ्क्षिणां जवन-राजप्रदत्तसत्कारविशेषमिच्छतां क्षितिभुजां क्षत्त्रियराजानां कलिमलीमसं तामस-युगमलिनं मनः प्रलोलुभ्यते अतिशयेन लुब्धं भवति। जवनराजप्रसादलाभाय केचन क्षत्त्रियभूपतयो लोभाभिभूताः सन्तो दुहितरं स्वसारं वा तेभ्य उपहरन्ति, उपहरतो वान्ये बहुमन्यन्ते, परे तान् वानुचिकीर्षन्ति सर्वानेव तान् धार्म्मिकसमाज-दुःखातिरेकहेतून् शतशो धिगस्तु इति तात्पर्य्यम्।

(१०९) अवधीरणाभीरुकम् = अवधीरणा अवज्ञा, अवधीर तक अवज्ञायामिति दुर्गादासः, अवधीरधातोश्चुरादित्वात् णिचि युच्प्रत्ययः, 'ण्यासश्रन्थो युच्' इति पाणिनिसूत्रात् (३।३।१४७) ततो भीरुकं भीधातोः क्रुकन्, 'क्रुकन्नपि वाच्यः' इति (३।२।१७४) पाणिनिवार्त्तिकसूत्रात्, अवज्ञामाशङ्क्य त्यर्थः।

राजा । साधु सुक्षत्रिये साधु ! ततस्ततः ।

युवतिः । (स्वगतम्) हिअअ समस्सस ।

[ हृदय ! समाश्वसिहि । ]

जरती । दाणीं विवाहदिणणिब्बन्धस्स किदे देवे राअसिंघे दिल्लीनअरं पत्थिदे ताए देवीए णिअडत्थेहिं अत्तणो सहोअरेहिं मन्तिअ पक्खाविदमरणा इअं णिहुदं रक्खिपरिवुदाए शिविआए महाराअस्स सआसं पट्ठाबिदा । अहं अ अणुवट्टिणी किदा ।

[ इदानीं विवाहदिननिर्ब्बन्धस्य कृते (११०) देवे राजसिंहे दिल्लीनगरं प्रस्थिते तया देव्या निकटस्थैरात्मनः सहोदरैर्मन्त्रयित्वा (१११) प्रख्यापितमरणा (११२) इयं निभृतं (११३) रक्षिपरिवृतया शिविकया महाराजस्य सकाशं प्रस्थापिता । अहञ्चानुवर्त्तिनी कृता । ]

राजा । कुलधर्म्मरक्षायै (११४) यथाशक्ति यतितं सुक्षत्रियया । अनन्तरमुच्यताम् ।

---

(११०) विवाहदिननिर्ब्बन्धस्य कृते = विवाहदिननिर्द्धारणनिमित्तम् । दिल्लीशब्दव्युत्पत्तिर्द्वितीयाङ्कटीकायां द्रष्टव्या ।

(१११) मन्त्रयित्वा = रहः परामृश्य । (११२) प्रख्यापितमरणा = प्रख्यापितम् उद्घोषितं मरणं मृत्युः यस्याः सा ।

(११३) निभृतं = गूढ़म् । (११४) कुलधर्म्मेत्यादिप्रशंसावचनं गीतास्मरणादुपपन्नम् । तथा हि 'उत्सन्नकुलधर्म्माणां मनुष्याणां परन्तप । नरके नियतं वासो भवतीत्यनुशुश्रुम' इति ।

जरती । अध, सव्वं मग्गं निव्विग्घं अदिक्कमिअ अज्ज रत्तिसेसे मग्गस्समकादरेसुं वाहएसुं रक्खिअणेसुं अ वण-जणहीणे भूभाए णिद्दाणिमीलिदेसुं दस्सुहिं अववाहिदा अब्भन्तरसुत्तभट्टिदारिआ अह्माणं सिविआ ।

[ अथ सर्व्वं मार्गं निर्व्विघ्नमतिक्रम्य अद्य रात्रिशेषे मार्गश्रमकात-रेषु वाहकेषु रक्षिजनेषु च वनजनहीने भूभागे निद्रानिमीलितेषु दस्यु-भिरपवाहिता अभ्यन्तरसुप्तभर्त्तृदारिका (११५) अस्माकं शिविका । ]

राजा । ( सोद्वेगम् ) ततस्ततः ?

जरती । तदो मए णोणिद्दाए तधा चिक्कारो किदो जधा सव्वे पबुद्धा शिविअं अणुधाविदा । एव्वं अणुधावन्ताणं पहादा रअणी । तेहिं दस्सुहिं वणभूमिमज्झे ओदारिअ शिविअं पड़िधाविदा रक्खिअणा आक्कमिदा अ । तदो जधा-वत्थं गदेह्म तं पच्चक्खीभूदं महाराअस्स, दाणीं महाराओ ज्जेव एक्कं सरणं ।

[ ततो मया निर्निद्रया तथा चीत्कारः कृतः यथा सर्व्वे प्रबुद्धाः शिविकाम् अनुधाविताः । एवमनुधावतां प्रभाता रजनी । तत्र दस्युभिर्व्वन-भूमिमध्ये अवतार्य्य शिविकाम् प्रतिधाविता रक्षिजनाः आक्रान्ताश्च ।

---

(११५) अभ्यन्तरसुप्तभर्त्तृदारिका = अभ्यन्तरे ( शिविकायाः ) मध्यभागे सुप्ता निद्रिता भर्त्तृदारिका राजकन्या यत्र सा ( शिविकाया विशेषणम् ) । अनु-धावताम् अनादरे षष्ठी ।

ततो यथावस्थां गताः स्मः तत्प्रत्यक्षीभूतं महाराजस्य, इदानीं महाराज एव एकं शरणम्। ]

राजा। (स्वगतम्) अहो शिथिलरक्षा (११६) मे मेवारभूमिः, यत्र साहसचिकीर्षवो (११७) जवनदस्यवः प्रविशन्ति। हन्तानवसरोपनतशान्तिसम्भोगफल (११८) मेतद् यदालस्यं नाम समाहर्त्त्रादीनाम् (११९), तस्यैवायं परिणामः।

तथाहि—

कायं पातयतोऽपि पश्चिमगिरौ शूरस्य तेजस्विनः
सद्यो वैरितमोहरोऽतिरुधिरः प्रोच्चैः करो दृश्यते।

---

(११६) शिथिलरक्षा = शिथिला मन्दीभूता रक्षा रक्षणं यस्याः सा।

(११७) साहसचिकीर्षवः = साहसनाम्ना परिभाषितं कार्य्यं कर्त्तुमिच्छवः। साहसमाह नारदः—मनुष्यमारणं स्तेयं परदाराभिमर्षणम्। पारुष्यमनृतञ्चैव साहसं पञ्चधा मतम्।

(११८) अनवसरोपनतशान्तिसम्भोगफलम् = अनवसरे अकाले युद्धोचित-समये इत्यर्थः, उपनतः उपस्थितः स्वीकृतः यः शान्तिसम्भोगः तस्य फलम्।

(११९) समाहर्त्त्रादीनाम् = समाहर्त्ता आदिर्येषां ते, राज्ञा तत्तदधिकारेषु नियुक्ताः पुरुषाः। समाहर्त्ता—दुर्गवनाद्यवेक्षणे नियुक्तो राजपुरुषः। तत्र प्रमाणम्—'समाहर्त्ता दुर्गं राष्ट्रं खनिं सेतुं वनं व्रजं वणिक्पथञ्चावेक्षेत' इति (कौटिलीयमर्थशास्त्रम्, २ अधि० ६ अ०)।

**तेजोहानिमुपेयुषस्तु शिखिनः प्राप्तस्य निर्व्वाणतां**
**शेषं भस्ममयं तृणादपि लघुं पद्भ्यां जनः क्रामति ॥(१२०)**

---

(१२०) कायं पातयतोऽपीत्यादि । तेजस्विनः शूरस्य पश्चिमगिरौ कायं पातयतोऽपि सद्यः वैरितमोहरः अतिरुधिरः करः प्रोच्चैः दृश्यते, तेजोहानिम् उपेयुषः तु निर्व्वाणतां प्राप्तस्य शिखिनः तृणादपि लघुं भस्ममयं शेषं जनः पद्भ्यां क्रामति । इत्यन्वयः । तेजस्विनः = भास्वरस्य अथच प्रतापिनः, शूरस्य = सूर्य्यस्य अथच वीरस्य सूरशूरशब्दयोस्तुल्यार्थत्वात्; पश्चिमगिरौ कायं पातयतः = अस्तगमनोन्मुखस्य अपि, अथच युद्धक्षेत्रे शरीरपातनं कुर्वतः आसन्नमरणस्य अपि सद्यः तस्मिन् क्षणे, वैरितमोहरः स्वविरोधि यदन्धकारं तस्य नाशकः, अथच शत्रुगर्वापहारकः अतिरुधिरः करः = अतिशयलोहितवर्णः किरणः, अथच शत्रुशोणितरञ्जितः हस्तः प्रोच्चैः = ऊर्द्ध्वस्थाने गगने इत्यर्थः अथच ऊर्द्ध्वगतः सर्वेषामादरणीयः सन्नित्यर्थः दृश्यते । तु = पक्षान्तरे, तेजोहानिम् उपेयुषः = निष्प्रभस्य अथच निष्प्रतापस्य, निर्व्वाणतां प्राप्तस्य = निर्वाणस्य अथच मृतस्य, शिखिनः = अग्नेः, अथच शिखावतः कस्यचिद्भटस्य, तृणादपि लघुम् = अतितुच्छमित्यर्थः, भस्ममयं शेषम् = अग्नेरवशेषभूतं भस्म, अथच कलङ्कस्वरूपमात्रशेषम्, जनः पद्भ्यां क्रामति = पददलितं करोति अथच सर्वथा अवजानाति । अयं भावः—यथा हि सूर्य्यस्यास्तगमनोन्मुखस्यापि लोहितः किरणः तत्कालेऽपि तिमिरं हरन् ऊर्द्ध्वगगने जनैर्विलोक्यते, तथैव प्रतापी वीरः संग्रामस्थले आसन्नमरणोऽपि शत्रुविनाशादनिवृत्तः रिपुरक्ताक्तकरः ससम्मानं जनैर्दृश्यते; पक्षान्तरे निर्वाणो वह्निर्यथा भस्मावशेषः सन् जनानां पदमर्द्दितो भवति, तथा प्रतापहीनः क्षत्रियः मरणोत्तरं कलङ्कावशेषः सर्वेषामवज्ञाभाजनं भवतीति । अत्र समैर्विशेष्यविशेषणैः प्रस्तुते स्वराष्ट्रस्याधिकारिकपुरुषवर्गेऽप्रस्तुतवह्निसादृश्यस्य तथा स्वाभीष्टकर्म्मोद्यतवीरेषु अप्रस्तुतसूर्य्यसादृश्यस्य च व्यञ्जनादुपमाध्वनिः । श्लिष्टार्थाविवक्षायां प्रस्तुतस्य गम्यत्वे त्वप्रस्तुतप्रशंसा ।

युवतिः । ( स्वगतम् ) भग्गो मे रूबदप्पो, जधा सव्वं सुणिअ एव्वं विआरकादरो उदासीणो विअ महाराओ दीसदि ।

[ भग्नो मे रूपदर्पः । यथा सर्व्वं श्रुत्वा एवं विचारकातर (१२१) उदासीन (१२२) इव महाराजो दृश्यते । ]

जरती । देव ! सव्वं निवेदिदं दाणीं भअदेक्कहिअआ अणुकम्पणिज्जा मे भट्टिदारिआ ।

[ देव ! सर्व्वं निवेदितम्, इदानीं भवदेकहृदया (१२३) अनुकम्पनीया मे भर्त्तृदारिका । ]

राजा । वृद्धे ! को नाम स्वतन्त्रः (१२४) स्वयमुपनतं (१२५) पीयूषं नाभिनन्दति (१२६) । नियमपरतन्त्र (१२७)

---

(१२१) विचारकातरः = विचारेण मम परिग्रहः कर्त्तव्यो न वेति चिन्तया कातरः मन्थरः । (१२२) उदासीनः = आग्रहशून्यः । (१२३) भवदेकहृदया = भवान् एकः केवलो यत्र भवदेकं हृदयं चित्तं यस्याः सा, भवानेव एकं हृदयं यस्याः सा इति वा भवानेव यस्या हृदयस्थानीय इति भावः ।

(१२४) स्वतन्त्रः = स्वच्छन्दः स्वाधीन इत्यर्थः 'स्वतन्त्रोऽपावृतः स्वैरी स्वच्छन्दो निरवग्रहः' इत्यमरः । (१२५) स्वयमुपनतम् = स्वत उपस्थितम् । पीयूषम् = अमृतम् । (१२६) अभिनन्दति = सानन्दं स्वीकरोतीत्यर्थः । 'को नाम ………नाभिनन्दती'ति सन्दर्भे अप्रस्तुते सामान्ये अहन्तु अस्वतन्त्र इति विशेषः प्रस्तुत इत्यप्रस्तुतप्रशंसालङ्कारः । (१२७) नियमपरतन्त्रः = व्रतविशेषाधीन इति यावत्, 'परतन्त्रः पराधीनः [illegible] इत्यमरः ।

श्चाहं प्रतीक्षणीयावसरोऽस्मि ( १२८ ) । तदिदानीमस्मदन्तःपुर एव स्थास्यति ते भर्त्तृदारिका ।

जरती । ( निश्वस्य ) जं देवो आणवेदि ।

[ यद्देव आज्ञापयति । ]

युवतिः । हञ्जे ! एत्तिअं ज्जेव मे बहुदरं ।

[ हञ्जे ! एतावदेव मे बहुतरम् । ]

राजा । ( युवतिं निर्वर्ण्य, स्वगतम् )

अवधीरणशङ्कयास्यमस्याः
क्षणमारक्तमथापि धूसरश्रि ।
जलदान्तरितातपैः प्रभाते
परिमृष्टोज्झितपुण्डरीकतुल्यम् ॥ (१२९)

---

(१२८) प्रतीक्षणीयावसरः = प्रतीक्षणीयः प्रतिपालनीयः अवसरः समयो यस्य सोऽस्मि, मम व्रतोद्यापनपर्यन्तः समयः प्रतिपाल्य इत्यर्थः ।

(१२९) अवधीरणेत्यादि—। अवधीरणशङ्कया क्षणम् आरक्तम् अथापि धूसरश्रि अस्याः आस्यं प्रभाते जलदान्तरितातपैः परिमृष्टोज्झितपुण्डरीकतुल्यं ( भवति ) इत्यन्वयः । अवधीरणशङ्कया प्रत्याख्यानसम्भावनया, अवधीरणम्—चुरादिगणीयादवधीरधातोर्ल्युट् । क्षणम् = स्वल्पकालं व्याप्य, आरक्तम् = लोहिताभम्, लज्जयेति भावः; अथापि = अनन्तरञ्च, धूसरश्रि = ईषत्पाण्डुवर्णम्, अपमानभयेनेति भावः; अस्याः = पुरोवर्तिन्याः, आस्यम् = मुखम्, प्रभाते = प्रातःकाले ;

युवतिः। हञ्जे! वलीअं क्खु उक्कण्ठिदह्मि महाराअस्स ( इत्यर्द्धोक्ते सभय-वैलक्ष्यम् ) रक्खिवग्गस्स।

[ हञ्जे ! वलीयः खलु उत्कण्ठितास्मि महाराजस्य, रक्षिवर्गस्य (१३०)। ]

जरती। ( मुखवैवर्ण्यमभिलक्ष्यापवार्य ) जादे! ण दे अअं विब्भमो, ता किं एदं ?

[ न ते अयं विभ्रमः, तत् किमेतत् ? ]

---

जलदान्तरितातपैः = मेघव्यवहितप्रकाशैः, परिमृष्टोज्भितपुण्डरीकतुल्यम् = आदौ परिमृष्टं स्पृष्टं ततः उज्झितं त्यक्तं यत् पुण्डरीकं श्वेतपद्मं तेन] तुल्यं = समम्।।प्रभाते श्वेतपद्मं यथा वालातपसम्पर्कादालोहितं भवति ततः क्षणेन च मेघावरणादातपहानौ शुभ्रवर्णमापद्यते—तथा चास्याः ललनायाः मत्तः प्रत्याख्यानमाशङ्कमानायाः मुखं लज्जाभययोरुदयात् क्रमात् आरक्तं पाण्डुवर्णञ्च भवतीति तात्पर्यम्। अत्रोपमालङ्कारः, विशेषस्तु—'एकरूपः कश्चित्कापि भिन्नः साधारणो गुणः। भिन्ने विम्बानुविम्बत्वम्………… ।' अत्र अवधीरणशङ्कयेत्यस्य जलदान्तरितातपैरिति दृष्टान्तवत् प्रतिविम्बनम्।

(१३०) 'बलवदुत्कण्ठितास्मि महाराजस्य इत्यर्द्धोक्ते सभयवैलक्ष्यं रक्षिवर्गस्य'—इत्यनेन वाराङ्गनायाः पूर्व्वरागः सूचितः। 'श्रवणाद्दर्शनाद्वापि मिथः संरूढ़रागयोः। दशाविशेषो योऽप्राप्तौ पूर्व्वरागः स उच्यते'। अस्याः सामान्यनायिकात्वं च सिध्यति। शृङ्गारे—परोढ़ां वर्ज्जयित्वा तु वेश्याञ्चाननुरागिणीम्। आलम्बनं नायिकाः स्युरिति कथनादनुरागिणी वेश्या नायिका भवत्येवेति सूच्यते, 'एषापि मदनायत्ता कापि सत्यानुरागिणी' इति साहित्यदर्पणोक्त्या समर्थ्यते च। अत्र नायकस्तु [illegible] इति विशेषः।

युवतिः । ( सवैलक्ष्यमात्मगतम् ) अहिलक्खिदह्मि अम्बाए ; अह्मो असमत्थह्मि अप्पाणं धारेदुं । ( इत्यधोमुखी तिष्ठति ) ।

[ अभिलक्षितास्मि अम्बया, अहो ! असमर्थास्मि आत्मानं धारयितुम् (१३१)। ]

राजा । ( निर्व्वर्ण्य स्वगतम् )

इयं हि प्रणयोद्वेगगोत्रस्खलनलज्जया ।
न केवलं निजाङ्गेषु मम चित्तेऽपि लीयते ॥ (१३२)

( प्रकाशम् ) भद्रे ! अलमुत्कण्ठया । गतमात्र एव मे सख्यौ समरसिंहे यथा निवृत्तकोलाहला सम्मर्द्दभूमिस्तथा-

---

(१३१) 'अहो असमर्थास्मि आत्मानं धारयितुमिति तस्या आत्मगतोक्त्या सत्यानुरागः प्रकाशितः ।

(१३२) इयं हीत्यादि—। इयं हि प्रणयोद्वेगगोत्रस्खलनलज्जया केवलं निजाङ्गेषु न, मम चित्तेऽपि लीयते, इत्यन्वयः ।

प्रणयोद्वेगगोत्रस्खलनलज्जया = प्रणयः मां प्रत्यनुरागः तेनोद्वेगः, मत्प्राप्तिसंशयजनिता चिन्ता तेन गोत्रस्खलनं प्रमादेन प्रियनामोच्चारणं तेन या लज्जा तया । केवलं निजाङ्गेषु स्वावयवेषु लीयते सङ्कुचिता सती तेषु प्रविशतीवेति न, किन्तु मम चित्तेऽपि लीयते मम मनोमध्येऽपि प्रविशतीव । लज्जावशात् सङ्कुचितसर्वाङ्गीयमभिनवसौन्दर्य्यं दधती मदीयचित्तहारिणी जातेति भावः । लीयत इवेति गम्योत्प्रेक्षा । संलीना स्वेषु गात्रेष्विति तुल्यः प्रयोगः रत्नावल्यां तृतीयपरिच्छेदे ।

वधारितकुशलतया (१३३) स्वयममनुद्वेगोऽपि भवदुद्वेगनिवृत्तये तत्रैव गच्छामि। क्षणमात्रमत्र प्रतीक्ष्यतां मे प्रत्यागमनम्।

युवतिः। (शङ्कानाटितकेन) हञ्जे! बहुच्छलाओ खु जवणाओ होन्ति, ता भाआमि असहाआ इध ट्ठादुं, जइ देवो अणुजाणादि तदो अह्मेवि देवं अनुसरेह्म।

[हञ्जे! बहुच्छलाः (१३४) खलु जवनाः भवन्ति, तद् बिभेमि असहाया इह स्थातुं, यदि देवः अनुजानाति ततः आवाम् अपि देवम् अनुसरावः।]

राजा। (स्वगतम्) अहो! अनुरागमधुरोऽयं (१३५) मस्याः सुधानिष्यन्दी (१३६) वचनविन्यासः (१३७) (प्रकाशम्) सुन्दरि! यद्येवं तथैवास्तु, किन्तु कठोरे (१३८) यमुद्घातिनी (१३९) पदवी शनैः (१४०) रवलम्बितपरिजना (१४१) मामनुवर्त्तस्व।

---

(१३३) अवधारितकुशलतया = तत्र कुशलं जातमिति निश्चयेन। (१३४) बहुच्छलाः = शाठ्यप्राचुर्य्यवन्तः। (१३५) अनुरागमधुरः = प्रेम्णोच्चारितत्वात् श्रुतिसुखावहः।

(१३६) सुधानिष्यन्दी = अमृतस्रावी। (१३७) वचनविन्यासः = वाक्यप्रयोगः। (१३८) कठोरा = कठिनस्पर्शा। (१३९) उद्घातिनी = नतोन्नता। (१४०) शनैः = मन्दमन्दम्। (१४१) अवलम्बितपरिजना = स्वकीयदासीकरं धृत्वेत्यर्थः। 'कठोरेयम्''' '''मामनुवर्त्तस्व'—इत्युक्त्या नायिकागतेष्वलङ्कारेषु ललितं प्रदर्शितम्। सुकुमारतयाङ्गानां विन्यासो ललितं भवेदिति लक्षणम्।

युवतिः । ( स्वगतम् ) हिअअ किं एव्वं वेवसि ?

[ हृदय ! किमेवं वेपसे ? (१४२) ]

राजा । ( स्वगतम् ) धिङ्मामधन्यम् !

जननी निगडैर्बद्धा यस्य दुर्दैवजीविनः ।
चिरं तिष्ठति साक्रन्दा स्त्रीचिन्ता तस्य किं भवेत् ॥(१४३)

---

(१४२) 'हृदय किमेवं वेपसे' इत्यनेन नायिकालङ्कारश्चकितमुदाहृतम् । उक्तञ्च—'कुतोऽपि दयितस्याग्रे चकितं भयसम्भ्रमः' ।

(१४३) जननीत्यादि—। दुर्दैवजीविनः यस्य जननी निगडैर्बद्धा चिरं साक्रन्दा तिष्ठति, तस्य स्त्रीचिन्ता किं भवेत्, इत्यन्वयः ।

दुर्दैवेन दुर्भाग्येन जीवितुं शीलमस्य इति, दुर्भाग्यं जीवयितुं निष्प्रतीकारस्वजीवनेन स्थापयितुं शीलमस्येति वा, हतभाग्यस्य यस्य जननी निगडैः शृङ्खलैः बद्धा सती चिरं साक्रन्दा रोदनपरायणा तिष्ठति, तस्य स्त्रीचिन्ता नारीविषया चिन्ता किं कथं भवेत्, न कथमपि युज्यत इति भावः । अहं तु तथाविधः कथं मे स्त्रीचिन्ता ? इति धिङ्मामधन्यम् इति प्रस्तुतार्थः । प्रस्तुतार्थे जननीत्वेन जन्मभूमेः, निगडत्वेन पराधीनतायाः, जन्मभूमिरोदनध्वनित्वेन तदभिजनानां विषादस्य भेदेऽप्यभेदस्याध्यवसायादतिशयोक्तिः । जननीति लिङ्गमात्रेण अचेतनायामपि जन्मभूमौ निगडबन्धनरोदनरूपचेतनधर्म्मव्यवहारान्मतान्तरे समासोक्तिः । अप्रस्तुतेन सामान्येन विशेषस्य प्रस्तुतस्य गम्यत्वेनाप्रस्तुतप्रशंसा । स्वस्य स्त्रीचिन्तानौचित्ये जननीनिगडबन्धादयो हेतव इति काव्यलिङ्गालङ्कारश्च ।

तदिममतर्कितोपनतं (१४४) स्त्रैणापह्नवमात्मनो (१४५) निराकर्त्तुं (१४६) मवहितो (१४७) भवामि ।

इति निष्क्रान्ताः सर्व्वे ।

इत्यमरमङ्गलनामनाटकेऽपसर्पणा (१४८) भिधः प्रथमोऽङ्कः समाप्तः ।

---

(४ ४) अतर्कितोपनतम् = सहसा उपस्थितम् । (१४५) स्त्रैणापह्नवम् = स्त्रिया भावः कर्म्म वा स्त्रैणं तेन स्त्रीस्वभावेन तदीयवचनादिना वा, आत्मनः = निजान्तःकरणस्य, अपह्नवम् = अन्यथाभावनयनम् अपहारमिति भावः । (१४६) निराकर्त्तुम् = दूरीकर्त्तुम् । (१४७) अवहितः = सावधानः, दत्तचित्तः ।

अस्य नाटकस्य प्रथमेऽङ्के मुखनामकप्रथमसन्धेरुपन्यासो बोद्धव्यः । राजस्थानेतिहासप्रसिद्धस्य महाराणाप्रतापसिंहसङ्कल्पितस्य तदात्मजेनामरसिंहेन संसाधितस्य च चितोरोद्धारस्य बीजसमुत्पत्तिरत्र सूचिता । सप्तमेऽङ्के तस्यैवोपसंहृतिः । चितोरोद्धाररूपेणैकेन प्रयोजनेन सर्व्वेऽपि कथांशाः सम्बद्धाः । अमरसिंहपक्षाच्चितोराक्रमणरूपावान्तरप्रयोजनेन प्रथमद्वितीयाङ्कौ सुसम्बद्धाविति संक्षेपः । विस्तरस्तु टीकान्तभागे द्रष्टव्यः ।

(१४८) अपसर्पणम् = गुप्तचारनियोगः ।

समाप्ता प्रथमाङ्कस्य नाटकेऽमरमङ्गले ।
नाम्नेयं विमला टीका मुक्तादाम्नीव यष्टिका ॥

---

# द्वितीयोऽङ्कः

## विष्कम्भकः*

ततः प्रविशत्युद्यानवाटिकास्थो दैवज्ञो वृद्धश्च ।

वृद्धः । कस्त्वं भोः ?

दैवज्ञः । नूनमागन्तुक (१) स्त्वं येन मामपि न जानासि ? अहं किल विश्वविख्यातकीर्त्तिः (२) सर्व्वदर्शी नाम दैवज्ञः (३) ।

---

* विष्कम्भकलक्षणं साहित्यदर्पणे—

वृत्तवर्त्तिष्यमाणानां कथांशानां निदर्शकः ।
संक्षिप्तार्थस्तु विष्कम्भ आदावङ्कस्य दर्शितः ।।
मध्येन मध्यमाभ्यां वा पात्राभ्यां सम्प्रयोजितः ।
शुद्धः स्यात् स च सङ्कीर्णो नीचमध्यमकल्पितः ॥

मध्यमाभ्यां पात्राभ्यां प्रयोजितोऽयं विष्कम्भकः शुद्धः ।

अत्र नीतिनिपुणस्य प्रतिनायकस्य दिल्लीश्वरसेनापतेर्मानसिंहस्य विधेयैः कृतानां करिष्यमाणानाञ्च कर्म्मणां सूचना प्रदीयते, प्रसङ्गतः स्वपक्षीयचारपरीक्षा चारभ्यते—कस्त्वमित्यादिना ।

(१) आगन्तुकः = अतिथिः, अत्र नवागत इत्यर्थः । 'आवेशिक आगन्तुरतिथिर्ना गृहागतः' इत्यमरः । आगन्तुरेव आगन्तुकः स्वार्थे कप्रत्ययः ।

(२) विश्वविख्यातकीर्त्तिः = विश्वेषु भुवनेषु विख्यातकीर्त्तिः विस्तृतयशाः ।

(३) दैवज्ञः = दैवं जनानां भाग्यं जानातीति दैवज्ञः, ज्यौतिषिकः ।

रोगेण शोकेन भयेन युक्ता-
नपत्यहीनान् धनमानशून्यान् ।
आशाविनाशादवसीदतो वा
संयोजयाम्याशु शुभैर्यथावत् ॥ (१)

अपिच—

भूतं वदामि किमहं विफलं किलैतत्
यद्वर्त्तमानमनुभूयत एव तत्तु ।
हंहो हिताय जगतामखिलं भविष्यद्-
गाढ़ान्धकारपिहितं कथयामि यत्नात् ॥ (२)

---

(१) रोगेणेत्यादि—। रोगेण शोकेन भयेन युक्तान् अपत्यहीनान् धनमान-शून्यान् आशाविनाशात् अवसीदतो वा यथावत् शुभैः आशु संयोजयामि । इत्यन्वयः । रोगशोकभयग्रस्तान् सन्तानहीनान् अर्थसम्मानरहितान् आशाभङ्गेन म्रियमाणान् जनान् ( इति शेषः ) यथायोग्यं मङ्गलयुक्तान् तूर्णं करोमि इति समुदितार्थः । रोगिणां रोगोपशमनं शोकार्त्तानां शोकापनोदनं भीतानां भयनिवारणं चेत्यादिकं शुभं तत्तदार्त्तानां प्रयोजनानुरूपं शीघ्रं व्यवस्थापयामीति भावः । आशाविनाशादव-सीदत इत्यंशेन स्वकीयः कर्म्मविशेषः सङ्केतितः । स चेदानीमेव स्फुटीभविष्यति ।

(२) भूतमित्यादि—। अहं भूतं किं वदामि, एतत् किल विफलम् । यद् वर्त्तमानं तत् तु अनुभूयत एव, हंहो जगतां हिताय गाढ़ान्धकारपिहितम् अखिलं भविष्यत् यत्नात् कथयामि । इत्यन्वयः । अहं भूतम् = अतीतम्, किम् = कथम्, वदामि, नैव कथयामीत्यर्थः । कुत इति चेत् ? ( यत् ) एतत् अतीतं किल ( निश्चये ) विफलम् व्यर्थम् । एतत् कथनं व्यर्थं, तत्तु पूर्व्वं ज्ञातमेवेति भावः । यद् वर्त्तमानं तत् तु अनुभूयत एव सर्वैरिति शेषः । वर्त्तमानं प्रत्यक्षीभवति सर्वेषामतो तद्विषयक-

वृद्धः । भूतमपि वक्तुं शक्यते यत्किल पूर्व्वजन्मवृत्तम् (१) ।

दैवज्ञः । भो निष्प्रत्यय ! (२) आगामिवर्षे एव यत् संवादयिष्यसि (३) तदुच्यते—

ग्रीष्मर्त्तौ क्वचिदग्निना तृणगृहं संयोक्ष्यते धक्ष्यते
निःशेषं क्वचनापि, मेघपटली तुल्यं न वर्षिष्यति ।
क्वापि द्रोहभयं क्वचिन्नृपभयं मृत्युः क्वचिद्धीमतां
शस्यार्थे कलहो भविष्यति नृणां रक्तोक्षिता च क्षितिः ॥(४)

---

कथनमपि निरर्थकमिति भावः । हंहो इत्यव्ययं सम्बोधने दम्भे वा, जगतां हिताय गाढ़ान्धकारपिहितं घनतिमिराच्छन्नं जनदृष्टेरगम्यमित्यर्थः भविष्यत् अनागतकर्म्म यत्नात् गणनाजनितश्रमविशेषमाश्रित्य कथयामि ।

(१) भूतमपि वक्तुं शक्यते यत्किल पूर्वजन्मवृत्तम् = सन्निहितातीतविषयकथने तव गणनायाः सत्यासत्यत्वपरीक्षा सम्भाव्यते अतस्तत् परिहारश्चतुरेण त्वया सम्यक् कृतः, परोक्षातीतगणनायान्तु सा भीतिर्नास्तीति ध्वनिः । (२) निष्प्रत्यय = विश्वासहीन । (३) संवादयिष्यसि = फलेन मेलयिष्यसि ।

(४) ग्रीष्मर्त्तावित्यादि—। ग्रीष्मर्त्तौ अग्निना तृणगृहं क्वचित् संयोक्ष्यते क्वचन अपि निःशेषं धक्ष्यते, मेघपटली तुल्यं न वर्षिष्यति, क्वापि द्रोहभयं क्वचित् नृपभयं क्वचिद् धीमतां मृत्युः, शस्यार्थे कलहः क्षितिः नृणां रक्तोक्षिता च भविष्यति । इत्यन्वयः । ग्रीष्मर्त्तौ = निदाघे, क्वचित् कस्मिन्नपि स्थाने तृणगृहम् अग्निना संयोक्ष्यते अग्निसंयुक्तं भविष्यति, तेषु क्वचन अपि कस्मिन्नपि स्थाने निःशेषं धक्ष्यते, भस्मान्तं ज्वलिष्यति, सर्व्वत्र तुल्या वृष्टिर्न भविष्यति । क्वापि कुत्रापि

वृद्धः । (विहस्य) महादैवज्ञो (१) भवान् ।

अहमपि—

तापं कृशानौ सलिलं समुद्रे
शैत्यं तुषारे सुषमां शशाङ्के ।
वृक्षानरण्ये चलनञ्च वायौ
वदाम्यशेषं गणना-प्रभावात् ।। (२)

दैवज्ञः । (सक्रोधम्) अरे वृद्ध ? मामप्युपहससि, श्रूयताम् ।

---

स्थाने द्रोहभयं द्रोहजन्यं भयं क्वचिद् नृपभयं नृपाद् राज्ञः उग्रदण्डादित्यर्थः प्रजानां भयम्, नृपाणामपि भयं प्रजाभ्यः क्वचिद् धीमतां पण्डितानां मृत्युः मरणम्, शस्यार्थं कलहः विवादः क्षितिः भूमिः नृणां मनुष्याणां रक्तोक्षिता रुधिराक्ता भविष्यति । एतेन युद्धे वा अस्त्रचिकित्सायां वा जनितः सर्व्वप्रकारो रुधिरपातः संगृहीतः ।

(१) महादैवज्ञः = महांश्चासौ दैवज्ञश्चेति कर्म्मधारयः, 'आन् महतः समानाधिकरणजातीययोः' (६।३।४६) इति पाणिनिसूत्रेण महत आकारोऽन्तादेशः । अत्र महच्छब्दश्रवणात् आपातप्रशंसा पश्चात् अर्थानुसन्धानेनापकर्षो गम्यते । 'शङ्खे तैले तथा मांसे वैद्ये ज्योतिषिके द्विजे । यात्रायाम् पथि निद्रायाम् महच्छब्दो न युज्यते ।' इति प्रमाणात् दैवज्ञेषु अधम इत्यर्थतया पर्य्यवसानात् ।

(२) तापमित्यादि—। गणनाप्रभावात् कृशानौ तापं समुद्रे सलिलं तुषारे शैत्यं शशाङ्के सुषमाम् अरण्ये वृक्षान् वायौ चलनञ्च अशेषं वदामि ।

जिज्ञासमानैरनिवेदितं प्राक्
जिज्ञास्यमर्थं निभृतं विलिख्य ।
रक्षन् परस्तात् कथितेन तेन
संवाद्य तस्योत्तरमर्पयामि ॥ (१)

वृद्धः । (विहस्य) तर्हि धनिनां गृहदासा वेतनेनात्मसात्-कृताः, जिज्ञासूनां प्राक् प्रश्नपरिज्ञानाय गूढ़पुरुषा अपि मार्गे मार्गे निवेशिताः । (२)

---

इत्यन्वयः । गणनाप्रभावात्=ज्योतिर्विद्यानुशीलनबलेन, कृशानौ=अग्नौ, तुषारे=हिमे, सुषमां=परमशोभां, चलनं=गतिम्, अशेषं=प्रष्टव्यशेषरहितम् । एतादृशगणनावत् तवापि गणना सर्वेषाम् उपहासाय इति ध्वनिः ।

(१) जिज्ञासमानैरित्यादि—। जिज्ञासमानैः प्राक् अनिवेदितं जिज्ञास्यमर्थं निभृतं विलिख्य रक्षन् परस्तात् तेन कथितेन संवाद्य तस्य उत्तरम् अर्पयामि ।

जिज्ञासमानैः=प्रश्नकारिभिः, प्राक्=पूर्व्वम्, अनिवेदितम्=अकथितम्, मनसि स्थितमित्यर्थः; जिज्ञास्यमर्थं=प्रष्टव्यं वस्तु, निभृतं=गूढं, विलिख्य=एकस्मिन् पत्रे इति शेषः; रक्षन् परस्तात्=पश्चात्, तेन कथितेन=तदुक्तेन विषयेण (सहार्थे तृतीया), संवाद्य=मेलनं कृत्वा, तस्य=प्रश्नस्य, उत्तरम्=यथायथं प्रतिवचनम्, अर्पयामि=ददामि । गणनार्थं मदन्तिके समागममात्रेण जिज्ञासोर्मनसि स्थितः प्रश्नो मयैकस्मिन् पत्रे गूढं विलिख्य रक्ष्यते। ततो जिज्ञासो-र्मुखात् प्रश्नप्रकाशे जाते तदेव पत्रं बहिष्कृत्य प्रदर्श्यते, तदुत्तरञ्च दीयत इति, कीदृशी मेऽसाधारणी शक्तिरिति ध्वनिः ।

(२) धनिनामित्यादि—। आत्मसात्कृताः=आयत्तीकृताः । समीपवर्त्तिनां धनिनां गृहदासास्तव वेतनभोगिनः सन्तः गणनार्थिनः स्वामिनस्त्वत्सकाशे

दैवज्ञः । ( सक्रोधम् ) अरे वृद्धापसद (१) ! यथाभिलषित (२) मभिधत्से (३), न पुनः शङ्कसे (४) सर्व्वदर्शिनः ।

वृद्धः । वैदेहक ! (५) मम तावद् दैवज्ञतां पश्य ।

दैवज्ञः । (स्वगतम् ) अहो मम नामापि विदितमनेन, तत् किमहमभिसंहितोऽस्मि (६) राजपुरुषैः । भवतु यथाप्राप्तमाचरिष्यामि । ( प्रकाशम् ) कथयतु महाभागः । (७)

वृद्धः । त्वमिति सद्यः परित्यज्य महाभाग इति कथयसि, पश्चाच्चरणतले निपतिष्यसि, श्रूयतां वैदेहक ! त्वं मानसिंहस्य गूढ़पुरुषः (८), वर्षद्वयमत्र निवससि, बहुशो विदितवृत्तान्तश्च

---

गणनार्थमागन्तुं प्रनोदयन्ति प्रश्नानपि त्वां विज्ञापयन्तीत्यर्थः ननु दूरादागतानां प्रश्नगणना कथं सम्भवतीत्याशयेनाह जिज्ञासूनामित्यादि । तव गृहस्य समीपवर्त्तिषु पथिषु केऽत्रन चरा नियुक्ता वर्त्तन्ते, ते च दूरादागतान् दृष्ट्वा संलप्य सुहृद्भावेन पृष्ट्वा प्रयोजनादिकं विज्ञाय योग्यस्थले त्वद्गणनामुपदिशन्ति मार्गान्तरेण चागताः सर्वं त्वां कथयन्तीति महतीयं चातुरी ज्योतिषनाम्ना प्रचलतीति ध्वनिः ।

(१) वृद्धापसद = वृद्धेषु अपसदः नीचः, अधमः इत्यर्थः । अप + सद्धातोः अच् कर्त्तरि तत्सम्बोधने ।

(२) यथाभिलषितम् = यथेच्छम् (३) अभिधत्से = वदसि (४) शङ्कसे = बिभेषि । (५) वैदेहक इति दैवज्ञस्य वास्तवं नाम, तज्ज्ञानं दैवज्ञत्वनिदर्शनम् । सर्वदर्शीति तु छद्मनाम । (६) अभिसंहितः = अनुसन्धानेन ज्ञातः, अभि + सम् + धाधातोः कर्म्मणि क्तप्रत्ययः । (७) महाभागः = महान् भागो भाग्यं यस्य सः भाग्यवानित्यर्थः । (८) गूढ़पुरुषः = गुप्तचरः ।

मेवारप्रधानानाम् (१)। ज्ञातं त्वया झालापतेः (२) प्रथमः पुत्रो जलमग्नो मृतः। न च तस्य शरीरमुपलब्धम्। तदेकपुत्रा (३) च झालापतिज्येष्ठपत्नी स्वयमाशंसित-पुत्र-प्रत्यागमनेति (४)।

दैवज्ञः। (स्वगतम्) महद्व्यसन (५) मापतितं! (प्रकाशम्) किमिदमुपन्यस्तम् (६)?

वृद्धः। यदुपन्यस्तं तत्ते मुखवैवर्ण्य (७) मेव व्यनक्ति। श्रूयतामिदानीं कालात्ययेन (८) क्षीणाशायां तु तस्यां त्वयैव

---

(१) मेवारप्रधानानाम्=श्रेष्ठानां मेवारसामन्तभूस्वामिप्रभृतीनाम्।

(२) झालापतिः=झालेति तन्नामाप्रसिद्धः मेवारान्तर्गतः प्रदेशः तस्य पतिः राजा। अयमेव मेवारराजस्य सामन्तेष्वन्यतमः श्रेष्ठो राजा। प्रसिद्धे हल्दीघाटयुद्धे प्रतापसामन्तो झालापतिः स्वप्राणव्ययेन प्रतापप्राणान् ररक्षेति ऐतिहासिकी वार्त्ता।

(३) तदेकपुत्रा=एकः पुत्रः एकपुत्रः सः एकपुत्रो यस्याः।

(४) स्वयम् आशंसितपुत्रप्रत्यागमना=पुत्रः पुनरागमिष्यतीति स्वत एव आशां पुपोष इत्यर्थः। स्नेहात्तथा भवतीति भावः।

(५) व्यसनम्=विपत्; (६) उपन्यस्तम्=वक्तुमारब्धम्, इदं वृत्तं न मे ज्ञातमपीति भावः।

(७) मुखवैवर्ण्यम्=मुखस्य वर्णविकारः, भयात् मुखन्ते पांशुवर्णं जातमित्यर्थः। व्यनक्ति=प्रकाशयति। अज्ञातवृत्तस्य ते भयजनितो मुखपाण्डिमा नाभविष्यत् इत्यर्थः। (८) कालात्ययेन=समयातिक्रमेण, "प्रकृत्यादिभ्यस्तृतीया"।

भविष्यदुक्त्या पुत्रसमागमाशा पुनरुज्जीविता (१)। तथा त्वमेव मानसिंहचरं दुर्ज्जनसिंहं सर्व्वं गृहतत्त्वमावेद्य झालापति-मृत-पुत्र-समरसिंहत्वेन प्रख्याप्य स्थापितवानसि।

दैवज्ञः। (स्वगतम्) हा धिक्! सर्व्वमेव विदितम्। (प्रकाशम्) प्रलाप एवैषः।

वृद्धः। श्रूयतां—झालापतिपत्नी तमेव पुत्रं मन्यमाना जग्राह। तद्बद्ध-सौहृदा (२) मेवार-राजजननी करुण-हृदया पुत्रं तथा ज्ञापयामास, यथासौ तं सखित्वेनाङ्गीकृतवान्। (३) अतःपरमपि वक्तव्यम्?

दैवज्ञः। (स्वगतम्) हा हतोऽस्मि! (प्रकाशम्) महाभाग! किं नाम स्वप्नवर्णनं क्रियते?

वृद्धः। तदनन्तरमपि कथयामि निर्न्निद्र एव स्वप्नमनुभव। तेन च समरसिंहतया परिचितेन प्रोत्साहितः सर्व्वनाशहेतवे चितोरोद्धाराय मेवारराजः। तद् वैदेहक! सर्व्वस्यास्य महतोऽनर्थस्य त्वमेव मूलम्।

दैवज्ञः। (स्वगतम्) किं करोमि मन्दभाग्यः (प्रकाशम्) उच्यतामुच्यताम्।

---

(१) पुनरुज्जीविता = पुनः उद्दीपिता। (२) तद्बद्धसौहृदा = तया झालापति-पत्न्या सह बद्धं सुस्थिरं सौहृदं मैत्री यस्याः सा। शोभनम् अनुकूलं हृद् हृदयं यस्य इति सुहृत्तस्य भावः—सुहृच्छब्दादण्प्रत्ययः। (३) सखित्वेनाङ्गी-कृतवान् = मित्ररूपेण स्वीकृतवान्।

वृद्धः । अवधेहि (१) भोः ! जानीथ किल यूयं यद् अनुद्धृतचितोरो मेवारराजो धृतनियमो दारान्तरग्रहणान्निवृत्त इति । तदत्र स्वयंवरार्थिनी (२) क्षत्रियकुमारीत्यात्मानं प्रख्यापयन्ती (३) मानसिंहेन प्रहिता (४) वाराङ्गना । या हि मेवारराजस्य चितोरोद्धारप्रवृत्तिवर्द्धिनी (५) भविष्यति ।

दैवज्ञः । (स्वगतम्) सर्व्वं प्रकाशितम् । अहो विफलयत्नाः (६) स्मः । (प्रकाशम्) ततस्ततः ?

वृद्धः । सति चितोराक्रमणे प्रदर्शितापराधेन मेवारपतिना सह संग्रामाय मानसिंहो दिल्लीश्वरं (७) प्रवर्त्तयि-

---

(१) अवधेहि = एकमनाः शृणु इत्यर्थः । (२) स्वयंवरार्थिनी = स्वयम् अमरसिंहं वरत्वेन प्रार्थयमाना । (३) प्रख्यापयन्ती = कथयन्ती । (४) प्रहिता = प्रेरिता । (५) चितोरोद्धारप्रवृत्तिवर्द्धिनी = चितोरस्य उद्धारे- स्वाधीनतानयने या प्रवृत्तिः इच्छा तदुत्तेजिका भविष्यति ।

(६) विफलयत्नाः = व्यर्थचेष्टाः, मानसिंहप्रयुक्ताः सर्व्वा गूढ़नीतयो यदि विपक्षैरवगतास्तदा सर्व्वं कार्यं नष्टमिति भावः । (७) दिल्लीश्वरम् = दिल्ली— दितिं कुर्व्वन्तीति खण्डनार्थकदोधातोर्भावे क्तिप्रत्ययनिष्पन्नाद् दितिशब्दात् करोत्यर्थे णिच् ततः क्विप्, इति दितः खण्डनकर्त्तारः लीयन्ते यत्र इति दित्+लीधातोः क्विप् । यस्यां नगर्यां विपक्षाः सनातनधर्म्माणो निश्चिह्नप्राया जाता इत्यर्थः । तस्याः ईश्वरः तात्कालिकः सेलिमनामा ॥

ष्यति, आक्रामन्नेव विजेष्यते मेवारराजो वेति युष्माकं नीतिः । किं वा मन्यसे ?

दैवज्ञः । (स्वगतम्) अहो सर्व्वतत्वानुसन्धानप्रगल्भोऽयं (१) पुरुषः । (प्रकाशम्) आश्चर्य्यमेव मन्ये ।

वृद्धः । अतोऽधिकतरमाश्चर्य्यं पश्चादनुभविष्यसि । ततश्च मेवारराजस्य चितोराक्रमणशासनं (२) यदि बलवद्विरोधभीरुभि (३) र्वृद्धसामन्तै (४) र्नाङ्गीक्रियते, तदा मेवारराजस्तेन निमित्तेन नितरां निपीड़ितो दुःखदौर्म्मनस्यपीड़ा (५) मपाकर्त्तुं प्रलोभितश्च वाराङ्गनया चलचित्तो (६) व्यसनी (७) भविष्यति । तस्य च फलं प्रकृतीना (८) मन्त-

---

(१) सर्व्वतत्त्वानुसन्धानप्रगल्भः = सर्व्वतत्त्वानां सकलरहस्यानाम् अनुसन्धाने गवेषणे प्रगल्भः प्रतिभान्वितः निःशङ्कवादीत्यर्थः । (२) चितोराक्रमणशासनम् = चितोराभियानाय प्रदत्ता आज्ञा ।

(३) बलवद्विरोधभीरुभिः = बलवान् प्रबलः जवनराजः इत्यर्थः तस्य विरोधः विपक्षता तस्माद् भीरुभिः भीतैः । (४) वृद्धसामन्तैः = शालुम्ब्रापतिप्रभृतिभिः ।

(५) दुःखदौर्म्मनस्यपीड़ाम् = उत्साहप्रतिघाताद्दुःखं विषादः दौर्म्मनस्यं चित्तावसादश्च तज्जनिता या पीड़ा व्यथा ताम् ।

(६) चलचित्तः = अस्थिरमनाः स्वप्रतिज्ञाविषये इत्यर्थः । (७) व्यसनी = कामजविलासयुक्तः । (८) प्रकृतीनाम् = अमात्यादीनां राज्याङ्गानाम्,

र्भेदः (१)। ततश्च अवसराभिज्ञं (२) दिल्लीश्वरं युद्धे प्रवर्त्तयिष्यति मानसिंह इतीयं युष्माकमुभयतःपाशा (३) रज्जुः। किंस्विदन्यत् श्रोतव्यं ते ?

दैवज्ञः। (स्वगतम्) कस्तावदिदानीमात्मरक्षोपायः, हा सागरमु (४) त्तीर्य्य वेलायां मग्नप्रायोऽस्मि। कथं नामैवं कर्म्माङ्गीकृतम्! (प्रकाशम्) महाभाग! एतद्वृत्तान्तस्य गन्धमपि नाहमवैमि।

वृद्धः। (सक्रोधम्) अरे मिथ्यावादिन्! अधुनापि सत्यम[illegible]वलम्बस्व, अन्यथा अत्रैव ते चित्रवधदण्ड (५) मुपपादयामि (६)। दुर्ज्जनसिंहस्तावदिममर्थं यथातथमङ्गीकृत्य प्राणदण्डादात्मानं मोचयामास। त्वं तु मन्दभाग्यो विपद्यसे।

---

(१) अन्तर्भेदः = स्वामिन्यविश्वासात् परस्परं संहतिभङ्गः। (२) अवसराभिज्ञम् = अवसरः—शत्रोरन्तर्भेदकालः एव विजेतुः शुभसमयः, तं सम्यग् जानन्तम्।

(३) उभयतःपाशा रज्जुः = एकस्याः रज्ज्वोः प्रान्तद्वये ग्रन्थिद्वयं रक्ष्यते, एकं परिहृत्यापरन्प्रान्तमालम्बमानो जन्तुर्यथा वध्यते, तथैव एकतश्चितोराक्रमणेन दिल्लीश्वरकोपफलभोगः अन्यतश्चितोराक्रमणव्याघातेन राज्ञो वाराङ्गनावागुरापतनमिति युष्मन्नीतिः कोटिद्वयम्।

(४) सागरमित्यादि—। विपत्सङ्कुलं समयमतिक्रम्य आसन्नसिद्धिसमये शत्रुपक्षीयैर्ज्ञातोऽस्मीति प्रस्तुतार्थः। अप्रस्तुतप्रशंसालङ्कारः।

(५) चित्रवधदण्डम् = दण्डस्तावद् द्विविधः शुद्धश्चित्रश्चेति। (कौटिलीयमर्थशास्त्रं चतुर्थाधि० एकादश अ०) बहुविधक्लेशप्रदानसहकृतं वधरूपदण्डमित्यर्थः। (६) उपपादयामि = व्यवस्थापयामि।

दैवज्ञः। (स्वगतम्) अपि नाम दुर्ज्जनसिंह एवं कुर्य्यात् ? यद्भवतु, अहन्तु प्राणभीतः कर्त्तव्यपथान्न विचलिष्यासि। (प्रकाशम्) नाहं दुर्ज्जनसिंहं जानामि नापि सत्यं प्रच्छादयामि, तद् भवान् अनागसं (१) ब्राह्मणं मोचयतु दण्डयतु वा।

वृद्धः। (विहस्य) अहो प्रत्यग्र-ब्राह्मण (२)! न भेतव्यं अहमपि युष्मत्-सब्रह्मचारी (३)। दुर्ज्जनसिंहमुपसंगम्य परिज्ञात-तद्वृत्तान्तस्त्वत्सकाशमागतोऽस्मि। श्रुतं हि तस्मादद्य सायं मेवारपति-परिषदि चितोराक्रमण-मन्त्रणा भविष्यति, प्रत्यासन्नप्रायश्च (४) स समयस्तत्फलमवगत्य चितोरनगरं गमिष्यामि। तत् पश्येदं प्रत्यभिज्ञानम् (५)। (इत्यङ्गुरीयकं दर्शयति)।

---

(१) अनागसम् = निरपराधम्। (२) प्रत्यग्र-ब्राह्मण = नूतन-ब्राह्मण, जात्या अब्राह्मणोऽपि जौतिपिकब्राह्मणवेशधारणेन कृत्रिमो ब्राह्मणः भवसीत्यर्थः। 'समाहर्त्ता जनपदे सिद्धतापसप्रव्रजित......मौहूर्त्तिक.........औदनिकव्यञ्जनान् प्रणिदध्यात्' इति (कौ० अर्थ० ४ अधि० ४ अ०) नीतिशास्त्रानुसारेण मौहूर्त्तिकवेशधारणम्।

(३) युष्मत्-सब्रह्मचारी = समानं ब्रह्म चरतीति समानस्य स-भावे सब्रह्मचारी, लक्षणया युष्माकं समानव्रतधारीत्यर्थः। त्वं मानसिंहस्य प्रणिधिः, अहमपि तथेति तात्पर्यम्।



(४) प्रत्यासन्नप्रायः = अतिनिकटवर्त्ती। (५) प्रत्यभिज्ञानम् = निदर्शनम्।

दैवज्ञः । (सहर्षम्) अहो पुनर्जीवितोऽस्मि भद्रेण ।

वृद्धः । ननु पृच्छामि, अपि वाराङ्गनानुगामिजवनवधतत्त्व (१) मुद्घाटितं (२) त्वया ?

दैवज्ञः । (सविषादम्) इह हि सर्व्वैव मे चेष्टा विफला भवति । अथ किञ्चिदुन्नीतं (३) भवता ?

वृद्धः । अस्मिन्नस्मत्पुरुषा नापराध्यन्तीत्येतावन्मात्रमुन्नीतं मया ।

दैवज्ञः । इदमपि बहुतरमस्माकम् ।

वृद्धः । अतःपरं यदधिगतं तन्नास्माकमनुकूलम् ।

दैवज्ञः । किं तत् ?

वृद्धः । वाराङ्गना भाववैपरीत्यमापन्ना ।

दैवज्ञः । किमस्मद्रहस्यं कथितवती ?

वृद्धः । न तावत्पर्य्यन्तं वैपरीत्यमधुनापि जातम् । तन्मातृकथितवर्त्मनि सा न सन्तिष्ठते (४) । इदानीमेव तन्माता तां स्वमतं ग्राहयितुमितः प्रस्थिता ।

दैवज्ञः । तर्हि महदिदं शङ्कास्थानम् ।

---

(१) वाराङ्गनानुगामिजवनवधतत्त्वम् = वाराङ्गना वीरदत्तानाम्नी (प्रथमाङ्कोक्ता) तस्याः अनुगामिनः अनुचराः ये जवनाः तेषां वधतत्त्वम् वधविषयकयथार्थवृत्तान्तः । (२) उद्घाटितम् = अनुसन्धानेन ज्ञातम् । (३) उन्नीतम् = सामान्यतोऽनुमितम् । (४) सन्तिष्ठते = वर्त्तते, 'समवप्रविभ्यः स्थः' (१।३।२२ पा० सू०) इत्यनेनात्मनेपदम् ।

वृद्धः । तन्माता तु दृढभक्तिर्महाराजे सम्यगनुकूल-माचरिष्यति ।

दैवज्ञः । कथञ्चिदाशास्थलमिदम् । अथ पृच्छामि किमर्थं चितोरं गमिष्यति भवान् ?

वृद्धः । तृतीयदिने देवो मानसिंहस्तत्रागमिष्यतीति ।

दैवज्ञः । यद्येवं महानभ्युदयः । तदेहि, निभृतमद्य स्थितौ स्वकृत्य (१) मालम्बयावः । (इति निष्क्रान्तौ)

इति विष्कम्भकः ।

---

## द्वितीयोऽङ्कः

ततः प्रविशति वीरा जरती च ।

जरती । (स्वगतम्) अदूरे वीरदत्ता वट्टदि । अज्ज पुणोवि पेक्खामि एसा पइदित्था होदि ण वा, जइ ण भवे तदो बिसप्पओएण अण्णेण केणावि उबाएण वा अमरसिंघं महीसीं अ हणिस्सं । तेहिं दुवेहिं मे सरला धीआ मोहिदा । अग्गिसंजोअणेण सव्वं वा राअउलं दहिस्सं, जदो सव्वं ज्जेव एदं एदाए मोह-हेदू । जं भोदु सद्दावेमि वीरदत्तं, (प्रकाशम्) जादे इदो दाव ।

---

(१) स्वकृत्यम् = स्वनियोगोचितकार्य्यम् ।



इति विष्कम्भकः ।

[ अदूरे वीरदत्ता वर्त्तते । अद्य पुनरपि प्रेक्षे एषा प्रकृतिस्था (१) भवति न वा, यदि न भवेत् ततो विषप्रयोगेण अन्येन केनाप्युपायेन वा अमरसिंहं महिषीं च हनिष्यामि । ताभ्यां द्वाभ्यां मे सरला दुहिता मोहिता । अग्निसंयोजनेन सर्व्वं वा राजकुलं धक्ष्यामि, यतः सर्व्वमेवैतद् एतस्याः मोहहेतुः, यद्भवतु शब्दाययामि वीरदत्ताम्—जाते ! इतस्तावत् । ]

वीरा । ( विलोक्य स्वगतम् ) कधं मे जणणी, किम्पि पड़िऊलं भणिस्सदि, तहवि उवसप्पेमि ( उपसृत्य प्रकाशम् ) माए, क[illegible]ं मं सद्दावेसि ?

[ कथं मे जननी ! किमपि प्रतिकूलं भणिष्यति तथापि उपसर्पामि ! मातः कथं मां शब्दाययसि ? ]

जरती । जादे, सुणु मे वअणं,—जधा एषा पुप्फुज्जाण-भूमी महुअरेहिं उवासीअदि तधा वाराङ्गणाओ पुरिसेहिं उवासिदाओ होंति । केवलं सौरहं विअ उज्जाणेण, मोहणोबाओ वाराङ्गणाहिं वित्थारिणज्जो । एत्थ कधं न तं अणुचिट्ठसि ?

[ शृणु मे वचनम्, यथा एषा पुष्पोद्यानभूमिर्मधुकरैरुपास्यते तथा वाराङ्गनाः पुरुषैरुपासिता भवन्ति । केवलं सौरभमिवोद्यानेन मोहनोपायो ( २ )वाराङ्गनाभिः विस्तारणीयः । अत्र कथं न तम् अनुतिष्ठसि ? ]

---

(१) प्रकृतिस्था = वाराङ्गनोचिते स्वकीये भावे स्थितेत्यर्थः । यथैषा...... ...उपासिता भवन्तीति उपमालङ्कारः ।

(२) मोहनोपायः = पुरुषमनोमोहजनकहावभावादिरित्यर्थः ।

वीरा । अम्ब ! ण आणामि तं ।

[ अम्ब ! न जानामि तम् । ]

जरती । जेण किदेण लक्खं सुवण्णमुद्दाणं तुए अज्जिदं तं कधं ण आणासि ?

[ येन कृतेन लक्षं सुवर्णमुद्राणां त्वया अर्ज्जितम्, तं कथं न जानासि ? ]

वीरा । णं विह्मरिदो सो । [ ननु विस्मृतः सः । ]

जरती । अदोज्जेव पुणो पुणो भणीअदि उम्मूलेहि प्पणअंकुरं ।

[ अतएव पुनःपुनर्भण्यते उन्मूलय प्रणयाङ्कुरम् ( १ ) । ]

वीरा । को मे प्पणओ ? [ को मे प्रणयः ? ]

जरती । अइ अणत्थे ! सव्वं अवलवसि ? सुमर दाव उग्गदण्डस्स महाराअ-माणसिंघस्स हत्थे तुह सव्वस्सं ।

[ अयि अनर्थे ! सर्व्वमपलपसि ( २ ) ? स्मर तावदुग्र-दण्डस्य महाराज-मानसिंहस्य हस्ते तव सर्व्वस्वं । ]

---

(१) प्रणयाङ्कुरम् = अनुरागस्य प्रथमाविर्भावम् उन्मूलय = उत्पाटय । मूलादेव नाशयेत्यर्थः ।

(२) अपलपसि = निगूहसि । वाराङ्गनायाश्चारकर्म्मणि नियोगकाले मानसिंहेन [illegible] तदीया माता सहचारिणी कृता, पूर्वापर-

वीरा। (स्वगतम्) मम सव्वस्सं इधज्जेव चिट्ठदि (प्रकाशम्) किं तेण ?

[मम सर्व्वस्वम् इहैव तिष्ठति। किं तेन ?]

जरती। तदो दे भावंतरं सुणिअ सव्वं डण्डइस्सदि।

[ततस्ते भावान्तरं श्रुत्वा सर्व्वं दण्डयिष्यति।]

वीरा। डण्डिदं ज्जेब एदं। जदो ण तहिं गमिस्सं।

[दण्डितमेवैतत्। यतो न तत्र गमिष्यामि।]

जरती। णं होदु, दिल्लीणाधप्पसादं बिआरेहि।

[ननु भवतु, दिल्लीनाथप्रसादं (१) विचारय।]

वीरा। बिआरिदो ज्जेब। [विचारित एव।]

जरती। कधं बिअ ? [कथमिव ?]

वीरा। घिणारिहो सो। [घृणार्हः सः।]

जरती। (सरोषम्) आ! मन्दभाइणि! महत्तमाणं खत्तिआणं धीआओ, महाराआणं देवीओ जं कामेदि सो दे घिणारिहो जादो! ता चिठ्ठ तुमं अहं एत्थ उबाअं पेक्खामि (इति क्रोधात् कानिचित् पदानि गच्छति)।

---

र्जितसर्व्वधनादिकं च प्रतिभूस्वरूपं स्वहस्ते रक्षितम्। तद्दण्डभियापि सा भावान्तरं न गमिष्यतीति मातुरपि निश्चय आसीत्। तदेव स्मारयन्ती माता तां भयं प्रदर्शयति—'स्मर तावद्' इत्यादिना 'ततस्ते भावान्तरम्' इत्यादिना च।

(१) भयप्रदर्शनेनापि दुहितुरभयं दृष्ट्वा लोभं प्रदर्शयति। 'दिल्लीनाथप्रसादं विचारय' इत्यनेन।

[ आः मन्दभागिनि ! महत्तमानां क्षत्रियाणां दुहितरः, महाराजानां देव्यो यं कामयन्ते, स ते घृणार्हो जातः ! तत्तिष्ठ त्वम् , अहमत्रोपायं प्रेक्षे । ]

वीरा । अम्ब ! मा कुप्प सुमर दाव देवीए अह्मेसुं अपुव्वं सिणेहानुबंधं देवस्स अ करुणापुण्णं देवभावं ।

[ अम्ब ! मा कुप्य स्मर तावद् देव्या अस्मासु अपूर्व्वं स्नेहानुबन्धम् , देवस्य च करुणापूर्णदेवभावम् । ]

जरती । ( स्वगतम् ) तुह देवीए देवस्स अ सव्वस्स वा राअउलस्स सव्वणासं करिस्सं । ( इति सरोषं निष्क्रान्ता )

[ तव देव्या देवस्य च सर्व्वस्य वा राजकुलस्य सर्व्वनाशं करिष्यामि । ]

वीरा । गदा अम्बा, ण आणामि किं करिस्सदित्ति, जं होदु, धम्मस्स जओ होदि, किदं मे चिंदाए, अहं विणोदट्ठाणं दाणीं गच्छामि । ( इति परिक्रम्य ) इमस्सिं णंदणआणण सरिसे देवपूआपुप्फुज्जाणे इंदासणतुल्लं एदं सिलादलं, इध अज्जउत्तो उववसदि । ( दिशोऽवलोक्य ) विजणो अअं देसो ता पुणोवि भणामि, अज्जउत्तो इध उववसदि, अज्ज उत्तो—अज्जउत्तो—( विमृश्य ) अह्मो पमादो मे, णिच्चओ किदो जं एव्वं ण भणामि, पुणोवि तधा भणिअदि, का अहं वाराङ्गणा देअतुल्लपवित्तं महाराअं अज्जउत्तत्ति भणिदुं, अधवा भणिदुं को दोसो ? ( विचिन्त्य ) जं किदं तं किदं पुणो अकज्जं ण करिस्सं । कमंपि अज्जउत्तं ण पाठइस्सं ।

[ गता अम्बा, न जानामि किं करिष्यतीति, यद्भवतु, धर्म्मस्य जयो भवति,—कृतं मे चिन्तया, अहं विनोदस्थानमिदानीं गच्छामि, अस्मिन् नन्दनकानन-सदृशे (१) देवपूजापुष्पोद्याने इन्द्रासनतुल्यमेतच्छिलातलम्, इह आर्य्यपुत्र उपविशति। विजनोऽयं देशः, तत्पुनरपि भणामि आर्य्यपुत्र इह उपविशति, आर्य्यपुत्रः आर्य्यपुत्रः। अहो प्रमादो मे, निश्चयः कृतः यदेवं न भणामि, पुनरपि तथा भण्यते। का अहं वाराङ्गना देवतुल्यपवित्रं महाराजं आर्य्यपुत्र इति भणितुम्, अथवा भणितु को दोषः ? यत् कृतं तत् कृतं पुनरकार्य्यं न करिष्यामि। कपटेन आर्य्यपुत्रं न पातयिष्यामि ।]

( नेपथ्ये—'देअ सुहाअर किरसु करं' इति गीतध्वनिः )।

वीरा। सुबलाए सरसंजोएण आणामि देवी आअच्छदि, दाणीं बि दूरे वट्टदि। ता जाव इमस्स सिलादलस्स प्फंसेण किदत्था होमि। ( इति स्पर्शमभिनीय ) अइ देव सिलादल ! (संस्कृतमाश्रित्य (२)) नहि नहि देवोपस्थानयोग्यः कालोऽयं नेदानीमहमपभ्रंशमाश्रयिष्ये। अयि देव ! शिलातल ! अद्य तावदपूर्व्वः सुखदिवसो मे, अपूर्व्वं ते स्पर्शसुखम्,—

---

(१) राज्ञोऽमरसिंहस्य तन्महिष्याश्च स्नेहकरुणापूर्णधर्म्मपूतव्यवहारेण मुग्धा वाराङ्गना कीदृशं पवित्रभावं गतेति वर्ण्यते—'अस्मिन् नन्दनकाननसदृशे' इत्यादिना। (२) 'योषित्सखीबालवेश्याकितवाप्सरसां तथा। वैदग्ध्यार्थं प्रदातव्यं संस्कृतं चान्तरान्तरा॥' इति साहित्यदर्पणोक्त्या वेश्यायाः संस्कृतभाषया कथनमन्तरान्तरोचितमिति।

[ सुवलायाः स्वरसंयोगेन जानामि—देवी आगच्छति, इदानीमपि दूरे वर्त्तते । तद्यावदेतस्य शिलातलस्य स्पर्शेन कृतार्थां भवामि । अयि देव शिलातल ! ]

स्पृष्टं मया मसृणकोमलपुष्पमाल्यं
स्पृष्टं त्वयैव सदृशं वरवीरवक्षः ।
स्पृष्टश्च मन्दमलयाचलगन्धवाहो
नैवंविधं सुखमुपादधति स्म दिव्यम् ॥ (१)

( इति निमीलितनयना तिष्ठति )

ततः प्रविशति गायन्त्या सुवलयानुगम्यमाना देवी ।

( गीतम् )

सुवला । देअ सुहाअर किरसु करं
दिणअरदुज्जअतिमिरहरं
भजउ मही हिमणिम्मलवण्णं
मलिणं रूवं मुञ्चउ तुण्णं ।

---

(१) स्पृष्टं मयेत्यादि—। मया स्पृष्टं मसृणकोमलपुष्पमाल्यं स्पृष्टं त्वयैव सदृशं वरवीरवक्षः स्पृष्टः मन्दमलयाचलगन्धवाहश्च एवंविधं दिव्यं सुखं न उपादधति इत्यन्वयः । अतिकोमल-पुष्पमाल्यस्पर्शे तथा शिलातलसदृशकठिनवीरपुरुषवक्षः-स्पर्शे कोमलकठिनस्पर्शविजातीयदक्षिणवायुस्पर्शेऽपि मम तादृशं सुखं न जातं यथात्र महाराणामरसिंहस्यासनभूतशिलातलस्पर्शे स्वर्गीयं सुखं भवतीति समुदितार्थः । स्पर्शानां भेदान्नानवीकृतत्वदोषः । वारनारीतया वीरवक्षःस्पर्शः सम्भवतीति तथाविधाक्षेपः गच्छति । अत्र तुल्ययोगिताविभावनालङ्कारौ ।

तुज्झ सुहोदअ-लालस-हिअअं
कुमुदं सेवउ विमलं अमिअं।
पेक्ख चओरीं गाढ़पिआसं
कुणसु अ संतं मा क्खु णिरासं
दुअराओत्ति सि विदिदो भुवणे
पणदिसदं मम अइ तुह चरणे ॥

[ देव सुधाकर किर करं दिनकरदुर्ज्जयतिमिरहरम्।
भजतु मही हिमनिर्म्मलवर्णं मलिनं रूपं मुञ्चतु तूर्णम्।
तव सुखोदय-लालसहृदयं कुमुदं सेवतां विमलममृतम् ॥
प्रेक्षस्व चकोरीं गाढ़पिपासां कुरु च शान्तां मा खलु निराशाम्।
द्विजराज इत्यसि विदितो भुवने प्रणतिशतं मम अयि तव चरणे॥](१)

---

(१) देव सुधाकर दिनकरदुर्ज्जयतिमिरहरं करं किर, मही हिमनिर्म्मलवर्णं भजतु तूर्णं मलिनं रूपं मुञ्चतु। तव सुखोदयलालसहृदयं कुमुदं विमलम् अमृतं सेवताम्। गाढ़पिपासां चकोरीं प्रेक्षस्व शान्तां कुरु च मा खलु निराशां (कुरु) भुवने द्विजराजः इति विदितः असि, अयि तव चरणे मम प्रणतिशतम्। इत्यन्वयः।

हे देव सुधाकर चन्द्र! दिनकरदुर्ज्जयतिमिरहरं सूर्येणापि दुरपनेयं यत् तिमिरं नैशान्धकारं तन्नाशकं करं किरणं किर विनर। मही पृथिवी हिमनिर्म्मलवर्णं हिमवत् निर्म्मलं ज्योत्स्नापातेन स्वच्छं वर्णं भजतु प्राप्नोतु, तूर्णं सत्वरं मलिनं रूपं तिमिरमलिनात्मतां मुञ्चतु त्यजतु। तव सुखोदयलालसहृदयं सुखकरे उदये लालसम् अतिस्पृहं हृदयं यस्य तत् कुमुदं विमलं स्वच्छम् अमृतं किरण-रूपां सुधां सेवताम्। गाढ़पिपासाम् अतिशयतृष्णातुरां चकोरीं पक्षिणीविशेषं शान्तां

देवी । हला साहु गीदं । इमस्सिं भूमंडले अज्जउत्तो ज्जेव एक्को दुअराओ क्खत्तिओ राआ अ ता अहं वि भणामि—
दुअराओत्ति सि विदिदो भुवणे, पणदिसदं मम अइ तुह चरणे ।

---

कुरु च तदिपपासानिवृत्तिं कुरु इत्यर्थः मा खलु निराशां भग्नाशां कुरु । भुवने विश्वे द्विजराजः इति विदितः द्विजराजनाम्ना प्रसिद्धः असि, तव चरणे पदे मम प्रणतिशतं बहवः प्रणामाः सन्तु इत्यर्थः । शतशब्दः बह्वर्थवाची । अत्र चन्द्रस्तुति-व्याजेनामरसिंहस्तुतिः प्रस्तुतेति अप्रस्तुतप्रशंसालङ्कारः । प्रस्तुतार्थश्च एतत्पर-वर्त्तिना देवीवाक्येन परिस्फुटीकृतः ।

देवी अमरसिंहस्य महिषी । अस्य नाटकस्य नायिका—'नायकसामान्य-गुणैर्भवति यथासम्भवैर्युक्ता' इति साहित्यदर्पणोक्तनायिकालक्षणस्य प्राप्तत्वाद् वीररसप्रधाननाटकस्यास्य नायिकापि धीरोदात्त-युद्धवीरनायकोचित-यथासम्भवगुण-विशिष्टेति पुरस्तात् प्रतीतं भविष्यति । इयं स्वीया ; 'विनयार्ज्जवादियुक्ता गृहकर्म्मपरा पतिव्रता स्वीया' विनयसारल्यादियुक्तत्वं पातिव्रत्यञ्च एतन्नायिका-चरित्रे सर्वथा परिस्फुटम् । भर्त्तुः समानव्रतचारित्वमित्यस्य पतिव्रता-लक्ष-णत्वेन निगूढं रणकर्म्मणि सहायभूतापि गृहकर्म्मपरेति सर्व्वैर्ज्ञायमाना स्थितेति न 'स्वीया' लक्षणव्याघातः । संस्कृतसाहित्येऽस्मत्परिचिते एतादृशचरित्रसृष्टिरभि-नवैवेति सुधियो विभावयन्तु ।

चन्द्रस्य द्विजराजत्वे प्रमाणम्—'नक्षत्रग्रहविप्राणां वीरुधाञ्चाप्यशेषतः । सोमं राज्ये न्यधाद् ब्रह्मा यज्ञानां तपसामपि' ॥ इति कूर्म्मपुराणवचनम् । द्विजराज इत्यसीति सङ्गीतांशस्य पुनरावृत्त्या देवी अप्रस्तुतेन चन्द्रेण प्रस्तुतम-मरसिंहं प्रत्याययति । तत स्फुटीकृतम्—आर्य्यपुत्र एवैको द्विजः क्षत्रियो राजा चेत्येष

[ सखि साधु गीतम् । अस्मिन् भूमण्डले आर्य्यपुत्र एव एको द्विजराजः क्षत्त्रियो राजा च । ,तदहमपि भणामि,—द्विजराज इत्यसि विदितो भुवने प्रणतिशतं मम अयि तव चरणे ।]

सुबला । भट्टिणि, इमस्स अपुव्वकुमुदस्स चरणे वि मम पणादीणं सदं जं सुहाअरादो चओरीए वि संतिं कामेदि ।

[ भर्त्त्रि ! अस्य अपूर्व्वकुमुदस्य (१) चरणेऽपि मम प्रणतीनां शतम्, यत् सुधाकरात् चकोर्य्या अपि शान्तिं कामयते । ]

देवी । हला सुबले ! अपुण्णमंडलोअओ दाणीं वि अज्जउत्त-सुहाअरो, रिबु-तिमिरं अज्जवि ण दूरीहोदि, ण अ मेआरभूमी मलिणत्तणं मुंचदित्ति, असंतं कुमुदं चओरी-संति-कामणाव्वबदेसेण अत्तणो संतिं कामेदि किंतु ण आणामि अज्ज कामणाए को परिणामो भविस्सदि ( इति निश्वसिति ) ।

---

(१) अपूर्व्वकुमुदस्य = आश्चर्य्यकुमुदस्य । अत्र कुमुदपदेन चन्द्रदयिता-साम्याद् राजदयिताया महिष्या ग्रहणम् । 'अपूर्व्व'पदस्य व्याख्यानमाह—यत्सुधा-करात् चकोर्य्या अपि शान्ति कामयत इति । सामान्यतः कुमुदस्य चकोरीमङ्गला-मङ्गलचिन्तैव न सम्भवति, महिषीलक्षणस्य कुमुदस्य तु चकोरीशान्तिकामितेति अपूर्व्वत्वं व्याख्यातम् । चन्द्रकराभिलाषिणी चकोरी, तत्साम्यात् चकोरीपदेन राजकराभिलाषिणी वीरा प्रतीयत इति सुबलावाक्यतात्पर्य्यम् । एतेन देव्या औदार्यं स्वसुखनिरपेक्षत्वञ्च ध्वनितम् ।

[ सखि सुबले ! अपूर्णमण्डलोदय (१) इदानीमपि आर्य्यपुत्र-सुधाकरः, रिपुतिमिरम् अद्यापि न दूरीभवति न च मेवारभूमिर्मलिनत्वं (२) मुञ्चतीति, अशान्तं कुमुदं चकोरीशान्तिकामनाव्यपदेशेन (३) आत्मनः शान्तिं कामयते । किन्तु न जानामि अद्य कामनायाः कः परिणामो भविष्यति । ]

सुबला । (सोद्वेगम्) कधं एव्वं भणादि भट्टिणी ।

[ कथमेवं भणति भर्त्री ? ]

देवी । जधा चओरी वीरा उम्मत्ता जादा तधा तक्केमि अज्जउत्तं अलहंतीए जीविदसंसओ से भविस्सदि । (४)

---

(१) अपूर्णमण्डलोदय इत्यादिना—सुबलोक्तप्रशंसावचनं विनयेनान्यथा प्रतिपादयति देवी । अपूर्णमण्डलोदयः = पूर्णं मण्डलम् अखण्डबिम्बम् अथच पूर्णं चितोरसहितम् अखण्डं राज्यम्, तस्य उदयः उद्गमः, अथच अभ्युदयः, नास्ति पूर्णमण्डलोदयः यस्य सः । आर्य्यपुत्र-सुधाकरः, अत्र रूपकालङ्कारः ।

(२) मलिनत्वम् = पूर्णचन्द्रस्य ज्योत्स्नया धरणी समुज्ज्वला भवति, अन्यथा मलिना दृश्यते, मेवारभूमिपक्षे प्रधानभूतस्यैकदेशस्य पराधीनताकलङ्करूप-कालिमानम् इत्यर्थस्य गम्यत्वादेकदेशविवर्तिरूपकम्, अशान्तं कुमुदम् = शान्ति-रहितं कुमुदमित्यनेन चितोरोद्धारविषयकदुश्चिन्ताग्रस्ता स्वयं परामृश्यते ।

(३) चकोरीशान्तिकामनाव्यपदेशेनात्मनः शान्तिं कामयते—वीरा सुखिनी भवतु इति तु मे छलमात्रम्, तदीयसुखप्रयोजकः चितोरोद्धार एव मे शान्ति-दायकः, स एव मदीयः स्वार्थः, स्वार्थवशादेवाहं चकोरीशान्तिं कामये न तु चकोरीशान्तिर्मे लक्ष्यीभूतेति विनयेन सुबलाकृतस्वप्रशंसामाच्छादयति । एतेन देव्याश्चरितमतीव औदार्य्यप्रकाशकमिति सहृदयवेद्यम् ।

[ यथा चकोरी वीरा उन्मत्ता जाता तथा तर्कयामि—आर्य्यपुत्र-मलभमानाया जीवितसंशयोऽस्या (१) भविष्यति । ]

सुबला । ता किं भट्टा भट्टिणीए पत्थिदोवि ण इमं गेह्निस्सदि ?

[ तत् किं भर्त्ता भर्त्र्या प्रार्थितोऽपि न इमां ग्रहीष्यति ? ]

देवी । तादस्स पड़िण्णाणिअमेण अणुद्धरिअ चिदोरं ण दुईअं दारं ग्गहिदुं समत्थो अज्जउत्तो । अज्ज सामंतेहिं चिदोरक्कमणमंतणा भविस्सदि । जइ णाम सामंताणं तस्सिं अभिमदं दीसदि ण क्खु अज्जउत्तो तस्सिं प्पउट्टिस्सदि ।

[ तातस्य प्रतिज्ञानियमेन (२) अनुद्धृत्य चितोरं न द्वितीयान् दारान् ग्रहीतुं समर्थ आर्य्यपुत्रः । अद्य सामन्तैः (३) चितोराक्रमण-

(१) जीवितसंशयः = प्राणविषयकः सन्देहः, प्राणाः स्थास्यन्ति नवेति-प्रकारकः । (२) तातस्य प्रतिज्ञानियमेन = प्रथमाङ्के यदुक्तं राज्ञा 'नियमपरतन्त्र-श्चाहमित्या'दि तदेव परिस्फुटीक्रियते—तातस्य प्रतापसिंहस्य, प्रतिज्ञया यो नियमः स्ववंश्यान् प्रति विधिनिषेधरूपः, तेन प्रतिज्ञानियमेन ; निषेधरूपो नियमो यथा अनुद्धृत्य चितोरं न द्वितीयान् दारान् ग्रहीतुं समर्थ आर्य्यपुत्र इत्यादिः । प्रकृतोपयोगितया इदानीं नियमांशोल्लेखः, पश्चात् प्रतिज्ञानियमान्तराणि व्यक्तीभविष्यन्ति । (३) 'सामन्तानामत्राभिमतिमुपलब्धुं पुनरपि यत्नमाचरिष्यामि' इति यदुक्तममरसिंहेन, तस्यैव फलरूपा चितोराक्रमणमन्त्रणात्र देवीवाक्येन सूच्यते—अद्य सामन्तैरित्यादिना ।

मन्त्रणा (१) भविष्यति। यदि नाम सामन्तानां तस्मिन् अनभिमतं दृश्यते न खलु आर्य्यपुत्रः तस्मिन् प्रवर्त्तिष्यते।]

**सुबला। भट्टिणि! भट्टिणं निहुदं रक्खंतीए एक्काइणीए जाए जवणदस्सुवीराश्रो णिहदाश्रो सा ज्जेव देवी रणचंडी सश्रं वट्टदि, श्रह्मे श्र दासिश्राश्रो, ता किं सामंतेहिं?**

[भर्त्रि! भर्त्तारं निभृतं रक्षन्त्या एकाकिन्या यया जवनदस्युवीराः निहताः, सैव देवी रणचण्डी स्वयं वर्त्तते वयं च दास्यः। तत् किं सामन्तैः (२)?]

---

(१) चितोराक्रमणमन्त्रणा = चितोराभियानं कर्त्तव्यं न वेति रहसि विचारणा। सामन्तानां सम्मत्यलाभे चितोराभियानं न कर्त्तव्यम् पितृनिदेशेनेत्यादिकं प्रथमाङ्के समुल्लिखितम्।

(२) भर्त्रीत्यादि—। प्रथमाङ्के वीरदत्तानुयायिनां दस्युरूपिणां जवनानां निधनं वर्णितम्, यद्दर्शनेन समरसिंहस्य महान् विस्मयो जातः, तद्रहस्यमिदानीमुद्घाट्यते। उदयपुरसीमान्तभागरक्षणकर्म्मणि 'अहो शिथिलरक्षा मे मेवारभूमि'रित्याद्यमरसिंहोक्त्या सूचितं किञ्चिदालस्यं समाहर्त्तुं राज्ञीनाम्, परन्तु परमोत्साहशौर्य्यधैर्य्यसम्पन्ना राजमहिषी निभृतं सुबलाप्रमुखनारीणामेकां सैन्यश्रेणिं संघटय्य सर्वतः सावधाना स्थिता। अमरसिंहस्यानुचररहितस्य कापटिकेन समरसिंहेन चितोरदिशि नयनेऽनिष्टाशङ्किनी वेषान्तरिता च तं गूढमनुससार। अत्रान्तरे वीरदत्तायाः शिबिकां गृहीत्वा पलायमानानां दस्युच्छद्मनां जवनानां रक्षिभिः सह कृत्रिमयुद्धे प्रारब्धे वास्तवबुद्ध्या एकयैव तया सर्व्वेषां जवनानां वनान्तरादतर्कितबाणपातेन निधनं कृतमिति सुबलावाक्यतात्पर्यम्।

देवी। कुलरीदी इअं जं सामंताणं अणुवट्टणं णाम।

[ कुलरीतिरियं यत् सामन्तानामनुवर्त्तनं नाम। ]

सुवला। जइ एव्वं ता आणामि अज्ज अज्जाए वीराए जीवणमरणाणं संधिदिणं।

[ यद्येवं तद् जानामि अद्य आर्य्याया वीराया जीवनमरणयोः सन्धिदिनम् (१)। ]

देवी। अधइं अदो ज्जेव वीरा अण्णेसिअदि।

[ अथ किं, अतएव वीरा अन्विष्यते। ]

वीरा। अह्मो! सण्णिहिदा ज्जेव भट्टिणी। ता उवसप्पेमि। ( उपसृत्य ) जेदु जेदु भट्टिणी।

[ अहो सन्निहितैव भर्त्त्री, तदुपसर्पामि। जयति जयति भर्त्त्री। ]

देवी। ( सोत्कण्ठम् ) एहि बहिणि वीरे! सव्वं दिणं तुमं ण पेक्खामि। परिस्सज मं।

[ एहि भगिनि वीरे! सर्व्वं दिनं त्वां न प्रेक्षे। परिष्वजस्व माम्। ]

वीरा। ( परिष्वज्य स्वगतम् ) अह्मो सिणेहो अह्मो उदारत्तणं। सवत्ती होदुं आअदत्ति परिण्णादं बि मं, दुईअं अप्पाणं विअ सम्भावेदि। अहं उण कवड़णिउणा केवलं इमं वंचेमि। ( प्रकाशम् ) भट्टिणि! असरिसो अअं जणो इमस्स सिणेहस्स। ( इति रोदिति )।

---

(१) जीवनमरणयोः सन्धिदिनम् = जीवनमरणयोः सन्धिः संयोजनदिनम्, अद्य जीवनम्, एतद्दिनात् परं मरणं निश्चितमिति संयोजनम्।

[ अहो स्नेहः, अहो उदारत्वम् । सपत्नी भवितुम् आगतेति परिज्ञातामपि मां द्वितीयमात्मानमिव (१) सम्भावयति (२) । अहं पुनः कपटनिपुणा केवलमिमां वञ्चये । भत्त्रि ! असदृशोऽयं जनः अस्य स्नेहस्य ।]

देवी । वहिणि ! मा उत्तम्म, भअवंतं एक्कलिंगणाधं भअवदीं चिदोरेस्सरीं अ सरणं पडिवज्जस्स, आसा पुण्णा भविस्सदि ।

[ भगिनि ! मा उत्ताम्य । भगवन्तमेकलिङ्गनाथं भगवतीं चितोरेश्वरीं च शरणं प्रतिपद्यस्व, आशा पूर्णा भविष्यति । ]

वीरा । ( स्वगतम् ) भट्टिणी आणादि—भट्टिणी कारणादो रोइमि, ण उण आणादि पापआरिणी अहं असरिसी भट्टिणोत्ति, असहणिज्जं दाणीं संवुत्तं त्ति रोइमि । ता सव्वं पकाशेमि । अधवा चिट्ठदु दाणीं ओसरं पालेमि ।

[भर्त्री जानाति भर्तुः कारणतः रोदिमि, न पुनर्जानाति पापकारिणी अहम् असदृशी भर्तुरिति । असहनीयमिदानीं संवृत्तम् । तत् सर्वं प्रकाशयामि, अथवा तिष्ठत्विदानीम्, अवसरं पालयामि । ]

देवी । ( स्वगतम् ) चिदोरक्कमणस्स समत्थओ कवड़ी समरसिंघोत्ति संका होदि तस्स अवसरणं पढ़मं जह होदि तह करिअदि । ( प्रकाशम् ) वहिणि ! सव्वं हि देव्वाअत्तं, अह्माणं चिदोरं जवणहत्थे णिग्गहिदं भोदि, अह्मे उण जीवह्म,

---

(१) द्वितीयमात्मानमिव=स्वकीयं शरीरान्तरमिव । (२) सम्भावयति=आद्रियते ।

एव्वं असहणिज्जं दुक्खं अण्णं सुहं वा देव्वेण जधा उवणीदं तधा अनुहोदव्वं । ता मा चिन्तेहि, अज्ज चिदोरक्कमणमंतणं तेल्लोअनाधस्स एक्कलिंगणाधस्स पसाएण सुहफलं भविस्सदि ।

[ चितोराक्रमणस्य समर्थकः कपटी समरसिंह इति शङ्का भवति, तस्य अपसरणं यथा भवति तथा क्रियते। भगिनि ! सव्वं हि दैवायत्तं, अस्माकं चितोरं जवनहस्ते निगृहीतं भवति, वयं पुनर्जीवामः । एवम् असहनीयं दुःखम् अन्यत् सुखं वा दैवेन यथोपनीतं तथा अनुभवितव्यम् । तन्मा चिन्तय, अद्य चितोराक्रमणमन्त्रणं त्रैलोक्य-नाथस्य एकलिङ्गनाथस्य प्रसादेन शुभफलं भविष्यति । ]

वीरा । ( साशङ्कम् ) मा मे सुहं होदु, चिदोरक्कमण-मंतणादो णिव्वट्टेहि महाराअं । ( स्वगतम् ) जदो आणामि देवस्स महाराअमाणसिंघस्स अहिमदं चिदोरक्क-मणं । ( प्रकाशम् ) मम मन्दभाइणीए कारणादो अअं बलवन्तेहिं विरोहो अकरणिज्जो ज्जेव ।

[ मा मे सुखं भवतु, चितोराक्रमणमन्त्रणातो निवर्त्तय महाराजम् । यतः जानामि देवस्य महाराजमानसिंहस्य अभिमतं चितोराक्रमणम् । मम मन्दभागिन्याः कारणात् अयं बलवद्भिः सह विरोधोऽकरणीय एव ।]

देवी । अइ उव्वाहणिरपेक्खे ! अत्तणो परिणामं चिंतेहि ।

[ अयि उद्वाहनिरपेक्षे (१), आत्मनः परिणामं चिन्तय । ]

वीरा । देवि ! असरिसी अहं उव्वाहस्स । चिरं जीवदु भट्टा अहं तं पेक्खिअ जीविदं धारइस्सं ।

[ देवि ! असदृशी अहम् उद्वाहस्य । चिरं जीवतु भर्त्ता, अहं तं प्रेक्ष्य जीवितं धारयिष्यामि । ]

देवी । साहु बहिणि ! धण्णासि, जदो दे—

जहिं ण कामदुग्गंधो ण देसो कवड़ो ण वा ।
अप्पा विह्मरिदो जेण पणओ सो सुदुल्लहो ॥

[ साधु भगिनि, धन्यासि यतस्ते—

यत्र न कामदुर्गन्धो न द्वेषः कपटो न वा ।
आत्मा विस्मृतो येन प्रणयः स सुदुर्लभः ॥ ] (२)

वीरा । (स्वगतम्) कवड़ो ण वत्ति दहदि मे हिअअं ।

[ कपटो न वेति दहति मे हृदयम् । ]

---

(१) उद्वाहनिरपेक्षे=विवाहकामनारहिते ।

(२) यत्र कामदुर्गन्धो न, द्वेषो न, कपटो वा न, येन आत्मा विस्मृतः सः प्रणयः सुदुर्लभः । इत्यन्वयः । यत्र (प्रणये) कामदुर्गन्धः कामस्य रतेच्छायाः दुर्गन्धः दुष्टः सम्बन्धः न नास्ति, द्वेषो वैरं न, प्रार्थितपुरुषस्योपेक्षादर्शनेन मानिनीनां क्रोध उदेति क्रोधाच्च वैरमिति प्रायशो मानिनीनां स्वभावो दृश्यते, वीरायास्तु तद्विपरीतः । कपटः छलं वा नास्ति, येन (प्रणयेन) आत्मा मनो विस्मृतः स्वार्थवर्जितः कृतः इत्यर्थः । स प्रणयः सुदुर्लभः दुष्प्रापः । अप्रस्तुत-प्रशंसा ।

(प्रविश्य) प्रतीहारी । जेदु जेदु भट्टिणी । भट्टा विण्णवेदि अब्भंतरसभामण्डवे चिदोरक्कमणमंतणं होदि, भोदीए अंतेउरमज्झकक्खट्ठिदाए सुणिदव्वं एदं ।

[ जयति जयति भर्त्री । भर्त्ता विज्ञापयति—अभ्यन्तरसभामण्डपे (१) चितोराक्रमणमन्त्रणं भवति । भवत्या अन्तःपुरमध्यकक्षस्थितया (२) श्रोतव्यमेतत् । ]

देवी । जं देवो आण्णवेदि । [ यद्देव आज्ञापयति । ]

वीरा । ( स्वगतम् ) हद्धी ! ता किं मम कारणादो एव्वं अणत्थो भविस्सदि ? ण हि ण हि ; जइ दीसदि चिदोरक्कमणं सव्वेहिं अणुमदं, तदो अप्पाणं निवेदइस्सं । ( प्रकाशम् ) मह अणुवट्टणं अणुआणाउ भट्टिणी ।

[ हा धिक् ! तत् किं मम कारणादेवम् अनर्थो भविष्यति ? नहि नहि यदि दृश्यते चितोराक्रमणं सर्वैरनुमतं तत आत्मानं निवेदयिष्यामि । इह मम अनुवर्त्तनम् अनुजानातु भर्त्री । ]

देवी । बहिणि ! इध अणुरोहो, ण अणुण्णाणं । भल्ले ! अह्माणं मग्गं कधेहि ।

[ भगिनि ! इह अनुरोधो मे, न अनुज्ञानम् । दासि ! अस्माकं मार्गं कथय । ]

प्रतीहारी । इदो इदो भट्टिणी । बहुलदीवालोअसमुब्भासिदो भट्टिणा सामंतेहिं अ अहिट्ठिदो इदो दीसदि ज्जेव

---

(१) अभ्यन्तरसभामण्डपे=प्रासादमध्यवर्त्तिसभाभवने । (२) अन्तः-

अब्भंतरसभामण्डबो, ता वाममग्गो अणुवट्टणिज्जो । (इति सर्व्वाः परिक्रामन्ति) ।

[ इत इतो भर्त्री । बहुलदीपालोकसमुद्भासितो (१) देवेन सामन्तैश्च अधिष्ठित इतो दृश्यते एव अभ्यन्तरसभामण्डपः । तत् वाममार्गोऽनुवर्त्तनीयः । ]

ततः प्रविशति राजा सामन्ताः समरसिंहश्च ।

नेपथ्ये—एको वैतालिकः ।

दिनकरकुलसिन्धोरिन्दुरिन्द्रोपमानः
सकलमनुजवन्द्यो निर्म्मलश्रीप्रतापः ।
अमरवपुरपूर्व्वत्यागविख्यातकीर्त्ति-
र्जयति जयति देशोद्धारबद्धैकदृष्टिः ।। (२)

---

पुरमध्यकक्षस्थितया = अवरोधस्य मध्यभागस्थगृहमधिष्ठायेत्यर्थः । (१) बहुलदीपालोकसमुद्भासितः = प्रचुरदीपानाम् आलोकेन समुद्भासितः उज्ज्वलः

(२) दिनकरेत्यादि—। (अमरसिंहपक्षे) इन्द्रोपमानः निर्म्मलश्रीप्रतापः सकलमनुजवन्द्यः अपूर्व्वत्यागविख्यातकीर्त्तिः अमरवपुः दिनकरकुलसिन्धोः इन्दुः जयति । इत्यन्वयः । इन्द्रोपमानः = इन्द्रतुल्यः निर्म्मलौ श्रीप्रतापौ सम्पत्तितेजसी यस्य सः, अमरवपुः महाराजोऽमरसिंहः वपुः शरीरं यस्य अथच अक्षयशरीरः । ( एतेन चन्द्रापेक्षया आधिक्यं सूचितम्, चन्द्रस्य क्षयवृद्धिमत्त्वात ) दिनकरकुलसिन्धोः सूर्य्यवंश एव समुद्रः तस्य इन्दुश्चन्द्रः । ( प्रतापसिंहपक्षे ) दिनकरकुलसिन्धोरित्याद्यर्थः पूर्व्ववत्, अमरवपुः देवशरीरं प्राप्तः अथच अमरसिंहरूपेणावस्थितः 'आत्मा वै जायते पुत्र' इति श्रुतेः । निर्म्मलश्रीः निर्म्मला पारतन्त्र्यादिदोपशून्या श्रीः राजलक्ष्मीर्यस्य सः, स चासौ प्रतापश्चेति महाराजः प्रतापसिंहो जयति इत्यन्वयमुखोऽर्थः । अन्यद् विशेषणद्वयमुभयपक्षे समानम् । अत्र [illegible] प्रस्तुतत्वात्, उपमा च ।

राजा। (स्वगतम्) अयोग्योऽहं पितृगौरवाधिकारे, तथापि गीतमिदं मे श्रवणं पुनातु।

(नेपथ्ये) अपरः।

कपटपटलदक्षे राष्ट्रपातैकलक्ष्ये
बहिरुपहितसख्येऽप्यन्तरुच्चैर्विपक्षे।
विहितसदयदृष्टिप्रेमपीयूषवृष्टि-
र्जयति नृपतिवर्य्यो हिन्दुसूर्य्योऽग्रयशौर्य्यः॥ (१)

देवी। (स्वगतम्) सुट्ठु गीदम् अह्माणं वेदालिएण।

[ सुष्ठु गीतम् अस्माकं वैतालिकेन। ]

---

(१) कपटपटलेत्यादि—। कपटपटलदक्षे राष्ट्रपातैकलक्ष्ये बहिः उपहित-सख्येऽपि अन्तः उच्चैर्विपक्षे (जने) विहितसदयदृष्टिप्रेमपीयूषवृष्टिः अग्र्यशौर्य्यः हिन्दुसूर्य्यः नृपतिवर्य्यः जयति। इत्यन्वयः।

कपटपटलदक्षे = कपटस्य शाठ्यस्य यत्पटलं समूहः तत्र दक्षे निपुणे नानाविधकपटजालविस्तारचतुर इत्यर्थः, राष्ट्रस्य देशस्य पातः स्वातन्त्र्यविघातः एकः अद्वितीयं लक्ष्यं यस्य तस्मिन्, बहिः बहिर्भागे मुखे इत्यर्थः, उपहितसख्ये = उपहितं धृतं सख्यं मैत्री येन स तस्मिन्, अन्तः अन्तःकरणे उच्चैः अतिशयेन विपक्षे शत्रुतापन्ने जने इति शेषः विहिता प्रदत्ता सदयदृष्टिरूपा प्रेमपीयूषवृष्टिः अनुरागामृतधारा येन सः, तादृशः अग्र्यशौर्य्यः श्रेष्ठवीर्य्यशाली 'हिन्दुसूर्य्यः' इत्यु-पाधियुक्तः, नृपतिवर्य्यः राजश्रेष्ठः अमरसिंह इत्यर्थः, जयति। एतेनामरसिंहस्य शत्रावपि वैषम्यराहित्यम् इति परमदयार्द्रचित्तता प्रदर्शिता, अथच भवान् शठेन बन्धुरूपेण समरसिंहेनाक्रान्त इति सावधानो भवतु, समरसिंहस्वरूपमपि सर्व्वै-र्ज्ञातमिति च भावार्थो व्यञ्जते।

सामन्ताः। (अन्योऽन्यं मुखमीक्षन्ते)।

समरः। (सरोषम् आत्मगतम्) सामन्तानाम् एवम् अस्मद्द्रोहप्रतिफलम् अचिरेण लभ्यम्।

प्रतीहारी। इदं अंतेउरं, ता इदो इदो भट्टिणी।

[इदमन्तःपुरं, तदित इतो भर्त्री।]

इति सर्वाः स्त्रियो निष्क्रान्ताः।

राजा। (स्वगतम्) सर्व एव समरसिंहविद्वेषिणः। अस्त्वेवम्, प्रकृतमवतारयामः। (प्रकाशम्) भोः भोः सामन्तशिरोमणयः! (१) भवन्त एव मे सुगृहीतनाम्नस्तातस्य सर्व्वस्वम्। भवतामेव हृदयशोणितेन बहुशः परितर्पिता चामुण्डा (२) तस्मै विजयकीर्त्तिप्रसादमर्पयामास तन्मन्ये स्मरन्ति भवन्तः पितुरन्तिमामवस्थाम्।

सामन्ताः। (सास्रम्) महाराज! कथं न स्मरामः?

आताम्रदीर्घनयनद्वयमुक्तमुक्ता-
स्थूलाश्रुसन्ततिमपाङ्गतटाद्गलन्तीम्।
हा हा चितोर! न तवोद्धरणं मयाभू-
दित्थं विलापबहुलां सततं स्मरामः॥ (३)

---

(१) सामन्तशिरोमणयः = सामन्तश्रेष्ठाः। (२) चामुण्डा = दुर्गाया रूपभेदः। पार्व्वतीललाटनिष्क्रान्ता चण्डमुण्डवधकारिणी देवी; रणसिद्धिदायिनीति प्रसिद्धिः। चामुण्डा-नामकारणं सप्तशतीग्रन्थे यथा,—'यस्माच्चण्डञ्च मुण्डञ्च गृहीत्वा त्वमुपागता। चामुण्डेति ततो लोके ख्याता देवि भविष्यसि'।



(३) आताम्रेत्यादि—। हा हा चितोर मया तवोद्धरणं नाभूदित्थं विलाप-

राजा ( सगद्गदम् ) साधु ! साधु ! तदद्य पृच्छामि चितोरनगराक्रमणकर्म्मणीयन्तं कालमुदासीनैरस्माभिः किं नापराद्धं तातस्य !

सामन्ताः । देव ! तस्मान्निवृत्तस्य जीवत एव तत्रभवतो महाराजस्य पदाङ्कमनुसरतां न तावदपराधोऽस्माकम् ।

राजा । हन्त ! भवन्तोऽप्येवं मोहमापन्नाः ।

चितोरनगरोद्धारो यस्य मोक्षाधिकः प्रियः ।
निवृत्तौ तस्य को हेतुरिति प्रागवधार्य्यताम् ॥ (१)

सामन्ताः । अवधारितमेवैतदस्माभिः । यद्बलवत्तमेन दिल्लीपतिना परित्यक्तमपि संग्रामं चितोराक्रमणेन

---

बहुलाम् अपाङ्गतटाद् गलन्तीम् आताम्रदीर्घनयनद्वयमुक्तमुक्तास्थूलाश्रुसन्ततिं सततं स्मरामः इत्यन्वयः । हा हा इति खेदे, हे चितोर मया मत्कर्तृकं तव उद्धरणं पराधीनतापनयनं न अभूत् इत्थम् एवं विलापबहुलाम् = अनेकदुःखपूर्णोक्तिसहिताम्, अपाङ्गतटात् = नयनप्रान्तभागात्, गलन्तीम् पतन्तीम्, आताम्रम् ईषल्लोहिताभं यत् नयनद्वयं तस्मात् मुक्तां क्षरितां मुक्तावत् स्थूलाम् अश्रुसन्ततिं जलधारं सततं सर्व्वदा स्मरामः । उपमालङ्कारः ।

(१) चितोरनगरेति—। यस्य प्रतापसिंहदेवस्य चितोरनगरोद्धारः चितोरनगरस्य स्वाधीनतानयनं मोक्षाधिकः मुक्तेरपि अधिकः प्रियः आसीत्, तस्य प्रतापस्य निवृत्तौ तदुद्धारकार्यपरित्यागे को हेतुरिति प्राक्पूर्वं अवधार्यताम् निश्चीयताम् ।

पुनः प्रवर्त्तयतामनर्थ एवास्माकं भविष्यतीति तस्मान्निवृत्तः स्वर्गस्थो देव इति ।

राजा । शालुम्ब्रापते ! भवानप्येवं मन्यते ?

शालुम्ब्रा । देव ! वृद्धानां सर्व्वेषामेवास्माकमेष निश्चयः ।

राजा । अहो मोहः ! भवतु, कथं बलवत्तमो दिल्ली-पतिराकब्बरः संग्रामं परित्यक्तवान् ?

शालुम्ब्रा । सुगृहीतनाम्नो महाराजस्य गुणातिशय-दर्शनेनावर्ज्जितो (१) महानुभवतया (२) परित्यक्तवान् ।

राजा । ( सावेगम् ) वृद्धसामन्त ! वीर्य्यातिशय-दर्शनेन भीतः परित्यक्तवानिति ब्रूहि ।

गुणवानिति कः शत्रुं बलवान् समुपेक्षते ।
द्विजराजोऽयमिति किं राहुर्न ग्रसते विधुम् ॥ (३)

आश्चर्य्यम् !—अकरुणहृदो बालस्त्रीणां विनिग्रहतत्पराः
कपटपटवो धर्म्मज्ञानोज्झिता मलिनाशयाः ।
किमु न जवना भूयो भूयो भवद्भिरवेक्षिताः
कथमिति तथाप्येवं मोहैर्मनः परिभाव्यते ॥ (४)

---

(१) आवर्ज्जितः = आकृष्टः । (२) महानुभवतया = महामहिमतया ।

(३) गुणवानित्यादि—। बलवान् कः शत्रुं गुणवानिति समुपेक्षते राहुः द्विजराजोऽयमिति किं न विधुं ग्रसते । इत्यन्वयः । बलवान् विपक्षः कः गुणवत्त्वेन स्वकीयं शत्रुं पराभवितुं न यतते राहुः तमोग्रहः द्विजराजः द्विजानां राजा इति गुणवत्त्वेन किं चन्द्रं न ग्रसते कवलीकरोति अपि तु ग्रसत एव । दृष्टान्तालङ्कारः ।



(४) अकरुणेत्यादि—। अकरुणहृदो निष्ठुरचित्ताः बालस्त्रीणां

शालुम्ब्रा। देव! अन्येषु जवनेष्वियमुक्तिर्युज्यते न तु गुणग्राहिषु मोघलकुलसम्भवेषु (१) दिल्लीश्वरेषु।

राजा। जवनाः किल सर्व्वत्र तुल्यप्रकृतयः (२), पश्य—

आसीन्नानागुणौघैः प्रकटितमहिमा किं न संग्रामसिंह-
स्तं जेतुं छद्मकर्म्मा किमजनि न बली बाबरः पूर्व्वजोऽस्य ?
पृथ्वीराजं कवीन्द्रं विदितगुणगणं वीरमाकब्बरोऽसौ
वन्दीभूतं व्यधासीन्न किमहह विकानीर-राजानुजातम्॥ (३)

---

विनिग्रहतत्पराः पीड़नपरायणाः कपटपटवः छलपूर्णव्यवहारकुशलाः धर्म्मज्ञानोज्झिताः धर्म्मज्ञानेन सत्यादिसाधारणधर्म्मज्ञानेन उज्झिताः विहीनाः, मलिनाशयाः कलुषितचित्ताः जवनाः भूयो भूयः पुनःपुनः किमु प्रश्ने भवद्भिः सामन्तैरित्यर्थः न अवेक्षिताः दृष्टाः अपि तु दृष्टा एव, तथापि इत्येवम् मोहैः ईदृशैः मिथ्याज्ञानैः मनः कथम् परिभूयते आच्रियते इत्यर्थः।

(१) मोघलकुलसम्भवेषु = जवनराजानां कुलद्वयं भारतं शशास। एकं पाठानकुलम्, अन्यच्च मोघलकुलम्। बाबरहुमायुनाकब्बरादयः मोघलकुलसम्भवाः तेषु। मोघं हीनं लाति गृह्णाति, हीनवर्णं स्वपचादिकमपि स्वसम्प्रदाये स्वीकरोतीति मोघलः, वर्णभेदरहितत्वात् तस्य तद्ग्रहणं सम्भवति।

(२) सर्व्वत्र तुल्यप्रकृतयः = सर्व्ववंशेषु समानस्वभावाः।

(३) आसीदित्यादि—। संग्रामसिंहः नानागुणौघैः प्रकटितमहिमा किं नासीत्? अस्य पूर्व्वजः बली बाबरः तं जेतुं किं छद्मकर्म्मा न अजनि? अहह! असौ आकब्बरः विदितगुणगणं वीरं कवीन्द्रं विकानीरानुजातं पृथ्वीराजं किं वन्दीभूतं न व्यधासीत्? इत्यन्वयः।

संग्रामसिंहः सङ्ग इत्यपरनामा प्रतापसिंहस्य पितामहः नानागुणौघैः बहुविधगुणसमूहैः शौर्य्यसारल्यादिभिः प्रकटितमहिमा = प्रकाशितः महिमा

शालुम्ब्रा । अन्यत्राविचारितपूर्व्वापरवृत्तान्ते (१) यथा तथास्तु, मेवारसमरपरित्यागे तु बलवत्तमस्य तस्य गुणानुराग एव कारणम् ।

---

माहात्म्यं यस्य सः, किं न आसीदपि तु आसीदेव । अस्य आकव्वरस्य पूर्व्वजः पितामहः बली बलवान् वावरः मोघलेषु प्रथमो दिल्लीसिंहासनाधिरूढ़ः किं छद्मकर्म्मा छलं कर्म्मकर्त्ता न अजनि जातः अपि तु जात एव । संग्रामसिंहेन पराजितोऽपि वावरः संग्रामसिंहस्य सेनापतिं तुयारवंशीयं शिलादित्यं कथमपि वशीकृत्य संग्रामसिंहं पराभूतवानित्यैतिहासिकवार्त्ता भूमिकायां द्रष्टव्या । वावरः = वृञ्धातोः यङ्लुकि कृते अच्प्रत्ययः पुनःपुनः वृणाति आच्छादयति स्वपराक्रमेण शत्रुमिति तदर्थः । अहह ! असौ प्रसिद्धः आकव्वरः तन्नामा दिल्लीश्वरः ( दिल्लीश्वरो वा जगदीश्वरो वा' इति जयघोषणा यमुद्दिश्य प्रादुरभूत् ) विदितगुणगणम् = विदितः ज्ञातः गुणगणः यस्य स तम्, कवीन्द्रं कहाकविं विकानीरराजानुजातम् विकानीरराजस्य रायसिंहस्य अनुजातं कनिष्ठं वीरं पृथ्वीराजं किं वन्दीभूतम् अवरुद्धं न व्यधासीत् चकार, अपि तु चकारैव । विकानीरराजभ्राता महाकविः पृथ्वीराजः आकव्वरसभायां स्थितोऽपि वन्दीरूप एवासीत् । स खलु अतीव वीरः स्वाधीनचेता आसीदिति भिया तं कदाचिदपि दिल्लीनगराद् बहिर्गन्तुं नानुमेने इत्यैतिहासिकवार्त्ता ।

आकव्वरः = आकवां वरः, आ सम्यक् कवन्ते ये ते आङ्पूर्व्वक ( कवृ ) कवधातोः क्विप् आकवः वन्दिनः तेषां वरः तैर्वृत इत्यर्थः ।

विकानीरराजः = विशेषेण कासते दीप्यते इति विकाः ( वि + कास् + क्विप् ) तन्नामकः राजकुमारः, तस्य तत्सम्बन्धि नीरं यत्र तत् विकानीरं । विकानाम्ना राजकुमारेण मरुदेशे कृतजलागमव्यवस्थं नगरं स्थापितम् इति विकानीरम् तस्य राजा ।

(१) अन्यत्राविचारितपूर्व्वापरवृत्तान्ते = अन्यत्र मेवारयुद्धपरित्यागभिन्ने

राजा। स्वयमाकव्वरशाहो वा सेलिमो वा (१) मानसिंहो वा घोषयतु तावदेवं कविकथाभिः (२)। भवन्तोऽप्येवं ब्रुवन्ति! हा मेवारवसुन्धरे! बधिरा भवेद्वशेषु वृद्धतनयजल्पितेषु (३)।

येषां बलेन विदिता भरतावनीय-
मद्यापि तिष्ठति सनातनधर्म्ममार्गे।

---

स्थले अविचारितः न अनुशीलितः अस्माभिरिति शेषः। पूर्व्वापरः कारणकार्यरूपः आद्यन्तो ( )तान्तः वार्त्ता यस्मिन् तत् तादृशे। भवदुक्तस्थलेपु प्रकृतवृत्तान्तस्यानुशीलनमस्माभिर्न कृतमिति न किञ्चिदस्माकं तत्र वक्तव्यमस्तीति भावः।

(१) आकव्वरशाहः = आकव्वर एव शाह इति आकव्वरशाहः। अत्र आकव्वरनामा शाहः, इति मध्यपदलोपी कर्म्मधारयो वा। आकव्वरपदस्य व्युत्पत्तिः प्रदर्शिता, शाहपदं व्युत्पाद्यते—आजिहीते आहरति इति आङ्पूर्व्वकगत्यर्थकहाङ्धातोः कप्रत्ययः, क्लीवलिङ्गः श-शब्दो मङ्गलार्थः, शस्य मङ्गलस्य आहः आहर्त्ता शाहः मङ्गलाहर्त्तेत्यर्थः। सेलिमः = शेलृगतौ षेलृ इत्येके, सर्व्वे गत्यर्थाः धातवः प्राप्त्यर्था ज्ञानार्थाश्चेति षेलधातोर्ज्ञानार्थकत्वमपि, 'अन्येभ्योऽपि दृश्यन्ते' इति षेलधातोः कर्त्तरि मन्प्रत्ययः, षस्य सकारादेशः, ततश्च सेलिमा ज्ञानवान्; सेलिम्नः ज्ञानवतः आचष्टे ज्ञानिनामाख्यानं करोति—एते ज्ञानवन्त इति निर्दिशति यःसः, सुपस्तत् करोत्यादौ णिचि अच्प्रत्ययेन निष्पन्नः सेलिमः। अथवा सेलेन गत्या पितुरभीष्टसंगत्या निर्वृत्तः इति 'भावप्रत्ययान्तादिमव्वक्तव्यः' इति ( सि० कौ० १५७० सू० ) वार्त्तिकसूत्रेण इमप्प्रत्ययप्राप्त्या सेलिमपदं सिद्धम्। (२) कविकथाभिः = कल्पनाकुशलानां रचनाभिः।

(३) बधिरा भवेत्यादि = जराग्रस्तपुत्रस्य वचनानि मा श्रौषीः इत्यर्थः।

ते क्षत्रियाः स्वयमहो बलवीर्य्यशून्याः
कूटास्त्रयुद्धशरणा जवना बलिष्ठाः ॥ (१)

भो निजपराक्रमानभिज्ञ !

क्षुद्राणां दमने निसर्गपटवस्ते मानसिंहादयो
युष्मद्भीमपराक्रमानिलबलेनोत्सारितास्तूलवत् ।
वृत्तो वर्षगणः पुरन्दरपुरं यातस्तु तातस्ततो
नाद्याप्याक्रमणस्य वाचमपि ते वक्तुं क्षमन्ते भिया ॥ (२)

---

(१) येषां बलेनेत्यादि—। येषां क्षत्रियाणां बलेन पराक्रमेण विदिता सुपरिज्ञाता सर्व्वैरिति शेषः इयं भरतावनी भारतभूमिः अद्यापि अधुनापि सनातनधर्म्ममार्गे वेदबोधितधर्म्मपथे तिष्ठति, अहो विस्मये, ते क्षत्रियाः स्वयं कारणं विना स्वत एव बलवीर्य्यशून्याः सत्त्वशौर्य्यरहिताः, मन्यन्ते इति शेषः, कूटास्त्रयुद्धशरणाः कूटास्त्रैः यन्त्रमयैः मायामयैर्वा शास्त्रैर्यद्युद्धं योधनं तत् शरणं आश्रयो येषां ते जवनाः बलिष्ठाः प्रबलाः मन्यन्ते इति शेषः। वास्तवशौर्यसम्पन्नाः क्षत्रिया दुर्व्बलाः, छलपूर्व्वकयुद्धकारिणो वस्तुतो भीरवो जवनाः प्रबला इति मतेन विस्मयः। विषमालङ्कारः। विभावनाविशेषोक्त्योः सङ्करश्च।

(२) क्षुद्राणामित्यादि—। युष्मद्भीमपराक्रमानिलबलेन युष्माकं यो भीमपराक्रमानिलः शत्रूणां भयजनकः पराक्रमः अनिलः वायुः इव तस्य बलेन शक्त्या, क्षुद्राणां अल्पशक्तीनां राज्ञामित्यर्थः दमने निग्रहे निसर्गपटवः स्वभावतो निपुणाः ते मानसिंहादयः जवनराजपक्षीयाः प्रसिद्धाः अस्मत्प्रतिपक्षभूताश्च मानसिंहस्तथान्ये च जवनसेनापतयः तूलवत् तूला इव उत्सारिताः दूरं निक्षिप्ताः। वर्षगणः कतिपये वत्सरा वृत्तः अतीताः, तातः, तु समुच्चये, पितापि पुरन्दरपुरं स्वर्गं यातः प्राप्तः, अद्यापि अस्मिन्नपि समये भिया भयेन आक्रमणस्य युष्मान् प्रति अभियानस्य वाचमपि कथामपि वक्तुं न क्षमन्ते समनुवन्ति। अत्रोपमालङ्कारः।

हा देव प्रतापसिंह! भवदनुचराणामीदृशस्तेजोऽपकर्षः (१)। अथवा युज्यत एवेदं यतः—

याते प्रताप-तपने सहसा महास्तं
मेवारभूमिरखिला तिमिरावृतेयम्।
अत्र स्थिताः सुविमला मणिदर्पणाश्च
बिम्बत्विषा विरहिता न तथा विभान्ति ॥ (२)

शालुम्ब्रा। देव! प्रभुहितेष्वेव वर्त्तितव्यमनुजीविभि (३) र्न तु श्रुतिसुखेषु चाटुवचनेषु (४)। न च शत्रुरसावित्यकीर्त्तनीयगुणो भवति गुणश्लाघ्यः (५), तत्तरुणभावेन (६)

---

(१) तेजोऽपकर्षः = प्रतापलाघवम्।

(२) याते इत्यादि—। प्रतापतपने प्रतापसिंहरूपे सूर्य्ये सहसा अकस्मात् महास्तं चिराय अस्तं मरणम्, अथच अस्तगिरिप्रवेशं याते इयम् अखिला अखण्डा मेवारभूमिः तिमिरावृता शोकनिरुत्साहादिरूपान्धकाराच्छन्ना जातेति शेषः। अत्र मेवारभूमौ स्थिताः सुविमलाः स्वच्छाः मणिदर्पणाश्च मणयः सूर्य्यकान्ताद्यः दर्पणाः मुकुराः च सामन्तरूपाः इत्यर्थः विम्बत्विषा सूर्य्यमण्डलकिरणेन विरहिता वियुक्ताः न तथा पूर्व्ववत् विभान्ति शोभन्ते। विम्बाभावे प्रतिविम्बं न सम्भवतीति हेतोः एकेन प्रतापसिंहेन सर्व्वे प्रोत्साहिताः आसन्, तदभावे सामन्ताः निरुत्साहाः जाताः इति भावः। एकदेशविवर्त्तिरूपकालङ्कारः। बहुवचनान्तमणिदर्पणपदेन सामन्तानां गम्यत्वादेकदेशविवर्त्तिरूपकम्।

(३) अनुजीविभिः = भृत्यैः, प्रभुहितेष्वेव स्वामिनो मङ्गलकरविषयेष्वेव, वर्त्तितव्यम् = स्थातव्यम्। (४) चाटुवचनेषु = मिथ्यास्तुतिवाक्येषु। (५) न च शत्रुरित्यादि = 'शत्रोरपि गुणा वाच्याः' इति न्यायात् शत्रुश्चेद् गुणी भवति, तस्यापि गुणाः कथनीयाः इति भावः। (६) तरुणभावेन = यौवनमदेन।

वृद्धवचनमेतदसहनीयं यदि देवेन, तत् क्षम्यतामपराधस्तदवचन (१) मेवास्माकं श्रेयः ।

समरः । ( स्वगतम् ) अयमस्माकं समयः (२) । (प्रकाशं सोपहासम् ) सामन्तशिरोमणे ! जानाति किल देवो गुणश्लाघ्यः शत्रुः कीर्त्तनीयगुणो भवति, इदमपि जानाति यत् परमार्थतो (३) गुणहीनो बन्धुरपि क्षत्रियैरारोपितगुणो (४) न स्तूयते (५) । न हि क्षत्रबीजविनाशलालसो (६) धूर्त्तो दिल्लीश्वरो वस्तुतो गुणश्लाघ्यः, यं क्षत्रियः स्तोतुमर्हति (७) ।

भगसिंहः । अरे प्रच्छादितात्मन् (८) ! अविज्ञात-

---

(१) अवचनम् = मौनम् ।

(२) समयः = अवसरः । (३) परमार्थतः = वस्तुतः । (४) आरोपितगुणः = आरोपिताः मिथ्यान्यस्ता गुणाः क्षत्रियोचिताः शौर्य्यादयः यस्मिन् सः तादृशः । (५) स्तूयते = प्रशस्यते ।

(६) क्षत्रबीजविनाशलालसः = सङ्करदोषेण भारतं निःक्षत्रियं कर्त्तुकाम इत्यर्थः ।

(७) वस्तुतो गुणवतः शत्रोः गुणाः वाच्याः, वस्तुतो गुणहीनस्य बन्धोरपि तस्मिन् गुणारोपपूर्व्वकस्तुतिर्न युक्ता । जवनराजः क्षत्रियजातेरुन्मूलनकाम इति तस्यातिधूर्त्तनया न गुणवत्त्वम्; यः क्षत्रियः स न गुणहीनं जवनं स्तौति, शालुम्त्रापतिस्तथा करोति, अतस्तस्य क्षत्रियत्वमेव सन्दिग्धमिति समरसिंहवचनतात्पर्यम् ।

(८) प्रच्छादितात्मन् = कापटिक

जाते (१) ! महापातकिन् ! सामन्तचूड़ामणिं (२) शालुम्ब्रा-पतिमक्षत्रियत्वव्यङ्गेनाधिक्षिपसि (३) ? अरे मूढ़ !

पित्र्यं राज्यं तृणमिव जहौ यः सुरैरप्यभीष्टं
स्वीयं वाप्पाकुलमतितरामत्ययाद् यो ररक्ष ।
यस्यामर्षप्रबलदहनज्वालनिर्दग्धकायो
राठोरेशः, क इव कुलजस्तं न मन्येत चण्डम् ॥ (४)

---

(१) अविज्ञातजाते = अविज्ञाता अनिश्चिता जातिः जन्म यस्य । (२) सामन्तचूडामणिम् = सामन्तश्रेष्ठम् । (३) अक्षत्रियत्वव्यङ्गेन = शालुम्ब्रा-पतिः क्षत्रिय एव न इतीङ्गितप्रकाशेनेत्यर्थः, अधिक्षिपसि = निन्दसि ।

(४) पित्र्यमित्यादि—। यः सुरैः अपि अभीष्टं पित्र्यं राज्यं तृणमिव जहौ, यः स्वीयं वाप्पाकुलम् अतितराम् अत्ययाद् ररक्ष, राठोरेशः, यस्य अमर्षप्रबलदहन-ज्वालनिर्दग्धकायः (अभूत्) कुलजः क इव तं चण्डं न मन्येत । इत्यन्वयः । यः चण्डसिंहः चूँड़ासिंह इति प्रचलितनामा सुरैरप्यभीष्टं देवानामपि काम्यम् पित्र्य पितुर्लक्षसिंहात् आगतं पैतृकं राज्यं तृणमिव जहौ परित्यक्तवान्, यः स्वीयं निजं वाप्पाकुलं वाप्पावंशम् अतितरामत्ययात् अत्यन्तविपदः धूर्तराठोरपतिकर्तृकमेवार-राजगुप्तवधपूर्वकतद्राज्यापहाररूपमहापदः ररक्ष रक्षितवान्, राठोरेशः राठोरेति प्रसिद्धक्षत्रियवंशीयभूपतिः राजपुतानान्तर्गतमाडवाराख्यदेशाधिपतिः रणमल्लनामा, यस्य चण्डस्य अमर्षः क्रोधः तत्स्वरूपः यः प्रबलदहनः महान् अग्निः तस्य ज्वालेन शिखया उत्तापेन च निर्दग्धकायः भस्मीकृतशरीरः अभूदिति शेषः कुलजः सत्कुलसम्भूतः कः इव को नाम तं चण्डं न मन्येत नाद्रियेत । अपि तु मन्येत एव । शालुम्ब्रापतिः किल चण्डवंशीयः इति भावः ।

चण्डसिंहो राठोरराजदुहितृगर्भजस्य स्ववैमात्रेयभ्रातुर्मुकुलस्य कृते पैतृकं

तद् भल्लाङ्कादधःस्थानं नाम मेवारभूपतेः ।
तद्वंशप्रभवान् को हि नार्च्चयेत् क्षत्रियो यदि ॥ (१)

त्वं पुनर्धनकणलोभादन्यस्मिन् पितृत्वमारोपयन्नविलज्जमानो नीचः कथमेतान् गणयिष्यसि !

राजा । ( सरोषम् ) भणसिंह ! नैतदनुरूपं भवतः ।

समरः । ( स्वगतम् ) मास्तु चितोराक्रमणं भवतु तावद्-

---

मेवारराज्यं तत्याज । मृतपतिका मुकुलजननी पितृकुलोपजाता चण्डं रक्षकरूपेण स्थितमपि अविश्वसती राज्याद्बहिर्गन्तुमादिदेश । चण्डस्य बहिर्गमनानन्तरं मुकुलस्य मातामहादयः राठोरराज्यात्समागम्य तथा प्रभावमातनोद् येन मुकुलस्य वाप्पाकुलस्य च सत्ताविलोपः सम्भावित आसीत् । परस्तात् मुकुलजनन्या समाहूतश्चण्डो राठोरेशं सपरिकरं निगृह्य वाप्पाकुलं मुकुलञ्च ररक्ष । अस्य विवरणम् भूमिकायां द्रष्टव्यम् ।

(१) तद्भल्लेत्यादि—। मेवारभूपतेर्नाम तद्भल्लाङ्काद् अधःस्थानम्, यदि क्षत्रियः ( स्यात् ) को हि तद्वंशप्रभवान् न अर्चयेत् । तस्य चण्डसिंहस्य भल्लः शस्त्रविशेषः तस्य अङ्कः चिह्नं तस्मात् अधः निम्ने स्थानं स्थितिर्यस्य तत् तादृशं मेवारभूपतेः मेवारराजस्य नाम भवतीति शेषः । शासनपत्रादिषु उपरि चण्डसिंहस्य भल्लास्त्रचिह्नं तन्निम्ने मेवारराजस्य नामाक्षराणि लिख्यन्ते, इति भावः । एतेन चण्डसिंहस्य महद्गौरवं मेवारनाथेनापि प्रदत्तम् इति ध्वनिः यदि क्षत्रियः, जात्या क्षत्रियः स्यात् को हि तद्वंशप्रभवान् चण्डवंशोत्पन्नान् शालुम्ब्रापतिप्रभृतीन् न अर्च्चयेत् सम्मानयेत् । अपि तु सर्व्वे एव सम्मानयेयुः । त्वं क्षत्रियो न भवसि, अतः शालुम्ब्रापतिं नार्च्चयितुमिच्छसीति ध्वनिः । तदेव स्फुटीकरोति—अन्यस्मिन् पितृत्वमारोपयन्नित्यादिना । अयं नैव झालापतेः पुत्र इति निश्चय आसीत् सामन्तानाम्, अतएवोक्तम् अन्यस्मिन् झालापतौ पितृत्वमारोपयन् अध्वस्यनिरुपर्यः

भेदः । (प्रकाशम्) देव ! वाग्दण्डातिगोऽयं (१) संवृत्तः पापीयान् (२) । अरे मूढ़ भणसिंह !

झालापतिर्मम पिता यदि वा न वासौ
क्षात्रे कुले मम जनुर्यदि वा न वास्तु ।
आस्ते तु दण्डधर-दण्ड-समान-वीर्यो
निस्त्रिंश एष कुलमानविधानदक्षः ॥ (३)

(इति खड्गमादत्ते)

राजा । (सभ्रूभङ्गम्) समरसिंह ! संसदियम् ।

भणसिंहः । (सगर्वम्) देव ! संसदियमित्यद्यापि जीवन् परिस्फुरति (४) वाचाटः (५) । अन्यथा—

शस्त्रं शस्त्रमिदं प्रचण्डरिपवो विध्वंसिता येन मे
बाहुर्बाहुरयं मदान्धकरिणां दर्पोपशान्तिर्यतः ।

---

(१) वाग्दण्डातिगः = तिरस्कारपथातीतः । (२) पापीयान् = अतिशयेन पापी ।

(३) झालापतिरित्यादि—। यदि वा झालापतिर्मम पिता अस्तु इति शेषः वा अथवा असौ पिता न अस्तु । झालापतिर्मान्नेति नाम्ना प्रसिद्धः । यदि क्षात्रे कुले क्षत्रियवंशे मम जनुः जन्म वा अथवा न अस्तु भवतु । दण्डधरदण्डसमानवीर्यो दण्डधरः यमः तस्य दण्डः तस्य समानं वीर्यं यस्य यमदण्ड इव अप्रतिहतवीर्यः एष निस्त्रिंशः खड्गः मम कुलमानविधाने दक्षः कुलस्य मानः गौरवं अथवा कुलं कुलीनत्वं मानश्च तयोः विधाने प्रदाने समर्थः । वीर्येण मम क्षत्रियत्वं प्रमाणीक्रियते जन्मापेक्षया गुणगतजातेरेव प्राधान्यमिति स्वमतमनुसृत्येदमुक्तम् ।

(४) परिस्फुरति = जीवति । (५) वाचाटः = वृथाजल्पकः ।

चित्तं चित्तमिदं समस्तविपदो यत् सोढुमाशंसते
तत्राहं ननु शक्तसिंहतनयः कोऽयं ममाग्रे पशुः ॥ (१)

राजा । (साकूतम्) चितोराक्रमणमेव स्थानमेकं वीर्य्योत्सेकस्य (२) ।

भगसिंहः । यदि च देव ! केषाञ्चिदस्माकं चितोराक्रमणप्रवृत्तिरासीत्तथापि —

राजप्रसाददृप्तोऽयं परवञ्चनपण्डितः ।
यत्र कार्य्ये नियुज्येत ततोऽन्यत्र स्थिता वयम् ॥ (३)

---

(१) शस्त्रमित्यादि—। येन शस्त्रेण प्रचण्डरिपवः उग्राः शत्रवः विध्वंसिता नाशिताः इदं तत् मे शस्त्रं शस्त्रं सार्थकमिति भावः ननु शोभामात्रविधायकम् । यतः बाहुतः मदान्धकरिणां मदमत्तहस्तिनां दर्पोपशान्तिः गर्व्वापहरणं भवतीति शेषः अयं सः बाहुः बाहुः सार्थक इत्यर्थः न देहभारमात्रम्, यत् चित्तं समस्तविपदः सर्व्वविधविपत्तीः सोढुम् आशंसते इच्छति शक्नोतीत्यर्थः इदं चित्तं चित्तम् सबलमित्यर्थः तत्र तदुपरि अहं शक्तसिंहतनयः प्रतापानुजस्य शक्तसिंहस्य पुत्रः, ममाग्रे मम पुरतः अयं पशुः कः अयमधमोऽतितुच्छ इत्यर्थः । लाटानुप्रासालङ्कारः ।

(२) वीर्य्योत्सेकस्य = विक्रमगर्व्वस्य ।

(३) राजप्रसादेत्यादि—। राजप्रसाददृप्तः राज्ञः मेवारपतेर्भवतः प्रसादेन अनुग्रहेण दृप्तः गर्व्वितः परवञ्चनपण्डितः परप्रतारणानिपुणः अयं पुरोवर्त्ती समरसिंहनाम्ना परिचितः पुरुषः, यत्र कार्य्ये यस्मिन् कर्म्मणि नियुज्येत नियुक्तः क्रियेत ततः कार्य्यात् वयम् अन्यत्र स्थिताः तत्कर्म्मणि वयं न सहाया भवामः । कापटिके समरसिंहे विश्वासातिशयः स्वस्वापेक्षया तस्मिन् प्रसादातिशयश्च सामन्तानां वैमनस्यकारणमिति सूचितम् । काव्यलिङ्गालङ्कारः ।

सामन्ताः । साधु भगसिंह ! साध्वभिहितमेतदनुमतं सर्व्वेषामेवास्माकम् ।

राजा । (स्वगतम्) चातुरीयं (१) भगसिंहस्य, भवतु शालुम्ब्रापतिमुपच्छन्दयामि (२) । (प्रकाशम्) शालुम्ब्रापते ! मृतस्तावदाकव्वरशाहः, यो बहूनां शङ्कास्थानमासीद् नवीनश्च जवनाधिपो बहूनामप्रिय इत्येवमादिकं सर्व्वमेव विचार्य्य कथ्यतां यदभिमतं भवताम्, न खलु राजपक्षोऽयमित्युपादेयः समरसिंह-पक्षोऽयमिति हेयो वा भवद्भिः, परमेतदेव द्रष्टव्यम्, यदियम्—

देवस्थानचितोरवक्षसि पदाक्रान्तान्तला-कुन्तले-
ष्वाकृष्टा जवनैर्नृशंसहृदयैरङ्गान्तरेष्वाहता ।
जीवत्क्षत्रियनामलक्षतनया माताद्य मेवारभू-
र्युष्माकं वदने निवेश्य सजलं चक्षुश्चिरं ताम्यति ॥ (३)

---

(१) चातुरी=चातुर्य्यम् । (२) उपच्छन्दयामि = तदभिप्रायं ज्ञास्यामीत्यर्थः ।

(३) देवेत्यादि—। नृशंसहृदयैः निष्ठुरचित्तैः जवनैः कर्त्तृभिः अद्य देवस्थानचितोरवक्षसि बहुदेवतानिवासस्थल-चितोरप्रदेशरूपे मेवारभूमेर्वक्षसि पदाक्रान्ता पदा आक्रान्ता मर्द्दिता ; अन्तलाकुन्तलेषु अन्तला मेवारान्तर्गतः दुर्गयुक्तः स्थानभेदः उन्ट्‌ला इति यदीयं देशजनाम, तत्स्वरूपाः कुन्तलाः केशाः तेषु आकृष्टा, अङ्गान्तरेषु अन्येष्ववयवेषु प्रदेशविशेषेषु आहता। ताड़िता आक्रान्ता इत्यर्थः तादृशी सती जीवत्क्षत्रियनामलक्षतनया जीवन्तः क्षत्रियनामधारिणः बहुसंख्यकाः पुत्रा यस्याः सा माता मेवारभूः युष्माकं वदने मुखे सजलं चक्षुः साश्रुनयनं निवेश्य स्थापयित्वा चिरं बहुकालं व्याप्य ताम्यति खिद्यते । अत्र रूपकालङ्कारः, अप्रस्तुत-प्रशंसा च, युष्माभिः चितोरोद्धारविषये यदालस्यमौदासीन्यञ्च प्रदर्श्यते तदधुनैव

शालुम्ब्रा। (स्वगतम्) अहो सन्दीपनाक्षरो वाङ्-निष्यन्दः (१)। (प्रकाशम्) युज्यते खलु महाराजप्रताप-सिंहप्रभवस्य देवस्येदृशं वचनम्। किन्तु वृद्धा वयं यथा-स्थितस्वाधीनतारक्षणमेव प्रयत्नसाध्यं जानीमः। तत्र च तत्र-भवतो महाराजस्य पुरतः कृतप्रतिज्ञाः स्मः, तत्परिपालनाय यावज्जीवं यतिष्यामहे। तस्मादुपेक्षितवचनोऽपि भूयो ब्रवीमि, देवेनापि सैव नीतिरनुवर्त्त्यताम्, अन्यथैषापि स्वाधी-नता विपर्य्येष्यति (२)।

राजा। शालुम्ब्रापते! तातपादसहचरान् भवतः केवलमेतदभिदधामि।

भेदच्छेदपरा चिरादसिलता तीक्ष्णा सदा वर्त्तते
भूगर्भे निहिता तु कर्म्मविरता नश्येत् कलङ्कावृता:।
एवं वीरकुलं महारिविजयप्रोत्साहकौतूहलाद्
व्यग्रं भाति तदन्यथा शमपरं गेहे वसत् सीदति ॥ (३)

---

परित्याज्यमित्यर्थस्य प्रस्तुतत्वात्। (१) सन्दीपनाक्षरो वाङ्निष्यन्दः=सन्दीपनानि भावोत्तेजकानि अक्षराणि वर्णाः यस्मिन् तादृशः वचनविन्यासः।

(२) विपर्य्येष्यति = नङ्क्ष्यति।

(३) भेदेत्यादि—। चिराद् भेदच्छेदपरा भेदः विदारणं छेदः खण्डीकरणं तत्परा तन्निरता असिलता खड्गलता दैर्घ्यं बोधयितुं खड्गे लतात्वारोपः, सदा तीक्ष्णा क्षुरधारा वर्त्तते तु किन्तु कर्म्मविरता [illegible] रहिता। भूगर्भे भूमि

शालुम्ना। तत् किं कृषिवाणिज्यशिल्पसमृद्धिहेतु-भूतायाः (१) शान्तेरवसानमेव श्रेयः सम्भाव्यते देवेन।

राजा। नैतदेवम्, किन्तु—

देशस्य मङ्गलमये समये चिराय
या शान्तिरप्रतिहताभ्युदयं तनोति।
सैवेतरत्र कुरुते प्रबलावसादं
धर्म्मार्थसङ्क्षयकरीमपि मोहतन्द्रीम्॥ (२)

---

मध्ये निहि[illegible] रक्षिता सती कलङ्कैः मलैः आवृता आच्छन्ना सती नश्येत् जीर्णा भवेत्, एवम् ईदृशं वीरकुलं शूरसमूहः महारिविजयप्रोत्साहकौतूहलात् प्रबल-शत्रुजयार्थमुद्योगौत्सुक्यात् व्यग्रं भाति आकुलम् आग्रहवद्विराजत इत्यर्थः, अन्यथा शत्रुविजयोद्योगान्निवृत्तौ तत् वीरकुलं गेहे वसत् गृहस्थितं सत् शमपरं शान्तिमात्र-सारं सीदति अवसीदति आलस्येन युज्यत इत्यर्थः। एवमित्युपादानादत्रोपमालङ्कारः।

(१) कृषिवाणिज्येत्यादि—। कृषिः वाणिज्यं शिल्पं तेषां तत्सम्बन्धिनी समृद्धिः वृद्धिः तस्या हेतुभूतायाः कारणरूपायाः शान्तेः निरुद्वेगदशायाः अवसानम् अन्तः श्रेयः प्रशस्यतरं सम्भाव्यते मन्यते। युद्धकाले देशस्य कृषि-वाणिज्यादिकं हीयते, शान्तिकाले तु वर्द्धते, सर्व्वदा यदि युद्धमेवाश्रयणीयं तदा देशस्य धनवृद्धिकराणां कृषिवाणिज्यादीनां दुर्दशा भवत्येवेति भावः।

(२) देशस्येत्यादि—। देशस्य अखण्डराष्ट्रस्य मङ्गलमये समये अभीष्ट-स्वातन्त्र्यभोगरूपश्रेयस्करे काले या शान्तिः चिराय अप्रतिहताभ्युदयं स्थिराम् अबाधिताम् समृद्धिं तनोति विस्तारयति, सा शान्तिः इतरत्र अंशतोऽपि पराधीनता-दशायां प्रबलावसादं महान्तम् उत्साहाभावं धर्म्मार्थसंक्षयकरीं धर्म्मस्य तदनु-कूलार्थस्य च हानिप्रदां मोहतन्द्रीम् अपि अज्ञानरूपां निद्रां च कुरुते जनयति। अयं भावः देशस्य स्वातन्त्र्यप्रतिष्ठा धर्म्मभावोद्दीपितस्योत्साहस्य सत्त्वोज्ज्वलरजो-

परापहृत-चितोरशिरसः परपदानत-सजाति-धनमान-सस्पृह-जनसम्बाधस्य देशस्य नायं मङ्गलमयः समयः। (१)

शालुम्ब्रा। देव! जीवत्यस्मच्चिररिपुर्मानसिंहः। तत्-प्रयुक्तमेव मेवाराक्रमणं भविष्यति। तत्प्रतिरोधाय सञ्चितं वीरकुलं स्वयं कृतशान्तिभङ्गेन न क्षयमापादनीय (२) मिति विमृशतु देवः। न चेदं पौराणामप्यभिमतं, तत् क्षम्यतां नेदं वयमनुमन्यामहे।

राजा। (स्वगतम्) हन्त! सर्व्वथा विफलो मे देव्याश्च मनोरथः। (प्रकाशम्) सामन्तशिरोमणयः!

क्षयो न सर्व्वविध्वंसः क्षयशेषोऽपि वर्द्धते।
प्रकृष्टतेजःसम्पर्काद् यथेन्दोः षोड़शी कला॥ (३)

---

गुणस्य फलम्। तत्फललाभानन्तरमधिगता शान्तिः तत्सजातीयां समृद्धिं विस्तारयति; चितोरस्य पराधीनतासत्त्वेऽपि निश्चेष्टतादशायां शान्तिर्नाम तामसभाव-विस्तारः; तात्कालिककृषिवाणिज्यादिजनिता समृद्धिरपि तामसी, जनानां धन-मोहमेव वर्द्धयति नतु तत्त्वतोऽभ्युदयम्।

(१) नन्वयमेव मङ्गलमयः समय इति चेत् तत्रोत्तरमाह—परापहृतचितोर-शिरसः परेण शत्रुणा अपहृतं कर्त्तितं आयत्तीकृतमित्यर्थः। चितोररूपं शिरो यस्य मेवारदेशस्य कबन्धस्येवेत्यर्थः, परपदानतसजातिधनमानसस्पृहजनसम्बाधस्य =परस्य शत्रोः पदयोः आनताः ये सजातयः क्षत्रियाः तेषां धनमानयोः सस्पृहैः जनैः जवनदासभूतानां क्षत्रियाणां धनमानदर्शनेन प्रलुब्धैः जनैः सम्बाधः संकुलः तस्य देशस्य अयं न शुभः समयः।

(२) न क्षयमापादनीयम् = न ह्रासमानेतुं योग्यम्।

(३) क्षयो नेत्यादि—क्षयः ह्रासः न सर्व्वविध्वंसः सर्व्वस्य विनाशः

(सर्व्वेषां मुखमवलोक्य) यद्भवतु, गृहीतो भवतामाशयः (१)।

सामन्ताः। तदनुजानातु देवः प्रतिगमनाय, नमो नमो महाराजचरणेभ्यः। (इति निष्क्रान्ताः)

राजा। सखे! प्रागेव सामन्तानां हृदय (२) मधिगतं भवता, तदकृतापमानप्रतीकार (३) मात्मानं मदवस्थावलोकनेन पर्य्यवस्थापय (४)। भग्नो मे मनोरथः, भारायते जीवनम्, अवसीदन्त्यङ्गानि, भ्रमतीव दृष्टिः, शुष्यति मुखम्, तन्मन्ये—

चितोरोद्धारसङ्कल्पादेवमेव निवर्त्तितः।
तातो मे दुःखदावाग्निदग्धोऽमृतपदं गतः॥ (५)

---

प्रकृष्टतेजःसम्पर्कात् सूर्य्यकिरणसम्बन्धात् अथच महोत्साहप्रतापयोगात् इन्दोः षोड़शी अमानाम्नी कला क्षयशेषः ह्रासावशिष्टा अपि पुनः वर्द्धते कलान्तरैः पूर्य्यते। उपमार्थान्तरन्यासालङ्कारौ।

(१) गृहीतः = ज्ञातः। आशयः = अभिप्रायः। (२) हृदयं = चित्तवृत्तिः। अधिगतं = ज्ञातम्। (३) अकृतापमानप्रतीकारम् = अपमानस्य भगसिंहकृतस्य प्रतीकारः प्रतिविधानम् अकृतः अपमानप्रतीकारः येन स तम्। (४) पर्य्यवस्थापय = धृतिमन्तं कुरु—सान्त्वय।

(५) चितोरेत्यादि—। मे (मम) तातः पिता एवमेव एतादृशप्रकारेणैव चितोरोद्धारसङ्कल्पात् चितोरस्य स्वाधीनतानयने यः सङ्कल्पः मानसं कर्म्म तस्मात् निवर्त्तितः निवारितः अतएव दुःखदावाग्निदग्धः दुःखरूपदावानलज्वलितः सन् अमृतपदम् अमृतस्य पदम् अमृत्युस्थानं स्वर्गमित्यर्थः गतः। दग्धस्य अमृत-

समरः। (स्वगतम्) हन्त! फलिष्यत्येवास्माकमाशा। यथा खलु दौर्म्मनस्यपीड़ितस्त्वं शान्तिकामनया वाराङ्गनावागुरायां (१) निपतेस्तथा यतितव्यमस्माभिः। (प्रकाशम्) देव! मा तावदनेनास्मा खेदयितव्यः। साधनपराणां सिद्धिरवश्यम्भाविनी किन्तु श्रेयांसि बहुविघ्नानीति भूयो व्याहन्यते।

राजा। सखे! किं तावदस्य मन्दभाग्यस्य कृते चिन्तनीयमस्ति?

यतः—तातो वीरवरः प्रतापतपनोद्दीप्तः प्रतापः स्वयं
मेवारक्षितिरेव मे जननभूर्वीरप्रसूर्या चिरात्।
सामन्ता बहुशो जितारिनिकरास्तातस्य नित्यप्रियाः
तैरेव प्रतिषिध्यते रिपुभयान्मद्वीरचर्य्याधुना॥ (२)

---

पदप्राप्तिरिति विरोधः, दुःखपीड़ितः सन् स्वर्गं गत इति विरोधपरिहारः। विरोधालङ्कारः। यद्वा, अमृतपदं जलाशयश्चेति सश्लेषरूपकालङ्कार एव।

(१) वाराङ्गनावागुरायां वेश्यारूपे पशुबन्धनजाले।

(२) तात इत्यादि—। वीरवरः शूरश्रेष्ठः प्रतापतपनोद्दीप्तः प्रतापः विक्रमः तद्रूपः तपनः सूर्य्यः तेन उद्दीप्तः उज्ज्वलितः स्वयं प्रतापः तातः पिता (ममेति शेषः) या चिरात् वीरप्रसूः शूरपुत्रजननी (सा) मेवारक्षितिः मेवारभूमिः मे जननभूः जन्मभूमिः, तातस्य नित्यप्रियाः चिरप्रेमपात्रीभूताः बहुशः बहुवारं जितारिनिकराः जिताः पराभूताः अरिनिकराः शत्रुसमूहाः यैः ते सामन्ताः; तैः एव मद्वीरचर्य्या शूरकर्म्म रिपुभयात् शत्रुतो भीत्या प्रतिषिध्यते निवार्य्यते। विभावनाविशेषोक्त्योः सङ्करः।

समरः। यथा भवतु न खलु चिन्तनीयः परिणामदर्शी (१) क्षमावतामग्रणीरतिगम्भीरो देवः, सर्व्वैरेव चिन्तनीया तु मनोरथ-भङ्ग-दून-मृदु-हृदया (२) भवदेकशरणा स्वयंवरार्थिनी बाला वीरा।

अनन्यशरणा बाला धर्म्मलोपभयातुरा।
मेवारभुवमासाद्य माभूदात्मोपघातिनी॥ (३)

(इति निश्वसिति)

राजा। ( निश्वस्य ) सखे! चिन्तनीयमेतत् परस्तात्।

( नेपथ्ये ) अहो अत्याहितम्! अत्याहितम्!! महान् गृहदाहः!!!

मुच्यन्तां पशवो द्रुतं नियमनाद् गोष्ठं समालोक्यतां
नीयन्तां शिशवो बहिर्गृहजनः प्रोच्चैः समुद्बोध्यताम्।
दीयन्तां पटलान्तरेषु सलिलान्यस्त्रालयो रक्ष्यतां
कोषागारमपि प्रसर्पतितरां राजोटजायानलः॥ (४)

---

(१) परिणामदर्शी = विवेचकः, भविष्यच्चिन्तकः।

(२) मनोरथभङ्गदूनमृदुहृदया = आशाभङ्गाद् व्यथितकोमलचित्ता।

(३) अनन्यशरणा = गत्यन्तरहीना। धर्म्मलोपभयातुरा = स्वधर्म्महानिभयेन कातरा, मेवारभुवम् आसाद्य प्राप्य आत्मोपघातिनी आत्महत्याकारिणी मा भूत् न भवतु।

(४) मुच्यन्तामित्यादि—। पशवः गोमहिषादयः नियमनात् बन्धनात् द्रुतं सत्वरं मुच्यन्ताम् मुक्ताः क्रियन्ताम्। गोष्ठं गोबन्धनस्थानं समालोक्यताम्

( उभौ सोद्वेगमाकर्णयतः )

प्रविश्य संभ्रान्तःकञ्चुकी। देव त्वर्य्यतां त्वर्य्यतां बहिर्गन्तुम्, सन्निहितो गृहदाही कृशानुः।

राजा। एवमेतत्, सखे! पश्य महतः कृशानोरवतार (१) मवैमि, यतः—

वंशग्रन्थिविभेदसम्भवरवैरापूर्य्यते दिङ्मुखं
तारोल्कासदृशैः स्फुलिङ्गनिचयैराकाशमाच्छाद्यते।
आलोकेन दिवेव नष्टतिमिरा रथ्या दरीदृश्यते
हाहाकारविमिश्रितः कलकलोऽप्ययेष क्रमाद्वर्द्धते ॥ (२)

समरः। ( स्वगतम् ) दरिद्रगृहवद्राजगृहमेतत् सर्व्वत-

---

दृश्यताम्। शिशवः बहिः गृहादित्यर्थः नीयन्तां प्राप्यन्ताम्। गृहजनः गृहाभ्यन्तरस्थः जनः प्रोच्चैः उच्चैःस्वरेण समुद्बोध्यताम् ज्ञाप्यताम्। पटलान्तरेषु छदिःषु तदन्तरेषु तन्मध्येषु च सलिलानि दीयन्ताम्। अस्त्रालयः=अस्त्रागारम्। कोषागारमपि रक्ष्यताम् त्रायतामित्यर्थः। अनलः अग्निः राजोटजाय राज्ञः पर्णशालायै प्रसर्पतितराम् अतिद्रुतंगच्छति इत्यर्थः।

(१) अवतारम् = प्रादुर्भावम्।

(२) वंशेत्यादि—। दिङ्मुखम् दिग्भागः वंशग्रन्थिविभेदसम्भवरवैः वंशानां सन्धिस्फोटनजनितशब्दैः आपूर्य्यते संभ्रियते। आकाशं व्योम तारोल्कासदृशैः ताराः नक्षत्राणि उल्काः खज्योतींपि तैः सदृशैः तुल्यैः स्फुलिङ्गनिचयैः अग्निकणसमूहैः आच्छाद्यते आव्रियते। आलोकेन नष्टतिमिरा ध्वस्तान्धकारा रथ्या प्रतोली अभ्यन्तरमार्गः दिवेव दिने इव दरीदृश्यते = भृशं लक्ष्यते। हाहाकारविमिश्रितः एष कलकलः हाहाकारयुक्तः कोलाहलः क्रमात् क्रमशः वर्द्धते।

स्तृणमयमतो दूरादिदानीं परिहरणीयम् । (प्रकाशम्) सखे ! तद्गच्छाम्यहमार्त्तत्राणाय । (इति निष्क्रान्तः)

(नेपथ्ये) हा हदह्मि हा दद्धह्मि, जादे वीर-दत्ते ! पेक्ख मं, सव्वं सरिरं दद्धं, प्फुड़िदं णश्रणं, फलिदं पावं । हद्दी हद्दी तहवि जीवणं ण णिग्गच्छदि, अह्मो जलणकिलेसो, कहिं गमिस्सं ।

[हा हतास्मि ! हा दग्धास्मि ! वत्से वीरदत्ते ! प्रेक्षस्व मां सर्व्वं शरीरं दग्धं स्फुटिते नयने फलितं पापम् । हा धिक् तथापि जीवनं न निर्गच्छति ! अहो ज्वलनक्लेशः कुत्र गमिष्यामि ।]

राजा । (त्वरितं निर्गत्याग्रतो दृष्ट्वा) अहो करुणं वर्त्तते

या सन्तापपरिक्लिष्टां रक्षन्ती तनयां प्रभोः ।
हन्त मामाश्रिता वृद्धा सेयं दग्धा विपद्यते ॥ (१)

कष्टमतिक्रान्तवचनमर्य्यादेयं (२) लालपीति (३) । न जाने का गतिरस्या भर्त्तृदारिकाया वीरायाः । हृदय ! निवर्त्तस्व—

---

(१) येत्यादि—। या सन्तापपरिक्लिष्टां दुःखपीड़ितां प्रभोः स्वामिनः तनयां कुमारीं रक्षन्ती माम् आश्रिता मदीयशरणापन्ना हन्त (खेदे) सेयं वृद्धा जरती दग्धा ज्वलिता विपद्यते म्रियत इत्यर्थः ।

(२) अतिक्रान्तवचनमर्य्यादा = अतिक्रान्ता उल्लङ्घिता वचनस्य वाक्यस्य मर्य्यादा स्थितिः यया सा । भर्त्तृदारिकेत्यनुक्त्वा वत्से इत्यादिकथनादिति भावः ।

(३) लालपीति = भृशं जल्पति ।

जननी निगडैर्बद्धा यस्य दुर्दैवजीविनः ।
चिरं क्लिश्यति साक्रन्दा स्त्रीचिन्ता तस्य किं भवेत् ॥ (१)

न जाने का गतिराश्रितानाम्, यावत् सर्व्वतो निरूपयामि ।

( इति त्वरितं निष्क्रान्तः )

कञ्चुकी । ( गतिभङ्गं रूपयन् ) हा धिक् !

जराकम्पान्वितौ भूयस्त्वराद्विगुणकम्पनौ ।
धावितावपि यत्नेन चरणौ सीदतो मम ॥ (२)

एवमेव वृद्धानां विपत्तिः ।

( इति राजानमनुगच्छन् निष्क्रान्तः । )

इत्यमरमङ्गलनामनाटके मन्त्रणाभिधो
द्वितीयोऽङ्कः समाप्तः ।

---

(१) जननीत्यादि—। व्याख्यातपूर्व्वोऽयं श्लोकः । क्लिश्यति = खिद्यते इति तु विशेषः ।

(२) जरेत्यादि—। जराकम्पान्वितौ जरया वार्द्धक्येन कम्पान्वितौ कम्पमानौ भूयः त्वराद्विगुणकम्पनौ = त्वरया अग्निभयपरित्राणत्वरया द्विगुणं कम्पनं वेपनं ययोः तौ मम चरणौ यत्नेन धावितावपि कृतद्रुतक्षेपौ अपि सीदतः शक्तिहीनौ सन्तौ मन्दीभवतः ।

द्वितीयाङ्कस्य टीकेयं नाटकेऽमरमङ्गले ।
द्वितीयाङ्कस्य लीलेव समाप्ता श्रीपतेर्गले ॥

---

# तृतीयोऽङ्कः ।

## विष्कम्भकः* ।

ततः प्रविशत एकलिङ्गप्रधानपुरोहितस्य शिष्यौ ।

एकः । णाराअण ! आणासि काइं बि दिणाइं देवीए देवस्स अमरसिंहस्स अ अप्पसण्णो गुरुदेओ अज्ज पसादसुमुहो संवुत्तो, ता किं एत्थ कारणं ?

[ नारायण ! जानासि कान्यपि दिनानि देव्या देवस्य अमरसिंहस्य च अप्रसन्नो गुरुदेवः अद्य प्रसादसुमुखः (१) संवृत्तः, तत् किमत्र कारणम् ? ]

नारायणः । परायण ! विदितमेवैतद्भवतो यद्यावच्चितोरोद्धारो न भवति, तावन्मेवारराजकुलस्य सौधवासः (२),

---

* विष्कम्भकः = अयमपि शुद्धो विष्कम्भकः, मध्यमपात्रद्वयप्रयोजितत्वात् । अत्र परायणस्य प्राकृतभाषाव्यवहारः, न खलु नीचपात्रत्वादपितु अवैदुष्याद् बालत्वाद् वा । तथा हि यथोत्तरचरिते सौधातकेः । नारायणस्य संस्कृतभाषित्वं कृतात्मत्वात् । नारायणपरायणौ किल शिष्यौ चितोरगमनवर्त्मसन्निहितैकलिङ्गनाथशिवमन्दिरपुरोहितप्रधानस्य शैलदेवस्य । नारायणो हि तयोः ज्येष्ठः, राजनीतौ च सुप्रवेशयोग्यतामापन्नः ।

(१) प्रसादसुमुखः = प्रसादेन प्रसन्नतया सुमुखः सु शोभनं सन्तोषप्रकाशकं मुखं यस्य सः । (२) प्रतापसिंहकृतप्रतिज्ञानियमाः सर्व्वं एवालोच्यन्ते—प्रथमतः प्रतिषेधविषयाः किल मेवारराजकुलस्य सौधवासेत्यादयः ।

श्मश्रुकर्म्म (१), स्वर्णरजतादिपात्रव्यवहारो, रणवाद्यस्य पुरोवर्त्तित्वम् (२), कामजभोगश्च (३) प्रतिषिद्धः स्वयं त्यक्तराजभोगेन देवेन प्रतापसिंहेन।

परायण:। सव्वजणविदिदं आणामि एदं, एदं वि आणामि तणपण्णघरवासो, तणपण्णपत्तव्ववहारो अ तेण महापुरिसेण आदिट्ठो राअउलस्स। किंतु दाणीं महाराओ अमरसिंघो तणपण्णघरदाहादो अणंतरं तं तादस्स णिअमं उज्झिअ णवणिम्मिदे सोहदले णिवसदि, वसणी अ संवुत्तो त्ति।

[ सर्व्वजनविदितं जानाम्येतत्, एतदपि जानामि, तृणपर्णगृहवासः, तृणपर्णपात्रव्यवहारश्च (४) तेन महापुरुषेणादिष्टो राजकुलस्य। किन्तु

---

(१) श्मश्रुकर्म्म = श्मश्रूणां क्षुरेण वपनम्। (२) रणवाद्यस्य पुरोवर्त्तित्वम् = विजयोल्लासेनैव रणवाद्यस्याग्रभागे गमनं सम्भवति, चितोरविजयं विना विजयोल्लास एव नास्तीति तन्निषेधः।

(३) कामजभोगः—

"मृगयाक्षो दिवास्वप्नः परीवादः स्त्रियो मदः।
तौर्य्यत्रिकं वृथाट्या च कामजो दशको गणः॥"

एतद्दशविधकामजव्यसनासक्तिः। एतेष्वेव हि "स्त्रियः" इति धर्म्मपत्नी-व्यतिरिक्तस्त्रीग्रहणम् अन्तर्भूतमित्यमरसिंहेन निर्णीतम्। कादाचित्कमृगयादिकं तु न व्यसनम्।



(४) विहितरूपौ नियमौ यथा तृणपर्णगृहवासः, तृणपर्णपात्रव्यवहारश्च।

इदानीं महाराजोऽमरसिंहः तृणपर्णगृहदाहादनन्तरं तं तातस्य नियममुज्झित्वा नवनिर्म्मिते सौधतले निवसति व्यसनी च संवृत्त इति । ]

नारी । एवमेव पूर्व्वमवगच्छन् गुरुदेवो नितान्तं खिन्नमना आसीत् ।

परा । जुज्जइ एदं, अज्ज उण किं त्ति पसाद-सुमुहो ?

[ युज्यते एतत्, अद्य पुनः किमिति प्रसाद-सुमुखः । ]

नारी । पितृनियममनुवर्त्तमानो देवः सौधवप्राभ्यन्तर-निह्नुतं (१) तृणगृहमधिवसति, शत्रूणामग्निदानप्रवृत्तिप्रतिरोधाय प्रख्यापितः पुनः सौधाधिवासः । व्यसनञ्च (२) कृत्रिमं (३) शत्रुप्रलोभनार्थं सामन्तानामालस्यभङ्गार्थञ्चाभिनीयत इत्यवगम्य मानसिंहोद्वेजनाय (४) देवीनिवेदनञ्चोपलभ्य महान्तं परितोषमनुभवति गुरुदेव इति ।

परा । ता किं अअं राअघरदाहो सत्तुकिदो ?

[ तत् किमयं राजगृहदाहः शत्रुकृतः ? ]

---

तृणानि कुशकाशोलुपादीनि, पर्णानि पत्राणि तेषां तन्निर्म्मितानि गृहाणि तत्र वासः । धातुपात्रे भोजनं निषिद्धम्, आदिष्टञ्च तृणमये पर्णमये च पात्रे भोजनम् ।

(१) सौधवप्राभ्यन्तरनिह्नुतम् = सौधस्य हर्म्यस्य वप्राणां प्राकाराणाम् अभ्यन्तरे मध्ये निह्नुतं लुक्कायितम् । (२) व्यसनम् = कामजविलासः । (३) कृत्रिमम् = अवास्तवम् । (४) मानसिंहोद्वेजनाय = मानसिंहस्य क्रोधोत्तेजनाय ।

नारा । शत्रुकृत एव ।

परा । कधं एव्वं भणिअदि, ता सव्वं परिप्फुड़ं कधेहि, अधिअं मे कोदूहलं होदि ।

[ कथमेवं भण्यते तत्सव्वं परिस्फुटं कथय अधिकं मे कौतूहलं भवति । ]

नारा । सखे श्रूयताम्, अस्ति राजभवने वीरदत्ता नाम वाराङ्गना या मानसिंहेन स्वयंवरार्थिनी वीरानाम्नी राजकन्येति प्रणिहिता, तद्दासीति परिचिता तन्माता च तत्रासीत् ।

परा । ( सविस्मयम् ) सुदं क्खु सअंवरत्थिणी कावि राअकण्णा महाराअं उवट्ठिदा । अह्मो सा वारंगणा, ण राअकण्णा ! तदो तदो ?

[ श्रुतं खलु स्वयंवरार्थिनी राजकन्या महाराजमुपस्थिता । अहो सा वाराङ्गना, न राजकन्या ! ततस्ततः ? ]

नारा । सा तु भगवतो महेश्वरस्य कृपया देवदेवीनिर्म्मलचारित्रदर्शनोद्बुद्धपूर्व्वसंस्कारा चित्तशुद्धिमभजत ।

परा । अच्चरिअं क्खु एदं, अधवा अचिंतणिज्जप्पहावो भअवं एक्कलिंगणाहदेओ कम्मफलं अ ।

[ आश्चर्य्यं खल्वेतत् अथवा अचिन्तनीयप्रभावो भगवानेकलिङ्गनाथदेवः कर्म्मफलञ्च । ]

नारा । तन्माता च दुहितुस्तादृशं स्वप्रवृत्तिविरोधिभाव-

मुपलभ्य प्रबोधयन्त्यपि (१) यदा मनोरथसम्पत्तिं (२) न लेभे, तदा रोषावेशविभ्रान्तक्रूरहृदया (३) महाराजस्य सर्व्वनाशाय नक्तं (४) राजभवनसन्निहितं स्वगृहमग्निना दीपयामास।

परा। अह्मो णिरणुक्कोसा गब्भदासी, तदो तदो ?

[ अहो निरनुक्रोशा गर्भदासी (५), ततस्ततः ? ]

नारा। किन्तु धर्म्मो विराजते, विजयते भगवान् एकलिङ्गनाथो भगवती चितोरेश्वरी च। अनन्तरं द्रुतापसरणस्खलितचरणा (६) भूमिप्रपातजातमोहा (७) जरती यावल्लब्धसंज्ञा [illegible]वत्, तेन गृहाग्निनार्द्धदग्धा, रक्षिभिस्तु कथञ्चिद् बहिरानीता पश्चात्तापमुपेयुषी पञ्चत्वमापन्ना।

परा। केरिसो पच्छादावस्स परिचओ ?

[ कीदृशः पश्चात्तापस्य परिचयः ? ]

नारा। पश्चात्तापदग्धया तया उपदिष्टो वीरदत्ताया अभिमतो धर्म्ममार्गः। प्रकाशितश्च मानसिंहस्य विविधं कौशलमिति। अतएव कथितं राजगृहदाहः शत्रुकृत एवेति।

---

(१) प्रबोधयन्ती = उपदेशद्वारा स्वकीयं भावं पुनरुद्दीपयन्ती।

(२) मनोरथसम्पत्तिम् = इच्छायाः साफल्यम्।

(३) रोषावेशविभ्रान्तक्रूरहृदया = क्रोधोदयेन विभ्रान्तं विकारग्रस्तं रोषावेशविभ्रान्तं निष्ठुरहृदयं यस्याः सा। (४) नक्तम् = रात्रौ। (५) निर्दया गर्भादेव दासरता, अधिक्षेपोक्तिरियम्।

(६) द्रुतापसरणस्खलितचरणा = शीघ्रपलायनहेतोः पतिता इत्यर्थः, (७) भूमिप्रपातजातमोहा = भूमौ प्रपातेन पतनेन मूर्च्छिता।

परा। ( सहर्षम् ) जेदु जेदु एकलिंगणाहदेओ देवी चिदोरेस्सरी अ। ताणं पसादेण ज्जेव सव्वं रक्खिदं।

[जयति जयत्येकलिङ्गनाथदेवो देवी चितोरेश्वरी च। तयोः प्रसादेनैव सर्व्वं रक्षितम्।]

नारा। सखे! सुरक्षितमिति वक्तव्यम्।

परा। अध पुच्छामि, माणसिंघं उव्वेजेइदुं किं निवेदिदं देवीए गुरुदेअस्स।

[अथ पृच्छामि मानसिंहमुद्वेजयितुं किं निवेदितं देव्या गुरुदेवस्य।]

नारा। जानास्येव यदागतोऽत्र मानसिंहः, स च तथोद्वेजनीयो यथा न-चिरादेव चितोरं परित्यजेदिति।

परा। कधं णाम एव्वं भविस्सदि ?

[कथं नामैतद्भविष्यति ?]

नारा। उपदर्शितस्तदुपायो महामनीषया देव्या।

परा। ( सकौतुकम् ) को उण सो ?

[कः पुनः सः ?]

नारा। मानसिंहं प्रति सुगृहीतनाम्नः प्रतापसिंहस्य समुचिताधिक्षेपवाच (१) मनुपठन्ती शिक्षिता शुकावली राजावसथसमीपे (२) विसर्ज्जनीया, यथा किल मानसिंहस्तन्मुखा-

---

(१) समुचिताधिक्षेपवाचम् = योग्यनिन्दावाक्यम्। सूर्य्यवंशावतंसश्रीरित्यादिकामुपरिष्टात् कथयिष्यमाणाम् इत्यर्थः।

(२) राजावसथसमीपे = राज्ञः मानसिंहस्य आवसथः गृहं तन्निकटे।

दात्माधिक्षेपवादं (१) शृणुयाद् इत्येकः।

परा। किं अदो ज्जेव अह्मे माणसिंघवासस्थलं विसेसादो जाणिदुं इध प्पेसिदा।

[ किम् अतएवावां मानसिंहवासस्थलं विशेषात् ज्ञातुमिह प्रेषितौ। ]

नारा। अथ किम्।

परा। णिउणं किदं, अत्थि अण्णो कोवि ?

[ निपुणं कृतम्। अस्ति अन्यः कोऽपि ? ]

नारा। स्वयं गुरुदेवोऽपि यथावसर (२) मुद्वेजयिष्यति कर्म्मणा वाचा चेति।

परा। णाराअण ! परिस्सज मं, अज्ज इमिणा वुत्तंतेण णिव्वुदोह्मि।

[ नारायण ! परिष्वजस्व माम्, अद्य अनेन वृत्तान्तेन निर्वृतोऽस्मि। ]

नारा। ( सनिर्वेदम् ) हन्त चितोरे जवनाधिकारमवलोकयतां का खलु निर्वृतिरस्माकम्।

परा। ( सखेदलज्जम् ) एव्वं ण्णेदं। [ एवमेतत्। ]

नारा। सखे ! अतिरहस्य (३) मेतदित्यप्रमत्तेन (४) रक्षणीयम्।

---

(१) आत्माधिक्षेपवादम् = स्वकीयनिन्दावाक्यम्। (२) यथावसरम् = समयमनतिक्रम्य। (३) अतिरहस्यम् = परमं गोपनीयम्। (४) अप्रमत्तेन = सावधानेन।

परा। ( सहास्यम् ) णाराअण ! सव्वं तुए विणासिदं, एत्तिअं कालं ण किं पि जादं, रहस्सत्ति जदो भणिदं तदो ज्जेव उदरं मे गुड़गुड़ेदि। ता भणामि जं एदं निवेदेमि तस्स ज्जेव कधइस्सं रहस्सं एदं अण्णदो ण भणिदव्वं त्ति।

[ नारायण ! सर्वं त्वया विनाशितम्। एतावन्तं कालं न किमपि जातम्, रहस्यमिति यतो भणितं तत एव उदरं मे गुड़गुड़यति (१)। तद्भणामि यमेतत् निवेदयामि तस्मै एव कथयिष्यामि एतदन्यतो न भणितव्यमिति। ]

नारा। सखे ! कृतमुपहासेन। अस्मादृशजनानुचितेऽपि (२) राजनीतिमार्गसञ्चारे (३) श्रीगुरोरादेशेनाहमिव त्वमपि व्यापारितोऽसीत्यप्रतिषिद्धरहस्यनिवेदनाय (४) तुभ्यमिदमावेदितम्। तदेह्यति वर्त्तते कालः। साम्प्रतमागच्छ आसन्नभूमिस्थितां देवीं चितोरेश्वरीं प्रणम्य गुरुनियोग (५) मनुतिष्ठावः।

॥ इति विष्कम्भकः ॥

---

(१) गुड़गुड़यति = गुड़गुड़ इति अनुकरणगुड़गुड़शब्दात्। करोत्यादौ णिच्प्रत्ययात् सिद्धम्। उदरमिति कर्त्तृपदम्।

(२) अस्मादृशजनानुचितेऽपि = अस्मद्विधछात्राणामकर्त्तव्येऽपि।

(३) राजनीतिमार्गसञ्चारे = राजनीतिपथेन गमने, राजनीतिविषयककर्म्मकरण इत्यर्थः। (४) अप्रतिषिद्धरहस्यनिवेदनाय = अप्रतिषिद्धं गुरुणा अनिवारितं रहस्यं गोपनीयवृत्तान्तजातं तस्य निवेदनाय ज्ञापनाय। कस्मैचिदपि नेदं वक्तव्यमिति गुरोः प्रतिषेधे तुभ्यमपि नेदमवक्ष्यमिति भावः।

(५) गुरुनियोगम् = गुर्वाज्ञाम्।

ततः प्रविशति राजा मानसिंहः सेनापतिश्च (१)

( नेपथ्ये वैतालिको गायति )

जय दिल्लीश्वर-सेनापतिवर ! वीरनिकरकरहारी ।
अम्बरनृपमणिरम्बरतलमणि-समतेजाः शुभकारी ॥
काशीकोशल - तीर्थपुण्यबल - परिचितजगदुपकारी ।
भीतिविकम्पित-नतनरपतिशत-मौलिकिरणचयचारी ॥
क्षत्रियसङ्कर - मानभङ्गकर - सिंहपराक्रमधारी ।
मानसिंह इति विदितमहीपतिररिकरिकटकविदारी ॥ (२)

---

( १ ) सेनापतिरयं मानसिंहस्य सेनाध्यक्षः, स्वयं मानसिंहस्तु दिल्लीश्वरेण नियुक्तस्तदीयसेनाध्यक्षः इत्यनयोर्भेदः ।

(२) जयेत्यादि—। हे दिल्लीश्वरसेनापतिवर ! वीरनिकरकरहारी अम्बरतलमणिसमतेजाः शुभकारी अम्बरनृपमणिः काशीकोशल-तीर्थपुण्यबलपरिचितजगदुपकारी, भीतिविकम्पितनतनरपतिशतमौलिकिरणचयचारी, क्षत्रियसङ्करमानभङ्गकरसिंहपराक्रमधारी अरिकरिकटकविदारी मानसिंह इति विदितमहीपतिः ( त्वम् ) जय इत्यन्वयः ।

दिल्लीश्वरस्य आकव्वरशाहस्य ततश्च सेलिमस्य हे सेनापतिश्रेष्ठ वीरनिकरस्य शूरसमूहस्य करं हर्तुं शीलमस्य इति करहारी उपहारग्रहणशीलः, वीरा भयात्तुभ्यं करं ददतीत्यर्थः । अम्बरतलम् आकाशं तस्य मणिः सूर्य्यः तेन समम् अम्बरतलमणिसमं तेजः यस्य सः, सूर्य्यस्य तेजोरूपत्वादत्र अम्बरतलमणिपदेन तत्तेज उपलक्ष्यते सूर्य्यतेजःसदृशतेजा इति तदर्थः । अम्बरनृपमणिः, नृपेषु राजसु मणिः रत्नं श्रेष्ठ इत्यर्थः अथवा नृपो मणिरिव, अम्बरस्य तन्नामकप्रसिद्धस्थानस्य नृपमणिः त्वम् जय वर्द्धस्व ।

मानसिंहः । आसीदेकः क्षत्रवीरः प्रताप-
स्तेनैवाहं भग्नमानश्चिराय ।
अद्याप्यास्ते तत्कुलं मानदीप्तं
किं मे सार्थं मानसिंहेति नाम ॥ (१)

---

काशी स्वनामख्याततीर्थं कोशलः अयोध्याप्रदेशः तत्स्वरूपयोस्तीर्थयोः यत् पुण्यबलम्—पुण्यं शोभनकर्म्म 'पुण्यं शोभनकर्म्म' इति हेमचन्द्रः काश्ययोध्यादितीर्थेषु भग्नदेवालयादीनां संस्कारः, नवानां प्रासादानाञ्च निर्म्माणं कृतमिति व्यज्यते, तस्य यद् बलं शक्तिः तेन परिचितः सर्व्वविदितः, स चासौ जगदुपकारी चेति, तादृशः। भीत्या विकम्पिताः अतएव नताः ये नरपतयः राजानः तेषां शतानि समूहाः तेषां मौलयः किरीटानि, 'चूड़ा किरीटं केशाश्च संयता मौलयस्त्रयः' इत्यमरः, तेषां किरणचये प्रभापटले चरितुं शीलमस्य भीतानां राज्ञां शिरांसि त्वदीयपादतले लुठन्तीति भावः।

क्षत्रियाणां प्रतापादीनां सङ्गरेषु युद्धेषु तेषां मानभङ्गकरः मानमर्द्दकः स चासौ सिंहपराक्रमधारी चेति, क्षत्रियमानभङ्गे सिंहतुल्य-विक्रमविशिष्टोऽसीति वाक्यात् पदद्वयं योजयित्वा मानसिंह इति सार्थकं नाम जातम्, सिंहपराक्रमधारीत्यस्य सार्थक्यं प्रतिपादयन्नाह—अरिकरिकटकविदारीति । अरिरूपकरिणां कटकाः चक्राणि सेनासमूहाः वा, अथच हस्तिनां गण्डस्थलानि तद्विदारी तेषां भेदनशीलः, मानसिंह इति विदितमहीपतिः तन्नाम्ना सुपरिज्ञातः राजा त्वं जयदेवीयरीत्या मात्रागीतिच्छन्दः।

(१) मानसिंहो गीतमिदमाकर्ण्यैव प्रत्युत्तरयति—आसीदित्यादिना। एकः द्वितीयरहितः क्षत्रवीरः प्रतापः प्रतापसिंह आसीत् तेनैव तेन नान्यसहायेन चिराय अहं भग्नमानः बहुकालं यावत् हतमानोऽस्मि। अहं दिल्लीश्वरसहायः बहु-नृपाश्रितः, स तु एकः इति एवकारस्य धार्य्यते। अद्यापि तत्कुलं सदीयो वंशो

सेनापतिः। देव! असामान्यतेजसो (१) देवस्य पुरतः प्रतापकुलमिति कियन्मात्रं (२) येन निहतप्रभावः स्वयं प्रतापसिंहो वनचरीभूतो राज्यविडम्बन (३) मनुबभूव।

तथा हि,—

हर्म्म्यं वृक्षतलं कदन्नमशनं चीराणि चीनांशुकं
गृढं भूधरकन्दरोदरमभूदन्तःपुरं सुन्दरम्।
वृक्षालम्बिकरण्डकुक्षिशरणा बालाः क्षुधाचञ्चला
जाता व्योमवितानन्निम्ननिचिता मुक्ताप्रलम्बा इव॥ (४)

---

मानदीप्तं मानोज्ज्वलम् आस्ते मे मम मानसिंहेति नाम सार्थम् अर्थयुक्तम् किम्? भवतीति शेषः।

प्रतापेन चिराय मम मानो नाशितः तत्कुलमद्यापि सम्मानितं वर्त्तते, मानसिंह इति मदीयं नाम कथं स्वार्थं बोधयेत्। मानसिंहेति इत्यत्र न लिङ्गार्थे प्रथमा लिङ्गार्थग्रहणस्यानिष्टत्वात् तादृशानुपूर्वीमात्रस्यैव ग्रहणम्। मयि स्थितस्य मानस्य नाशात्, अन्यत्र स्थितस्य मानस्य च मय्यन्वयासम्भवात् मदीयं नाम निरर्थकमेव, 'शब्दानुपाती वस्तुशून्यो विकल्पः' इति मन्नामपदस्य विकल्पवृत्तिरिति भावः। मानसम्बन्धेऽसम्बन्धाध्यवसायादतिशयोक्तिः काव्यलिङ्गञ्च। शालिनीवृत्तम्।

(१) असामान्यतेजसः = प्रबलप्रतापस्य। (२) कियन्मात्रम् = कियती मात्रा यस्य, अतितुच्छमित्यर्थः। (३) राज्यविडम्बनम् = राज्यस्य अनुकरणम् वस्तुतो न राज्यम्।

(४) हर्म्म्यमित्यादि—। वृक्षतलं तरुतलमेव हर्म्म्यं प्रासादः, कदन्नम् कुत्सितमन्नम् अशनं खाद्यम्। चीराणि = छिन्नवस्त्राणि (एव) चीनांशुकम् चीनदेशाद्-

मान । (निश्वस्य) सेनापते ! मा मैवं, यत इदानीमपि,—

मेवारराजवरणोत्सुकराजकन्या-
व्याजां मया प्रणिहितां वरवारनारीम् ।
हर्त्तुं गता इव चरा जवनप्रवीरा
यद्-युद्ध-कौशल-दिशा निहता निगूढ़म् ॥ (१)

---

गतं यन्महामूल्यं वस्त्रं तत्स्वरूपम् । गूढं गुप्तं भूधरकन्दरोदरम् पर्व्वत[illegible]गुहामध्य-स्थलम्, सुन्दरम् शोभनम् (इति सोपहासवचनम्) अन्तःपुरम् अवरोधः वृक्षालम्बि-करण्डकुक्षिशरणाः वृक्षेषु आलम्बिनो लग्नाः करण्डाः वंशादिनिर्म्मितपात्रविशेषाः अलाबुसमुद्गमादयो वा तेषां कुक्षयः मध्यभागाः, शरणम् आश्रयो येषां ते तथाविधा क्षुधाचञ्चला क्षुधया अस्थिराः बालाः शिशवः व्योमवितानस्य व्योमरूपस्य वितानस्य चन्द्रातपस्य उल्लोचस्य निम्ने निचिता ग्रथिताः मुक्ताप्रलम्बाः मुक्तामयहारविशेषा इव जाताः । चञ्चलबालगर्भा वृक्षलम्बितकरण्डकावलिः, आकाशचन्द्रातपस्य मुक्तागुच्छवद् दृश्यते इति भावः ।

जवनाक्रान्तः प्रतापो यदा गिरिदुर्गवनमध्ये स्थित्वा स्वाधीनतारक्षणपरायणो बभूव, तदा वृक्षतले शयनम्, घासबीजान्येव खाद्यम्, छिन्नवस्त्रं परिधेयम्, गिरिगुहामध्ये स्त्रीणामवस्थापनम्, खाद्याभावात् क्षुधाकातराणां शिशूनां वृक्षे लम्बमानपात्रविशेषमध्ये स्थापनञ्चकारेति ऐतिहासिकी वार्त्ता । भेदेऽभेदाध्यव-सायात् प्रथमपादयोरतिशयोक्तिः । अन्ते चोत्प्रेक्षा ।

(१) मेवारेत्यादि—। मया प्रणिहितां गुप्तचरीकृतां मेवारराजवरणोत्सुक-राजकन्याव्याजां मेवारराजस्य तथात्वेन तथा कथितस्य अमरसिंहस्य वरणे पतित्व-करणे उत्सुका उत्कण्ठिता राजकन्या सैव व्याजश्छलं यस्याः सा तां वरवारनारीम्

स खलु मृतोऽप्यद्यापि विजयत एव मानशरीरेण (१) प्रतापसिंहः। किञ्चैवं किल जनः कथयति,—

सिंहस्येव वने स्थितस्य समयापेक्षस्य यस्यानिशं
द्रागाक्रान्तिभयेन भारतपतिस्तत्याज निद्रासुखम्।
पश्चाद् येन जितोऽप्युपेक्षणमिषाद् युद्धोद्यमे निस्पृह-
स्तस्यान्तेऽपि तदात्मजस्य विजये भीतो न धत्ते मनः॥ (२)

---

उत्तमां वे[illegible]ाम् हर्तुं गता इव आच्छेत्तुमुद्यता इत्यभिनयं कुर्वन्तः जवनप्रवीरा जवनवीरश्रेष्ठाः चराः मदीया इत्यर्थः, वस्तुतो वेश्याया जवनवीराणाञ्च मत्प्रणिधित्वेन तत्र यथा वेश्याया राजकुमारीति ख्यापनं तथा जवनानामपि तद्धरणाभिनयः इति भावः यद्युद्धकौशलदिशा यस्य युद्धनैपुण्यप्रकारेण निगूढं गुप्तभावेन निहताः मारिताः। प्रतापस्य मृत्यावपि तद्युद्धकौशलं न विनष्टमिति तस्य सर्व्वथा विजय एव।

(१) मानशरीरेण = यशोमयदेहेनेत्यर्थः।

(२) सिंहस्येत्यादि—। वने स्थितस्य समयापेक्षस्य सिंहस्येव यस्य द्राक् आक्रान्तिभयेन भारतपतिः अनिशं निद्रासुखं तत्याज, पश्चात् येन जितोऽपि उपेक्षणमिषात् युद्धोद्यमे निस्पृहः, तस्यान्तेऽपि भीतः तदात्मजस्य विजये मनो न धत्ते। इत्यन्वयः। वने स्थितस्य वने कृतवसतेः अथच वन्यस्य समयापेक्षस्य स्वीयवृद्धिकालं शत्रोरवसादकालञ्च प्रतिपाल्य स्थितस्य, अथच लक्ष्यीभूतपशोरुपरि पतनस्य योग्यकालं प्रतिपालयतः सिंहस्येव यस्य अनिशं सततं द्राक् शीघ्रम् सहसेत्यर्थः आक्रान्तिभयेन आक्रमणशङ्कया भारतपतिः जवनराजः निद्रासुखं तत्याज निःशङ्कस्यैव सुखेन निद्रा भवति-जवनराजस्य सततं शङ्कितत्वात् तदभावः। पश्चात् परवर्त्तिनि काले येन प्रतापेन जितः पराभूतः अपि भारतपतिरित्यर्थः उपेक्षणमिषात् एवं सहनशीलेन

सेना । अहो व्रीड़ास्थान (१) मस्माकम् ।

मान । न केवलं व्रीड़ास्थानं, परिभवस्थानमपि,—

क्षुद्राणां दमने निसर्गपटवस्ते मानसिंहादयो
मेवारक्षितिपप्रतापपवनेनोत्सारितास्तूलवत् ।
यातो वर्षगणः पुरन्दरपुरं प्राप्तः प्रतापो नृपो
नाद्याप्याक्रमणस्य वाचमपि ते वक्तुं क्षमन्ते भिया ॥ (२)

इत्याद्युदीरयन्तः केचिदस्मत्पराक्रमकीर्त्तिमपि लघूकुर्व्वन्ति ।

सेना । (सक्रोधम्) हा धिक् (३) इमे तावदधिक्षेप-वादा (४) महाराजमपि स्पृशन्ति (५) यो हि (६),—

---

गुणवता देशप्रेमिकेण प्रतापेन युद्धं न कर्त्तव्यमिति भावप्रदर्शनच्छलात् युद्धोद्यमे रणारम्भे निस्पृहः अनिच्छुकः बभूवेति शेषः, तस्य प्रतापस्य अन्तेऽपि मरणे जातेऽपि भीतः (भारतपतिः) तदात्मजस्य प्रतापात्मजस्य अमरसिंहस्य विजये मनो न धत्ते नाभिलषति । उपमालङ्कारः ।

(१) व्रीड़ास्थानम् = लज्जास्पदम् ।

(२) क्षुद्राणामित्यादि—। व्याख्यातपूर्व्वोऽयं श्लोकः । विशेषस्तु—मेवारक्षितिपप्रतापपवनेनेति, मेवारराजप्रतापसिंहस्वरूपः पवनः तेनेत्यर्थः ।

(३) हा धिक् = खेदसूचकम् ।

(४) अधिक्षेपवादाः = निन्दावचनानि । तमिति उत्तरस्थयच्छब्देनाक्षिप्यते तं महाराजमपि (५) स्पृशन्ति = विषयीकुर्व्वन्ति । (६) यो हि = यः महाराजः, हि इति विशेषबोधनाय ।

उदयपुरपतिं तृणाय मत्वा
घटयितुमिच्छति सङ्गराय नित्यम् ।
भुवनविदितबाहुवीर्य्यकीर्त्तिः
कथितबलः किल मादृशैश्च वीरैः ॥ (१)

तदसह्यनीयमेतदनुमन्यतां देवः, अद्यैवोदयपुरमाक्रम्य कलङ्कमिममपनयामि, विलम्बासहं मे चित्तम्, यतः,—

उदयपुरपतेर्भयेन मूढाः
समरपरा न वयं चिराद्भवामः ।
इति परपरिवाददूनचित्ताः
क्षणमपि वर्षशतं विचिन्तयामः ॥ (२)

अपि च,—देवप्रसादपरिवर्द्धिततेजसो मे
कोषस्थितोऽप्यसिरसौ त्वरते रणाय ।

---

(१) उदयपुरपतिमित्यादि—। उदयपुरपतिम् अमरसिंहं तृणाय मत्वा तृणवदवज्ञाय, मन्यतेः कर्म्मणि—अनादरे चतुर्थी, नित्यं प्रतिदिनं सङ्गराय युद्धाय घटयितुं तं प्रवर्त्तयितुमिच्छति, स युद्धप्रवृत्तो भूयात् इति कामयते, भुवनविदितबाहुवीर्य्यकीर्त्तिः विश्वविख्यातभुजबलयशाः, मादृशैः वीरैः कथितबलः उदाहृतशौर्य्यश्च किल निश्चये भवतीति शेषः। पुष्पिताग्राच्छन्दः सेनापतेरात्मश्लाघापरत्वमनेन दर्शितम् । तेन भविष्यदधःपातः सूचितः ।

(२) उदयपुर-पतेरित्यादि—। वयम् उदयपुरपतेरमरसिंहाद् भीत्या जड़ीभूताः चिरात् दीर्घकालेन प्रतापसिंहेन जिता तन्मरणोत्तरं बहुवर्षात्ययेऽपि न युद्धं कुर्म्मः इति स्वशत्रुकृतालीकनिन्दाश्रवणेन पीड़ितमनसः क्षणमपि वर्षशतं शतवर्षाणि विचिन्तयामः इत्यर्थः । अतिशयोक्तिरलङ्कारः ।

एतौ भुजौ भुजगभोगसमौ रिपूणा-
मुन्मर्द्दनाय सततं स्फुरतः सशस्त्रौ ॥ (१)

मान। (सखेदम्) वीरवर! जानासि किल परतन्त्रस्य मे नात्र सर्व्वतोमुखी प्रभुता। अतएव,—

मेवारराजविजयाय बिभर्त्ति वीर्य्यं
पर्य्याप्तमेव भुजदण्डयुगं त्वदीयम्।
दिल्लीपतेरनुमतौ तु कृतप्रतीक्षो
मन्त्रौषधिप्रतिहतोऽहिरिव क्षमस्व ॥ (२)

---

(१) देवः महाराजमानसिंहः, तस्य भवतः प्रसादः प्रसन्नता तेन परिवर्द्धित-तेजसः, बहुलीकृतशौर्य्यस्य मे असौ तत्र तत्र युद्धेषु विख्यात इति भावः, असिः कोषस्थितोऽपि पिधानचर्म्मस्थोऽपि रणाय त्वरते, असेर्निष्कोषत्वे युद्धत्वरा कथञ्चिद् गम्यते, तदभावेऽपि त्वरावत्त्वं स्वीयत्वरया कल्पितमित्यतिशयोक्तिः। भुजगभोगसमौ सर्पशरीरतुल्यौ एतौ मदीयाविति प्रदर्शनेन बोध्यम्। भुजौ रिपूणां उन्मर्द्दनाय निष्पेषणाय सततं सर्व्वदा सशस्त्रौ शस्त्रान्वितौ स्फुरतः प्रकाशेते। यद्यपि सर्व्वदा शस्त्रान्वितौ न भवतः, तथापि प्रकृतिभीषणभुजगभोगतुल्यतया सशस्त्राविव दृश्येते इति भावः। अत्रोपमातिशयोक्त्यलङ्कारौ।

(२) मेवारराजेत्यादि—। त्वदीयं भुजदण्डयुगं मेवारराजस्य विजयाय पर्य्याप्तं समर्थं वीर्य्यं बिभर्त्ति, किं पुनः उदयपुरपतेः, अखण्डमेवारराज्याधिकारिणोऽपि पराजयाय त्वदीयौ बाहू समर्थौ—किं पुनरस्य क्षुद्रोदयपुराधिकारिणः, तु किन्तु दिल्लीपतेरनुमतौ कृतप्रतीक्षः दिल्लीश्वरस्याज्ञां प्रतीक्षमाणः अतएव मन्त्रौषध-प्रतिहतः मन्त्रौषधाभ्यां निरुद्धः अहिः सर्प इव क्षमस्व सहस्व परदत्तव्यथामिति

सेना। (निश्वस्य) तत्प्रतापतनयस्य चितोराक्रमणं यावत् प्रतीक्षणमेव देवेनानुमन्यते।

मान। तदेवानुमतमासीत्। किन्तु विदितं मया वृद्धसामन्तप्रतिषेधेन चितोराक्रमणसङ्कल्पान्निवृत्तः प्रताप-सूनुरिति।

सेना। (सविषादम्) मन्ये व्याहतचितोराक्रमणैर्ज्जितं वृद्धसामन्तैः।

मान। कथमिव ?

सेना। अकृतापराधे प्रतापतनये देवस्य दिल्लीश्वरस्य तत्संग्रामानुज्ञानं सन्दिग्धमेव।

मान। अहो! एवं नाम मन्यन्तां मेवारवृद्धसामन्ताः, भवानप्येवं मन्यते! श्रूयताम्,—

स्वाधीनतारक्षणमात्रलक्ष्याः सुखं धनं दारसुतानसूंश्च।
तृणाय मत्वा दृढसंहता ये ते दुर्ज्जयाः सर्व्वविधैरुपायैः॥

इति विमृश्यैव स्वर्गस्थितो देवो दिल्लीश्वरो निरर्थकलोक-क्षयकरं मेवारसंग्रामं प्रतिषिद्धवान्, अयमपि दिल्लीश्वरस्तत्पथानु-गामी नानुजानाति। भेदजर्ज्जरे तस्मिन् कः प्रत्यूहः संग्रामानुज्ञानस्य। मम तु केवलं मेवाररक्षैकप्राणयोश्चण्ड-

---

क्रियया गम्यते। वीर्य्यप्रकाशे कालविलम्बं कुरु इत्यर्थो वा। अत्रोपमाविशेषोक्ति-काव्यलिङ्गालङ्काराः।

शक्तकुलयोरन्योन्यभेदोपपादनमत्रावशिष्यते । सति च तस्मिन्न-प्रयत्नसुलभमर्थपरिपाकं को नाम मे प्रतिहन्यात् । यतः—

देशं दहति भेदाग्निर्ध्वान्तं हरति वैरिणाम् ।
भोक्तृद्वैधादनर्थश्च तस्मिन्नर्थश्च पच्यते ॥ (१)

(आकाशे बद्धलक्ष्यः) अरे रे दूरदर्शिमानिनः (२) प्रताप-वृद्धसामन्ताः ! को वा युष्माकमनर्थपरिपाकं निवारयेत् ?

यावज्जीवति मानसिंहनृपतिर्यावत् कठोराक्षराः
साहङ्कारकुलाभिमानपिशुनास्तास्ताः प्रतापोक्तयः ।
मर्म्माणि व्यथयन्ति तस्य नियतं तावद् यतध्वे मुधा
मोहान्धाः कुशलं प्रतापतनये नास्त्येव नो वास्ति वः ॥(३)

---

(१) देशमित्यादि—। भेदाग्निः, भेद एव देशवासिनामनैक्यमेवाग्निः, स देशं दहति भस्मसात् करोति, विनाशयतीति यावत् । स एव भेदाग्निः वैरिणां तद्देशाधिकारलालसानां शत्रूणां ध्वान्तं ध्वान्तमिव तद्देशवासितत्त्वालोकनविघ्न-मिति भावः हरति निराकरोति । भोक्तृद्वैधात् भोक्तॄणां द्वैविध्यात् तस्मिन् भेदाग्नौ अनर्थः अनिष्टम् च अर्थः इष्टञ्च पच्यते परिणतं भवति—उभयप्राधान्य-द्योतकं चकारद्वयम् यस्मिन् भेदो वर्त्तते, तद्देशरिपवः अनायासेन तद्देशवासि-स्वरूपं जानाति, तेन च देशवासिनामनर्थस्तद्वैरिणाञ्चार्थः सिध्यतीति तात्पर्य्यम् ।

(२) दूरदर्शिमानिनः, आत्मानं दूरदर्शिनं मन्यते इति मनधातोः णिन् प्रत्ययाद् दूरदर्शिमानी,—तद्बहुत्वाद् दूरदर्शिमानिनः इति न तु वस्तुनो दूरदर्शिनः इत्यर्थः । दूरदर्शित्वाभावमुपपादयिष्यति यावदित्यादिना श्लोकेन ।

(३) यावज्जीवतीत्यादि—। राजा मानसिंहो यावज्जीवति,—जीवनपदार्थं व्याचष्टे कठोराक्षराः कठोराणि परुषार्थबोधकानि अक्षराणि यासां ताः,

सेना । ( सहर्षमात्मगतम् , अहो ! कोपस्फुरित-नैसर्गिकतेजोभास्वरो भृशं रोचते मे (१) देवः । ( प्रकाशम् ) देव ! क्षम्यतामयं खेदप्रदो (२) दासजनः ।

(नेपथ्ये) सूर्य्यवंशावतंसश्री-वाप्पारावकुलोद्भवः ।
नैवान्नं जवनश्यालपङ्क्तिस्थो भोक्तुमर्हति ॥ (३)

---

साहङ्कारः निजाहङ्कारसहितः यः कुलाभिमानः, वंशघटितगर्व्वः तत्पिशुनाः तत्सूचनरताः तास्ताः स्वयमुच्चारणासामर्थ्यद्योतनाय तास्ता इति, प्रतापोक्तयः प्रतापसिंहस्य वचनानि तस्य मानसिंहस्य मर्म्माणि नियतं नियमेन निश्चयेन व्यथयन्ति अरुन्तुदा भवन्ति तावत् मुधा वृथा यतध्वे—वृथा यत्नवन्तो भवथ प्रतापतनये अमरसिंहे कुशलं नास्त्येव नो वा वः युष्माकं कुशलम् अस्ति । मानसिंहस्य यावत्स्मृतिशक्तिसहितानुभवशक्तिः स्थास्यति तावत्कृतेऽपि यत्नसहस्रे नामरसिंहे न वा युष्माकं कुशलं भविष्यतीति तात्पर्य्यम् ।

(१) मे मह्यं रुच्यर्थधातुयोगे रुचिमतश्चतुर्थीविधानात् ।

(२) खेदप्रदः = ममैवोदयपुरपतिविजयोत्साहेन पूर्व्वापरपर्य्यालोचनया दुरुक्तिप्रभृतिस्मरणेन देवस्य दुःखोत्पत्तेरित्याशयः ।

(३) सूर्य्यवंशावतंसः सूर्य्यवंशस्यावतंसः सूर्य्यवंशस्य गिह्लोटकुलस्य शिरोभूषणं यः श्रीवाप्पारावस्तस्य कुलोद्भवः वंशोत्पन्नः वाप्पा ( इति ) रावः शब्दो यस्येति देवभाषया, देशजभाषया च राव ( राओ ) इति सिद्धेः । जवनश्यालस्य मानसिंहस्य पङ्क्तौ स्थितः अन्नं भोक्तुं नैव अर्हति योग्यो भवति ।

जवनश्यालः = जवनस्य सेलिमस्य जायायाः भ्राता पितृव्यजः, भ्रातॄणामेकजातानामेकश्चेत् पुत्रवान् भवेत्, सर्व्वांस्तांस्तेन पुत्रेण पुत्रिणो मनुरब्रवीत् इति स्मृतेः । अम्बरपतिर्भगवानदासः सेलिमश्वशुरः, तद्भ्रातुष्पुत्रो मानसिंहश्च अपुत्रस्य तस्य सिंहासनं लब्धवानित्यैतिहासिकी वार्त्ता ।

मान । (सक्रोधविस्मयकम्पम्) अहो किमेतत्, अपि नाम चितोराधिदेवता स्वानुभावप्रतिच्छन्नमूर्त्तिरशरीरिण्या वा वाचा मामधिक्षिपति (१), अथवा कथमेवं स्यात् सर्वज्ञा खलु देवता भवति, विदितमेव तस्याः,—

अस्मद्वंश्या विवोढुं जवनकुलभुवामिच्छतां दुर्ज्जयानां
राज्ञां भोगाय दासीः खलु दुहितृतया ख्यापयन्तः प्रदद्मः ।
स्फारेऽप्यस्मत्कलङ्के कुलकलुषमये लोलुभा बिभ्यतो वा
तत्त्वं नोद्घाटयामो वयमिति विदिताः पापिनो धार्म्मिकेषु ॥ (२)

---

(१) स्वानुभावेति—। स्वानुभावः = स्वीयप्रभावः । तेन प्रतिच्छन्ना मानवचक्षुरगोचरः मूर्त्तिः शरीरं यस्याः सा, मामधिक्षिपति अपवदति इत्युत्तरत्रान्वयः, वा अथवा अशरीरिण्या न शरीरिणी शरीरसम्बन्धवती तया, विनैव शरीरसम्बन्धं देवप्रभावेण स्वयमुद्भूतया वाचा माम् अधिक्षिपति ?

एतन्न सम्भवतीत्याह यतः सर्व्वज्ञा देवता न मिथ्याभाषणं कर्त्तुमर्हति, यतोऽहं न जवनश्यालः, तदेवाह अस्मद्वंश्या इति ।

(२) अस्मद्वंश्या इत्यादि—। अस्मद्वंश्याः अस्माकं वंशजाताः कन्याः विवोढुं परिणेतुम् इच्छतां दुर्ज्जयानां बलेन निवारयितुमशक्यानां जवनकुलजातानां राज्ञां भोगाय दासीं कर्म्मकरीं शूद्रां मम दुहितेयमिति कृत्वा प्रदद्मः, तेषु प्रयच्छामः, पूर्व्वपुरुषादारभ्य इयं नीतिः, अतो जवननरपतीनिति दासीरिति च व्यक्तिभेदेन बहुत्वात् बहुवचननिर्देशः, प्रदद्मः इत्यत्रापि तथैव बहुवचननिर्देशः । इति पूर्वार्द्धार्थः । उत्तरार्द्धतात्पर्य्यं हि इदन्तु रहस्यं नास्माभिः प्रकाश्यते तेन अस्माकं कुलकलुषमयः कलङ्कः स्फारः विस्तारं प्राप्तः,—तथापि जवनाधिपतिप्रसादलोभेन भयेन वा सः अस्माभिः सह्यते, धार्म्मिकाः जानन्ति

सेना। (स्वगतम्) एवं नाम निष्पापो देवः परीवादं सहते। तज्जीवितमेव मे हृदयेन (१)।

मान। (विमृश्य) प्रतापसिंहस्यात्मैवायम्, कुतोऽन्यथा रक्षिवर्गपरिवृतायामलिन्दभूमौ विपक्षवचसामवसरः। भवत्वेवं तावत्,—कः कोऽत्र भोः?

प्रविश्य प्रतीहारी। जेदु जेदु भट्टा।

[ जयति जयति भर्त्ता। ]

(पुनर्नेपथ्ये) सूर्य्यवंशावतंसेत्यादि।

मान। (सक्रोधम्) अपि श्रूयते?

प्रती। सुणिअदि भट्टा। [ श्रूयते भर्त्तः। ]

मान। त्वरितमनुसन्धीयतां कुतस्त्योऽयं वाग्वज्रपातः (२)।

---

वयं जवनैः श्यालत्वश्वशुरत्वादिसम्बन्धात्पतिता इति। वस्तुतस्तु न वयं जवनानां श्यालत्वादिसम्बन्धयुक्ता भवाम इत्यर्थः। इदं हि मानसिंहेन क्रोधावेगाद् रहस्यमपि स्पष्टमुक्तमिति पश्चाद्व्यक्तीभविष्यति। मानसिंहवचनमिदं सत्यं न वेत्यत्रेतिहासः प्रमाणम्।

(१) इयन्तं कालं यावत् सत्यपरिज्ञानाभावेन प्रभुनिन्दया हृदयं मे मृतमिवासीत् अद्य देवस्य मुखात् सत्यवार्त्ताश्रवणेन तेन पुनर्जीवितमिवेति भावः।

(२) कुतस्त्यः = कुतो भवः, ( अव्ययात्त्यप् पा० ४-२-१० सूत्रात्तद्वार्त्तिकाच्च ) वाग्वज्रपातः वागेव वज्रं दुःसहत्वात् तस्य पातः तस्य निःसरणम् इति वाक्पक्षे, वज्रपक्षे पतनञ्च। यद्वा वागेव वज्रपातः इति।

प्रती । (निष्क्रम्य पुनः प्रविश्य) देव ! इदो अणदिदूरट्ठिदे अलिंदविड़ंगट्ठाणे एसो सुको उपविट्ठो दीसदि, अस्स ज्जेव वअणं णेदं (मानसिंहः पश्यन् नालिकं सन्धत्ते)।

[ इतोऽनतिदूरस्थिते अलिन्दविटङ्कस्थाने एष शुक उपविष्टो दृश्यते, अस्यैव वचनमिदम् । ]

( पुनर्नेपथ्ये सूर्य्यवंशावतंसेत्यादिपठन्तः शुकाः शब्दमात्रेण प्रोड्डीनाः, एकश्च नालिकाहतः पतितः । )

मान । ( दृष्ट्वा सवैलक्ष्यम् ) यत्र पक्षिणोऽपि प्रतापसिंहमनुकुर्व्वन्तो दैवीं वाचमुदीर्य्य मामधिक्षिपन्ति, एकस्मिन् प्रयुक्तास्त्र (१) मुपहसन्तश्चान्ये प्रतिष्ठन्ते, तत्र चिरावस्थानमुन्मादाय मे भविष्यति ( इत्युद्भ्रान्तं (२) परिक्रामति ) ।

सेना । देव !

गाम्भीर्य्येण समुद्रोऽसि धैर्य्येण हिमवानसि ।
शुककण्ठोत्थिताच्छब्दात्कथमुद्भ्रान्तिमृच्छसि ॥ (३)

---

(१) प्रयुक्तास्त्रं मामिति पूर्व्ववाक्यादनुषज्यते । प्रयुक्तं संहितं अस्त्रं नालिकास्त्रं येन तम् ।

(२) उद्भ्रान्तम् = अतिशयेनानवस्थितचित्तं यथा स्यात्तथा ।

(३) गाम्भीर्य्येणेति—। गाम्भीर्य्यम् बहिराकारदर्शनेनानुन्नेयाशयत्वम् इति मानसिंहपक्षे, अगाधत्वमिति समुद्रपक्षे । धैर्य्यम् = धीरत्वं मानसिंहपक्षे, स्थिरत्वं हिमालयपक्षे । अत्रोल्लेखातिशयोक्तिरूपकालङ्काराः उद्भ्रान्तिम् अतिशयेनानवस्थितचित्तत्वं वैक्लव्यमिति यावत्, ऋच्छसि = प्राप्नोषि ।

मन्ये विपक्षप्रयुक्तोऽयमभिनवोपायो देवमपसारयितुम्, युक्तस्तावदेतत्प्रतिघातार्थमेव यत्नः, न पुनर्भवादृशस्य महासत्त्वस्यैवमुद्भ्रान्तिः।

मान। (स्वगतम्) सेनापतिरत्रास्तीति विस्मृतं मया क्रोधातिरेकमूढ़ेन, तदिदं रहस्यमपावृतं समयेन शोधयिष्यामि, (प्रकाशम्) सेनापते !

येन प्रताप-वचन-क्रकचेन पूर्व्वं
कृत्तेषु मर्म्मसु विषक्षतमुद्वहामि।
तत्तुल्यकीरवचनं श्रुतमेव सद्यः
क्षारीभवत् क्षतमुखे नितरां दुनोति ॥ (१)

अलीकाभिशस्ति-तीव्रसंवेगवेदनादूनहृदयो न शक्नोम्यात्मानमवस्थापयितुम् (२), भवतु स्वल्पीयानेव शिष्यते कालः

---

(१) येनेत्यादि—। येन प्रतापवचनक्रकचेन = प्रतापस्य प्रतापसिंहस्य वचनमेव क्रकचं करपत्रम्, तेन कृत्तेषु विदीर्णेषु मर्म्मसु प्राणस्थानेषु विषक्षतं विषस्य क्षतं विषदूषितक्षतसदृशीं रुजम् उद्वहामि उच्चैर्वहामि पुष्यामि, तत्तुल्यं प्रतापवचनसदृशं कीरवचनं शुकवाक्यं प्रतापसिंहेन मां प्रति यद्वचनं प्रयुक्तं शुकावलिरपि तदनुरूपं वक्ति इत्यर्थः तत् श्रुतमेव श्रवणगोचरतां प्राप्तमेव सद्यः तत्क्षणात् क्षतमुखे क्षारीभवत् अक्षारं क्षारं सम्पद्यमानं भवत् नितरां सुतरां दुनोति पीड़यति। अत्रातिशयोक्तिरूपकपरिणामालङ्काराः।

(२) अलीकाभिशस्तिः = अलीका मिथ्या या अभिशस्तिः अपवादः तस्य या तीव्रसंवेगवेदना—तीव्रः अधिकः संवेगः साहित्येन अनुभूतिक्षिप्रता यस्याः सा

क्लेशमीदृशमनुभवितुम्, मन्मन्त्रप्रयोगकौशलेन किल व्यसनी संवृत्तः प्रतापसूनुः ।

प्रती । (प्रविश्य) जेदु जेदु भट्टा । भअवदो एक्कलिंगणाधमहादेअस्स पधाणपुरोहिदो भट्टिणं पेक्खिदुं उपट्ठिदो ।

[ जयति जयति भर्त्ता । भगवत एकलिङ्गनाथस्य प्रधानपुरोहितो भर्त्तारं प्रेक्षितुमुपस्थितः (१) । ]

मान । (सविस्मयम्) कथं नाम भगवत एकलि[illegible]नाथस्य प्रधानपुरोहितः! (स्मरणमभिनीय) आं यथा किल भगवतः पूजासम्भारः प्रेषितस्तन्मन्ये कृतार्च्चनो मामाशिषा योजयितुमागच्छति, तदविलम्बं प्रवेशय ।

---

वेदना व्यथा तया दूनम् इति तत्पुरुषः तादृशं हृदयं यस्य सः अहमात्मानं स्वम् अवस्थापयितुं स्थिरीकर्त्तुम् ।

(१) मानसिंहवाक्यान्ते यत् प्रतापसूनुरिति पदं प्रतीहारिवाक्ये 'जेदु जेदु' इत्यस्य तेन सह सम्बन्धेन "यत्रार्थे चिन्तितेऽन्यस्मिन् तल्लिङ्गोऽन्यः प्रयुज्यते । आगन्तुकेन भावेन पताकास्थानकं तु तत् ॥" इति लक्षणात्पताकास्थानमेतत् । प्रतापसूनोर्व्यसनित्वं मानसिंहेन चिन्तितं प्रतीहारिणा तदनन्तरं जयशब्दप्रयोगेण चिन्तितातिरिक्तस्य जयस्य सूचनात् । वस्तुतस्तु नेदं पताकास्थानं सामान्यलक्षणस्य कथञ्चिद् योगेऽपि विशेषलक्षणस्यात्रायोगात्, तदनुरोधेन सामान्यलक्षणस्यापि अर्थान्तरपरत्वस्यावश्यकत्वात् । पताकास्थानं चतुर्थाङ्के प्रदर्शयिष्यते । अयं विचारस्तु बुभुत्सुबुद्धिवैशद्याय ।

प्रती । जं आण्णावेदि भट्टा । ( निष्क्रम्य पुरोहितेन सह पुनः प्रविश्य ) एसो देवो णं उवसप्पदु अज्जो ( इति निष्क्रान्तः ) ।

[ यत् आज्ञापयति भर्त्ता । एष देवः ननूपसर्पत्वार्य्यः । ]

मान । ( पुरोहितं दृष्ट्वा ) अहो रोषोग्रगम्भीराकृतिरयं पुरोधाः । तथा हि—

शुभ्रादभ्रजटाटवीपरिमिलद्गङ्गातरङ्गद्युति-
र्भस्मोद्धूलितगौरपीवरतनूरुद्राक्षमालाधरः ।
दृष्टिव्यञ्जिततेजसां निधिरयं दण्डं प्रचण्डं दधत्
साक्षाद्रुद्र इवाद्रिगात्रजरठो भ्रूभङ्गभीमोऽञ्चति ॥ (१)

---

(१) शुभ्रेत्यादि—। शुभ्रा जरसा शुक्लवर्णा अदभ्राः प्रचुरा जटा एवाटवी वनम् अतिनिविड़त्वात्तत्राटवीत्वारोपः, अथवा तासां जटानामटवी घनः समूहः लोकारण्यादिवत् । तत्र परिमिलन्ती संगच्छमाना गङ्गातरङ्गद्युतिः गङ्गायास्तरङ्गास्तेषां द्युतिरिव द्युतिर्यस्य सः, द्युतिः शोभा । अत्र निदर्शनालङ्कारः । भस्मना उद्धूलिता उद्गतधूलिः कृता, धूलिभिरिवाच्छादिता भस्मोद्धूलिता गौरपीवरतनुः गौरवर्णस्थूलदेहो यस्य सः, रुद्राक्षमालाधरः रुद्राक्षमालाया धरः धृधातोः पचादित्वाद् भूधर इत्यादिवदच्प्रत्ययात् । दृष्टिव्यञ्जितानि चक्षुःसूचितानि तेजांसि अन्तःस्थप्रभावाः तेषां निधिः आश्रयः, प्रचण्डं भयङ्करं दण्डं यष्टिं दधत् धारयन् अद्रिगात्रजरठः शैलदेहवत् कठिनः भ्रूभङ्गः भ्रूकुटिः तेन भीमः भयानकः अतएव साक्षात् प्रत्यक्षभूतो रुद्र इव अयं पुरोधाः अञ्चति पदक्षेपं करोति । रुद्रोऽपि गङ्गातरङ्गशोभितजटाकलापः भस्माच्छादितशुभ्रस्थूलदेहः, रुद्राक्षमालाधारी नयनत्रयेण व्यञ्जितानां तेजसां [illegible] निधिः आश्रयः [illegible]

(दूरादुत्थाय) अभिवादये भवन्तम् । इदमासनमत्रास्यताम् ।

पुरोधाः । (मानसिंहं दृष्ट्वा स्वगतम्) अहो नीति-निपुणोऽयं मानसिंहः । अहन्तु कथमेनं जवनकिङ्करं महा-राजेति ब्रवीमि ! अथवा यस्य खल्वितः शीघ्रनिष्क्रासनं शीघ्र-गमनं वास्माकमुत्सवहेतुः सोऽपि महाराजव्यपदेशं भजते । महः अराजो यस्येति विग्रहात् तदभिप्रायेणेमं महाराजं ब्रवीमि । (प्रकाशम्) विजयतां(१) महाराज (इत्युपविशति) ।

मान । आर्य्यमिश्राणाम् अत्रागमनखेदस्य कारणं ज्ञातु-मिच्छामि ।

पुरोधाः । महाराज ! धर्म्मरक्षणप्रधानफला हि भगवतो नारायणस्य नराधिपविभूतिः । धर्म्मोपरोधकातरस्तावदास्मानं चिन्तयन् भवन्तमहमद्य शरणमापन्नः (२) ।

---

दण्डपाशासिपाणय इति शिवपुराणीयस्तोत्रात्, गिरिशयनाद्गिरिशत्वेन अद्रिगात्र-विलुण्ठनेन कठिनः भ्रुवा भ्रूक्षेपमात्रेण भङ्गः प्रलयो यस्मात् सः भीमः संहर्तृत्वा-त्तद्वदित्युत्प्रेक्षा, तदानीं रुद्रस्याप्रत्यक्षत्वेऽपि प्रत्यक्षत्वकथनात् ।

(१) विजयतां न्यूनीभवनार्थे जिधातुरकर्म्मकः, तेन विजयतामित्यस्य विशेषेण न्यूनीभवतु मेवारराजादित्यर्थः पुरोहिताभिप्रेतः, सर्वोत्कर्षेण वर्त्ततामि-त्यर्थस्तु प्रसिद्धः ।

(२) भगवतो नारायणस्य नराधिपविभूतिः, नराणाञ्च नराधिपमिति गीतोक्ता नराधिपरूपा विभूतिः धर्म्मरक्षणफला धर्म्मरक्षार्था हि यतः, अतः धर्म्मोपरोध-कातरः धर्म्मोपरोधाद् धर्म्महानेः कातरः भयार्त्तः, कथं धर्म्मरक्षा भविष्यतीति

मान । यद्येवं (१) समाश्वसितु महाभागः ।

यावज्जीवाम्यहं तावत्तीर्थस्य ब्राह्मणस्य च ।
धर्म्महानिभयं नास्ति सत्यमेतद्वचो मम ॥

कस्तावद्धर्म्मोपरोध इति विशेषेण पुनरवगन्तुमिच्छामि ।

---

चिन्ताकुल इति पर्य्यवसितार्थः । अहं तदात्मानं भगवत्स्वरूपं भवन्तं चिन्तयन् भावयन् विभूतिमतो विभूतेश्चानन्यत्वादित्याशयः । अथ शरणमापन्नः रक्षकत्वेनाश्रयामीत्येकोऽर्थः । अपरश्च हे महाराज, हे नराधिप नराणाम् आधिं मनःपीड़ां पाति रक्षति, धार्म्मिका हि नराः = मनुष्याः, अधार्म्मिकास्तु नराकृतयोऽप्यमनुष्याः । सजातीनां स्वदेशस्य च निग्रहे मनुष्या आधिमन्तो भवन्ति न त्वमनुष्याः, नराणां तथाविधमाधिं त्वमेव रक्षसि स्थापयसि । भगवतो नारायणस्य विभूतिः, धर्म्मरक्षणफला धर्म्मरक्षार्था यदा यदा हि धर्म्मस्य ग्लानिर्भवति तदात्मानं सृजाम्यहमित्यादिगीतावचनात् । अतः कारणात् भवं एकलिङ्गनाथशिवं तदात्मानं नारायणस्वरूपं चिन्तयन् भावयन् हरिहरयोरभेदं भावयन् तं शरणमापन्नः, एकलिङ्गनाथमेव शरणं प्राप्तः इति । अनयोः प्रथमोऽर्थो मानसिंहेन गृह्यतां किन्तु द्वितीयार्थमेवाभिप्रेत्य पुरोधा इदमुक्तवान् अन्यथा तस्य पुरोधसो वचःशुद्धिर्व्याहन्येत । अत्र पक्षे भवन्तमित्यत्र च्छेदाद् भवं तमिति पदद्वयम् ।

(१) मानसिंहः प्रथममर्थं बुध्यमान आह—यद्येवमिति । यावदिति तीर्थस्य शास्त्रप्रसिद्धस्य पुण्यस्थानविशेषस्य काश्यादेः, धर्म्मस्य तत्सेवा पुण्यार्ज्जनस्य हानिभयम् तद्विलोपजनिताभावत्रासः जनानां नास्ति, ब्राह्मणस्य च धर्म्महानिभयं नास्ति—ब्राह्मणस्य स्वधर्म्मपालनबाधा नास्ति तीर्थविध्वंसनं जवनभूपतिभिर्यत् कृतपूर्व्वं तदिदानीं पुनर्न भवति, विध्वस्ततीर्थोद्धारश्च भवति,—ब्राह्मणाश्च न स्वधर्म्माच्च्याव्यन्ते जवनराजत्वेऽपि यदिदं जातं तन्मत्प्रभावादेवेति भावः । तस्मान्मयि जीवति ब्राह्मणस्य ते, धर्म्महानिभयं नास्तीति समाश्वासनम् ।

पुरोधाः । ( सहर्षम् ) चिरं जीवतु भवान् । अनेन ते सत्यवचनेन पुनरुज्जीवितोऽस्मि । तदिदानीमविशङ्कमना एव महाराजप्रहितं (१) भगवदेकलिङ्गनाथस्य पूजासम्भारं प्रतिप्रेषयामि । यदयमेवास्माकं धर्म्मोपरोधहेतुः ।

मान । ( स्वगतम् ) उद्भिन्नप्रायमप्याशयमस्य विशेषतो जानामि । ( प्रकाशम् ) आर्य्य ! भवदुत्तरप्रतिपत्ति (२) रेव पूजासम्भारः प्रहितः, स हि भगवतेऽर्पयित्वा भवतैव उपादेयः ।

पुरोधाः । ( सक्रोधम् ) शान्तं शान्तम् । महाराणाप्रतापसिंहस्य भगवदेकलिङ्गनाथपूजनपुरोहितप्रधानं खल्वहम्, कथं नाम भवादृशां याजको भविष्यामि ? महाराज ! सत्यवचनो भव; भवदर्पितपूजासम्भारेण एकलिङ्गनाथमहादेवपूजनमेवास्माकमद्यतनो धर्म्मोपरोधः । तत्राभयमर्पितवतस्ते कथमयं व्यतिक्रमो भवति !

सेना । भो ब्राह्मण ! क्षुद्रः खलु प्रतापसिंहो महाराजस्य चरणनखरेणापि न युज्यते तुलयितुम् । स हि—

---

( १ ) महाराजप्रहितं = महाराजेन भवता प्रेषितम् ।

( २ ) भवदुत्तरप्रतिपत्तिः = उत्तरा पूजानन्तरा प्रतिपत्तिः प्राप्तिर्भवता कर्त्र्या उत्तरप्रतिपत्तिर्यस्य सः पूजासम्भारः = पूजोपचारद्रव्यजातम्, भवानेवास्य उत्तराधिकारीत्यर्थः, तदर्थं स्पष्टीकरोति स हीति ।

यद्भीत्या परिहृत्य लोकनिलयं त्यक्त्वा सुखं सम्पदां
गत्वा श्वापदसङ्कुलं वनमहो वन्यैः सदावर्त्तत।
लोलां दृष्टिमितस्ततश्च रचयन्नध्यास्त वल्लीगृहं
सोऽयं श्रीयुतमानसिंहनृपतिर्वर्व्वर्त्ति सर्व्वोपरि ॥ (१)

तदात्मनो भागधेयं मन्यस्व यत् प्रतापयाजकस्त्वं महाराजेन याजकतया स्वीकृत इति।

पुरोधाः। (सक्रोधम्) अरे! मृषाकटुप्रलापिन्! जवनदासानुदास! देवभावमुपगतं महाराणाप्रतापसिंहमधिक्षिपतस्ते न विदीर्णमलीकगुरुनिन्दा (२) कल्मषोपहतया सहस्रधा रसनया। स खलु।

---

(१) यद्भीत्येत्यादि—। यद्भीत्या = यस्मात् मानसिंहाद् भयेन। मानसिंहस्य जवनराजसेनापतित्वात् प्रौढ़ोक्तिरियम्। अहो इति धिगर्थमव्ययं वन्यैः वनोद्भवैः शाकादिभिः अवर्त्तत जीवनं रक्षितवान्। लोलां = भयचञ्चलाम्, दृष्टिम् इतस्ततो रचयन् अनियतासु दिक्षु पातयन्, वल्लीगृहं = लतानिर्म्मित-कुटीरम्, अध्यास्त = अधिवसति स्म। मानसिंहनृपतिः = मानसिंहनामा नृपतिः मध्यपदलोपी कर्म्मधारयः, सर्व्वोपरि = सर्व्वेषां प्रतापप्रभृतीनां सर्व्वेषां क्षत्रियाणामुपरि, वर्व्वर्त्ति = अतिशयेन वृद्धिमान् भवति। वृद्धिरभ्युदयः उत्कर्ष इति यावत् वृधधातोर्यङ्लुकि रूपम्। अतिशयेन वर्त्तते इति वृतधातो रूपं वा, अत्र अतिशयः अन्यातिक्रमः वृत्तिः स्थितिः।

(२) अलीकगुरुनिन्देति—। गुरोः प्रतापसिंहस्य निन्दा, विप्राणां ज्ञानतो ज्यैष्ठ्यं क्षत्रियाणाञ्च वीर्य्यतः। इति स्मृतेः ज्येष्ठत्वेन प्रतापसिंहस्य क्षत्रियगुरुत्वादियमुक्तिः क्षत्रियकुलसम्भूतसेनापतिं प्रत्युचिता। अलीका मिथ्याभूता गुरुनिन्दा,

दिल्लीवल्लभमस्तके निजपदं कुर्व्वन् स्वगर्व्वोज्ज्वलः
स्वाधीनः प्रशशास वीर्य्यविजितं भूखण्डमामृत्यु यत् ।
यद्युष्मद्बलविक्रमानगणयन्नाक्षिप्य चैनं महा-
मानं मानमपाचकार पतितं को नाम तद्विस्मरेत् ॥ (१)

---

तस्याः कल्मषं पापं तेनोपहतया दूषितया। प्रतापसिंहदेवो भयेन लोकालयं न परित्यक्तवान्, आकब्वरवाहिनीनां प्राचुर्य्येण स्वल्पसेनापरिवृतस्य तत्प्रतिपक्षस्य युद्धनीतिरेषा। नापि तादृगाचरणं मानसिंहभयेन, मानसिंहस्यालक्ष्यत्वात् तस्मात् त्वया मानसिंहसेनापतिना प्रतापसिंहदेवमुद्दिश्य [illegible] कथितं तन्मिथ्येति भावः। तस्मात्तेन पापेन ते जिह्वा कथं सहस्रधा न खण्डिता इति भावः। विदीर्णमिति भावे क्तप्रत्ययात् काक्वूक्तेश्च।

(१) स्वगर्व्वोज्ज्वलः स्वेन स्वकीयेन गर्व्वेण अहङ्कारेण जात्यभिमानेन उज्ज्वलः उद्दीप्तः स्वाधीनः दिल्लीश्वराधीनत्ववर्ज्जितः, स प्रतापसिंहदेवः खलु निश्चये, इति गद्यार्थान्वितम्। दिल्लीवल्लभमस्तके आकब्वरशिरसि निजपदं कुर्व्वन् युद्धे पुनःपुनर्ज्जययुक्तः तम् आकब्वरं न्यञ्चं कुर्व्वन्नित्यर्थः। वीर्य्यविजितं स्ववीर्य्यप्रयुक्तजयेन लब्धं भूखण्डम् उदयपुरराज्यम्, आमृत्यु मरणपर्य्यन्तं यत् प्रशशास स्वशासनाधीनं ररक्ष, यच्च, युष्मद्बलविक्रमान् = अयञ्च ते च त्वञ्च इत्येकशेषात् यूयमिति अयं मानसिंहः ते तद्भर्त्तारो जवनाः त्वं च सेनापतिरित्येषां युष्माकं बलविक्रमान् बलानि अश्वगजपदातिरूपसैन्यानि विक्रमाः शौर्य्यसत्त्वादिगुणाः तान् अगणयन् उपेक्षमाणः, महामानमेनं महामानमिति सोपहासोक्तिः वर्व्वर्त्ति सर्व्वोपरीत्यस्योत्तरस्वरूपा, पतितं जवनश्यालतया पातकग्रस्तम् एनं त्वदुक्तं पुरतो दृश्यमानं मानं माननामानं आक्षिप्य निन्दित्वा अपाचकार निराकृतवान् तत् को नाम विस्मरेत् स्मृतिपथादपनयेत्।

अत्र दिल्लीवल्लभमस्तके निजपदं कुर्व्वन्नित्यतिशयोक्तिरसम्बन्धे सम्बन्ध

मान। (स्वगतम्) अहो श्रोत्रविदारी खल्वयं वचनसङ्घातः। सम्प्रति हि—

दहति हृदयं क्रोधाग्निर्मे बहिर्न तु दीप्यते
स्फुरति रसना वेगाद् वाचं न तु प्रतिपद्यते।
प्रचलति करः स्प्रष्टुं खड्गं न तूत्सहते तथा
भवति च वधाकाङ्क्षा विप्रस्त्वसाविति सीदति॥ (१)

यतः—



मिथ्यापि वार्त्ता कथिता समक्ष-
मस्माभिराच्छादिततत्त्वमूला।

---

वचनात् तत् तात्पर्य्यभूते दिल्लीपतेरवमानने हेतुः वीर्य्यविजितभूखण्डे स्वाधीनतया प्रशासनमिति वाक्यार्थस्तस्मात् काव्यलिङ्गम्, उत्तरार्द्धे बलविक्रमागणनमानसिंहनिराकरणयोर्हेतुहेतुमद् भावस्य वाक्यार्थत्वात् काव्यलिङ्गं महामानं मानमित्यत्र यमकञ्च।

(१) दहतीत्यादि—। क्रोधाग्निः मे मम हृदयं दहति ज्वलयति न तु बहिर्दीप्यते प्रज्वलति, वेगात् जवेन रसना स्फुरति अन्तश्चलति अनुरूपमुत्तरं दातुमिति भावः, न तु वाचं प्रतिपद्यते वाक्योच्चारणाय न समर्था भवति। करः हस्तः खड्गं स्प्रष्टुं धर्त्तुं प्रसरति अग्रेसरो भवति न तु तथा उत्सहते यथा खड्गधारणं भवति तद् यथा स्यात् तथा नोत्सहते न क्रमते, (किं बहुना) वधाकाङ्क्षा अस्य पुरोधसो वधे आकाङ्क्षा भवति च, तु किन्तु असौ विप्र इति सीदति अवसीदति निवर्त्तते। प्रत्यक्षीभूतस्यापि पुरोधसो विप्रत्वस्य प्रसिद्धिमात्रमूलत्वात् असावित्यदःशब्देन निर्द्देशः। पादत्रये विशेषोक्तिः चतुर्थचरणे परिसंख्या, सामान्यतः प्राप्तस्य बाधक-

लोभाद्भयाद्वा प्रतिवादशून्यं
सोढ़ा चिरं सत्यतया निरूढ़ा ॥ (१)

सेना। अरे ब्राह्मणाधम !

ध्वस्तप्राय-पुराण-चिह्न-पतित-प्रासादहर्म्योपल-
स्तूपोद्भासितकाननान्त-पिहितां काशीमयोध्यां तथा।
यः संस्थाप्य पुनर्बभूव पतितोद्धारस्य हेतुश्चिराद्
ब्रूषे त्वं पतितं तमेनमनघं चौणीभुजं देवल ॥ (२)

---

हेतूपन्यासेनात्र निवर्त्तनात्, पूर्व्वचरणत्रये वाधकानुपन्यासेन हेतुसत्त्वे फलाभाव-प्रतिपादनाच्च। क्रोधाग्निरित्यत्र रूपकम्। हरिणीच्छन्दः।

(१) मिथ्येत्यादि—। असौ वार्त्ता मत्पितृव्यपुत्र्याः सेलिमेन विवाह-वृत्तान्तः मिथ्यापि अस्माकं समक्षं कथिता अस्माभिः लोभात् राजप्रसादलोभात् भयाद्वा जवनराजो वञ्चितोऽस्माभिरिति तेषां ज्ञाने दण्डभयाद्वा अस्माभिः आच्छा-दिततत्त्वमूला आच्छादिततत्त्वं मूलं यस्याः सा। दासीं कन्यात्वेन जवनराजेभ्यो दत्ता इति तत्त्वस्य च्छादनमेवास्या मिथ्यावार्त्ताया मूलम् इति भावः। अतएव प्रतिवादशून्यं विना प्रतिवादं चिरं दीर्घकालं सोढ़ा सती सत्यतया निरूढ़ा सत्यत्वेन प्रसिद्धा।

अस्मत्समक्षं दिल्लीसभादौ सेलिमेन मत्पितृव्यदुहिता परिणीता इति वृत्तान्तस्य कथने तत्प्रतिवादो लोभभयादिनास्माभिर्न कृतः इति तद्वृत्तान्तस्य सत्यत्वं सर्व्वतः प्रसिद्धमिति भावः। तत्त्वं तूक्तमस्मद्वंश्या इति श्लोके।

(२) ध्वस्तप्रायेत्यादि—। ध्वस्तप्रायाणि प्राचुर्य्येण ध्वस्तानि पुराण-चिह्नानि पुरातनलक्षणानि यस्याः, सा, चासौ पतिताः भूमिसाद्भूताः ये प्रासादाः देवगृहाणि हर्म्याणि अट्टाश्च तेषाम् उपलस्तूपे स्खलितपाषाणराशौ उद्भासितानि आविर्भूतानि यानि काननानि वनानि तेषामन्तैः स्वरूपैः पिहिता च आच्छादिता

पुरोधाः । अरे क्षत्रियकुलपांशुल (१) !

धर्म्मदम्भेन पापीयान् आवृतोऽपि न शुध्यति ।
पुष्पसंभारसंच्छन्नः किं शुद्धिं भजते शवः ॥ (२)

अपिच—

यैर्विध्वंसितदेवविग्रहचयप्रासादहर्म्म्यावली-
भङ्गोद्भावितकाननान्तनिचिते साकेतकाशीपुरे ।

---

चेति विशेषणकर्म्मधारयः तां काशीं तथा तादृशीमेव अयोध्यां यः पुनः संस्थाप्य पुनः प्रतिष्ठितां कृत्वा पतितोद्धारस्य पतितानां पातकग्रस्तानां नराणामुद्धारहेतुः काशीदर्शनमयोध्यादर्शनं च सम्पाद्य उद्धारकारणं बभूव, रे देवल, निष्पापं क्षौणीभुजं राजानं तमेनं पतितं ब्रूषे । पतितोद्धारकारणत्वं निष्पापत्वे हेतुरिति काव्यलिङ्गं देवल इत्यनघमिति क्षौणीभुजमिति च विशेषणानां साभिप्रायत्वात् परिकरालङ्कारः । देवलत्वेन तस्य चिकित्सकान् देवलकान् इति स्मृत्युक्तापाङ्क्तेयत्वेन पापिष्ठत्वं क्षौणीभुजमित्यनेन 'अष्टानां लोकपालानां वपुर्धारयते नृपः' इति स्मृत्युक्तलोकपालाष्टकतुल्यत्वेन निष्पापत्वञ्च ध्वनितम् ।

(१) पांशुलः पापी । क्षत्रियकुलेषु क्षत्रकुलस्य वा पांशुलः तत्सम्बोधनम् ।

(२) धर्म्मेत्यादि—। पापीयान् पापिष्ठः जन इति शेषः । धर्म्मदम्भेन, धर्म्मस्य दम्भः छलं तेन आवृतोऽपि प्रच्छादितोऽपि प्रच्छादितस्वकृतपापोऽपि न शुध्यति वस्तुतः शुद्धो न भवति । प्रमाणमाह पुष्पसंभारसंच्छन्नः पुष्पसंभारेण कुसुमराशिना संच्छन्नः संवृतः शवः गतप्राणदेहः शुद्धिं भजते किम् ? स्पृश्यतां न लभते इत्यर्थः,—शवं तत्स्पृष्टिनं स्पृष्ट्वा सचेलो जलमाविशेदिति स्मृतेः । छदधातोर्णिजन्तात् निष्ठायां निपातनात् (वा दान्तेति पा० ७-२-२७) छन्न इत्यस्य सिद्धिः । प्रतिवस्तूपमालङ्कारः ।

तद्रूपे द्विजवेदगोपरिभवख्याते कुले जावने
स्वस्रुत्सर्गमहाघमेनमनघं वक्तुं न धत्से त्रपाम् ॥ (१)

अथवा का ते त्रपा जवनश्यालचरणरेणुभोजिनो जवन-दासानुदासस्य क्षत्रकुलकलङ्कस्य ।

मान । (सक्रोधमात्मगतम्) एवमलीकापवादं सत्य-मिवोद्घोषयन्नयं कथं नाम मर्षणीयः ?

---

(१) ध्वस्तप्रायेत्यादिसेनापतिवचनं विशेषेण खण्डयति—यैरिति । साकेतम् अयोध्या, साकेतकाशीपुरे अयोध्याकाशी चेति नगरद्वयम्, यैः आक्रामद्भिः पुरुषैः विध्वंसितदेवविग्रहचयानां चूर्णीकृतदेवमूर्त्तिसमूहानां प्रासादहर्म्यावलीनां भङ्गैः खण्डनैः उद्भावितानाम् उत्पादितानां काननानामन्तैः स्वरूपैः प्रान्तैर्वा निचिते व्याप्ते अभूतामिति शेषः । अयोध्याकाशी चेति तीर्थद्वयं येषामाक्रमणेन वनावृतमभूत्—तद्रूपे तेषां रूपमिव रूपं धर्म्म इव धर्म्मो यस्य तस्मिन् द्विज-वेद-गो-परिभवख्याते द्विजाश्च वेदाश्च गावश्च तेषां परिभवेण—निग्रहेण—द्विजानां धर्म्मविलोपनेन वेदानां वेदग्रन्थानां दाहेन गवां वधेन च ख्याते प्रसिद्धे जावने जवनसम्बन्धिनि कुले वंशे स्वसुर्भगिन्या उत्सर्गः क्षेप एव महाघं गुरुपापं यस्य तमेनं मानसिंहम् अनघं निष्पापं ब्रुवन् कथयन् त्रपां लज्जां न धत्से वहसि इति काकुः । कुल इत्यस्य समासानन्तर्गतत्वेऽपि कारकत्वेन वृत्तिशब्दैकदेशस्योत्-सर्गस्य तेनान्वयः ।

मानसिंहो यदि धार्म्मिकोऽभविष्यत् तदा धर्म्मद्रोहिजवनकरे स्वीयां स्वसारं नार्पयिष्यत्, अयोध्याकाश्युद्धारश्च तस्य धार्म्मिकत्वख्यापनाय न तु तेन तस्य कश्चिद् धर्म्मः भावशुद्धेरेव धर्म्महेतुत्वात् अधर्म्मस्तु तस्य महानेव जवनसंसर्गादिति श्लोकद्वयाशयः । जवनकुलस्य कन्यासम्प्रदानयोग्यत्वाभावात् जावने कुले इत्यत्र न चतुर्थीविभक्तिः प्रयुक्तेति बोध्यम् ।

वरं ब्रह्मवधो मेऽस्तु वागेषा तु निवर्त्तताम् ।
एवं श्रवणयोर्वज्रं नाद्याहं सोढुमुत्सहे ॥(१)

तस्मात्—

मानोन्मुक्तकृपाणपातजनितासंख्यातसंख्यातत-
श्रीशालिक्षितिपालिमौलिविगलन्मुक्तावलीमण्डिता ।
एतस्य स्वयमद्य मद्यमधुरास्वादप्रसादप्रद-
ग्रीवाच्छेदसमुद्भवोच्छलदसृग्धारा धरा पीयताम् ॥(२)

( इति खड्गमुद्यच्छन् प्रतिसंहृत्य )

---

(१) वरमित्यादि—। ब्रह्मवधः ब्रह्महत्या अस्य पुरोधसो हननं वरं मनाक् प्रियं यथा स्यात्तथा अस्तु भवतु तु पुनः एषा वाक् इदानीमुच्चार्य्यमाणा वाक् मन्निन्दा-वाणी निवर्त्ततां विरमतु। तत्र हेतुमाह अद्य अस्मिन् समये एवम् ईदृशम् श्रवणयोः कर्णयुगलस्य वज्रं कुलिशं सोढुं सहितुं नोत्सहे न समर्थोऽस्मि ।

ब्रह्मवधस्य मनाक् प्रियभावहेतुरेतादृशकठोरवाग् विराम इति पूर्व्वार्द्धे काव्यलिङ्गम् । उत्तरार्द्धे एवं वाग् वज्रमिति परिणामालङ्कार एवमित्यस्योपादानात् नातिशयोक्तिः । एवमित्यस्य प्रकारबोधकत्वात् न रूपकम् ।

(२) मानोन्मुक्तेत्यादि—। मानस्य मानसिंहस्य उन्मुक्तकृपाणः कोषोद्धृतखड्गः तस्य पातः प्रहारः, तेन निहता असंख्याता संख्यातीता संख्यातत-श्रीशालिक्षितिपालिः संख्ये युद्धे आतता विस्तृता या श्रीः जयलक्ष्मीः तया शालन्ते शोभन्ते ये तेषां क्षितिपानामालिः श्रेणिस्तस्या मौलिभ्यः मुकुटेभ्यः विगलन्त्यः मुक्तावल्यः मुक्तासमूहाः मुक्तामाला वा ताभिर्म्मण्डिता भूषिता धरा पृथिवी स्वयम् आत्मना एतस्य पुरोधसः मद्यमधुरास्वादप्रसादप्रदग्रीवाच्छेदसमुद्भवोच्छ-लन्ती या असृग्धारा ताम् अद्य पीयताम् पिबतु पीङ्पाने इति दिवादिकपीधातोः

अथवा सर्व्वथा वाष्पाकुलमेवास्य महतः क्लेशस्य मूलं, तन्निपातनमेवैकः प्रतीकारोपायः। न पुनरस्य क्षुद्रस्य शारीरो दण्डः।

सेना। अरे मूढ़!

अघवाननघो यथा तथा वा
प्रवरोऽयं त्वदपेक्षया तु नित्यम्।
ननु भिक्षुक! देवलस्त्वमेनं
क्षिपसि क्षौणिपतिं यथार्कमन्धः॥(१)

---

कर्त्तरि लोटि रूपम्। बहुषु युद्धेषु यैर्जयलक्ष्मीरर्ज्जिता ते राजानः मानसिंहेन कृपाणाघातेन निहता इति भावः। मद्येति—मद्यमधुरास्वादा मद्यमिव मधुरास्वादा मधुररसवती माधुर्य्यमत्र प्रीतिप्रदत्वेन बोध्यम्, प्रसादप्रदा प्रसन्नताजनिका इत्यनयोः विशेषणसमासः। मद्यमधुरास्वादप्रसादप्रदा चासौ ग्रीवाच्छेदसमुद्भवोच्छलदसृग्धारा चेति कर्म्मधारयः। ग्रीवाच्छेदात् ग्रीवाकर्त्तनात् समुद्भवो यस्याः सा उच्छलन्ती उद्गम्य निपतन्ती असृग्धारा उच्छलदसृग्धारा ताम्। असृग् रक्तम्। धराया यत्र यत्र खण्डे राज्ञां निधनं मानसिंहेन कृतम्, पुरोधसो रक्तधारायास्तत्तद्दर्शेन सम्बन्धाभावेऽपि तदधिष्ठातृदेवताया ऐक्यात् मुक्ताभूषणं रुधिरमद्यपानञ्च तस्या नानुपपन्नमित्येतद्बोधनाय स्वयमिति पदमुपात्तम्। अत्र वृत्त्यनुप्रासश्रुत्यनुप्रासौ संख्यातसंख्यातेति मद्यमद्येति च यमकद्वयं मद्यमधुरास्वादेत्युपमा, धरायां मद्यपकामिनीव्यवहारसमारोपात्समासोक्तिश्च।

(१) अघवानित्यादि—। अयं देवः अघवान् महापापविशिष्टः अतिशायनेऽपि मतुपो विधानात्, अनघः निष्पापो वा यथा तथा अस्तु—यद्वास्तवं तदेवास्तु एतेन निन्दाया मिथ्यात्वं सूचितम्। तु किन्तु त्वदपेक्षया नित्यं नियतं प्रवरः विशेषेण

पुरोधाः । अरे गर्भदास !

नाहं दासानुदासो जवननरपतेर्नापि तत् श्यालदासो
नैवाहं सारमेयः परनिलयरतो नास्मि कुक्षत्रियो वा ।
स्वाधीनां वृत्तिमश्नन्नुपजनितसुखामेकलिङ्गप्रसादा-
देषोऽहं भूमिदेवः सुकृतिकृतिगणैः पूज्यमानाङ्घ्रिरस्मि ॥(१)

तत्र—अदेवलोऽहमथवा भवामि यदि देवलः ।
तथापि जवनश्यालं न याजयितुमुत्सहे ॥ (२)

---

श्रेष्ठः । ननु भर्त्सने भिक्षुक भिक्षोपजीविन् देवलरत्वं क्षौणिपतिं राजानं क्षिपसि—निन्दसि, अन्धः अर्कं यथा क्षिपति तद्वत् । अन्धस्य सूर्य्यनिन्देव तवेयं महाराजनिन्देति भावः । भिक्षुकत्वदेवलत्वक्षौणिपतित्वैरपकर्षोत्कर्षहेतुबोधनात् काव्यलिङ्गम् । अन्धस्य सूर्य्यनिन्दायाः प्रसिद्धिविरहेण सम्भावनारूपत्वाद् यथार्कमन्ध इत्यत्रोत्प्रेक्षा ।

(१) नाहमित्यादि—। यदि प्रवरनिन्दनमवरेण कर्तुं न शक्यमिति त्वया स्वीक्रियते, त्वत्तः प्रवरस्य मे निन्दनं कथं त्वया क्रियते, नापि निन्दायोग्योऽहम्, किञ्चाहमेव प्रवरो न तु त्वदीयो महाराजोऽपि, इत्याशयेनाह नाहमित्यादि ।

प्रथमचरणेन सेनापतेरपकर्ष उक्तः । द्वितीयचरणेन जवनपतिसेवकत्वेन मानसिंहस्य सारमेयतुल्यत्वं कुक्षत्रियत्वञ्चोक्तम् । स्वस्योत्कर्षमाह स्वाधीनां वृत्तिमित्यनेन वृत्त्युत्कर्षः, अनेनैव देवलत्वपरिहारश्च देवोपजीवित्वाभावादुपदर्शितः । जात्युत्कर्षमाह एषोऽहं भूमिदेव इत्यादिना । पूर्व्वार्द्धे स्वस्य जवननरपतिदासानुदासत्वादिनिषेधादप्रस्तुतात् प्रस्तुतस्य सेनापतिमानसिंहयोः क्रमेण—तथात्वस्य गम्यमानतया प्रस्तुतप्रशंसा, सारमेय इत्यत्रातिशयोक्तिः परनिलयरत इत्यस्य तत्र हेतुत्वेन काव्यलिङ्गम्, दिल्लीनगरे जवनराजदत्तगृहावस्थाननियमेन परनिलयरतत्वं मानसिंहस्य युक्तम् । द्वितीयचरणं सेनापतिपक्षेऽपि युज्यते । शेषार्थः सुगमः ।

(२) अदेवल इत्यादि—। स्वसिद्धान्तमाह अदेवल इति । अदेवल

मान । (सक्रोधम्) हन्त! हन्त! दुःसहमेतत्, तस्मात् इतः प्रस्थानानन्तरम्—

यावन्न स्यात् श्मशानोपममनिशनदद्गृध्रगोमायुकङ्कं
निःश्रीकं वीरनारीचयरचितचितासञ्चयैराचितञ्च ।
मेवारक्षेत्रमेतद् द्विजरचितवचोवज्रपातेन हीनं
तावन्नात्र प्रवेक्ष्याम्यहमिति शपथो यद्यहं मानसिंहः ॥ (१)

---

इति तत्त्वम् परोक्तं देवलत्वमभ्युपगम्याह भवामि यदि देवल इति । तथापि जवनश्यालं मानसिंहं याजयितुं तत्प्रातिनिध्येन भगवदेकलिङ्गनाथपूजां सम्पादयितुं नोत्सहे, न समर्थोऽस्मि । जवनश्यालमित्यस्य याजनाभावहेतुरूपेणोपन्यासात् काव्यलिङ्गम् ।

(१) यावदित्यादि—। एतत् मेवारक्षेत्रं मेवारभूमिः अनिशनदद् गृध्रगोमायुकङ्कम् अनिशं नदन्तः शब्दायमानाः गृध्रा दाक्षाय्यपक्षिणः गोमायवः शृगालाः कङ्काः आमिषप्रियनामानः पक्षिविशेषा यत्र निःश्रीकं गतशोभं वीरनार्य्यः वीराङ्गनाः तासां चया समूहाः सङ्घभेदात् कालभेदाच्च बहुत्वं तैः रचिताः चितासञ्चयाः शवदाहस्थानश्रेण्यः तैराचितं व्याप्तं सत् श्मशानोपमम्, अतएव द्विजविषमवचोवज्रपातेन द्विजानां शुकपक्षिणां ब्राह्मणस्य च विषमवचो दारुणवाक्यमेव वज्रं तत्पातेन श्रवणेन्द्रिये तत्प्रवेशेन शून्यं यावन्न स्यात् यद्यहं मानसिंहः मानसिंहनामा स्यां तावत् अत्र न अहं न प्रवेक्ष्यामि प्रविष्टो न भविष्यामि, ग्रामे गच्छतीतिवत् अकर्म्मकत्वविवक्षया सप्तमी, शपथः सत्यम् । यद्येतद्वाक्यं मया न प्रतिपाल्यते, मानसिंहनाम मे मिथ्या भविष्यति 'योऽन्यथा सन्तमात्मानमन्यथा सत्सु भाषते । किं तेन न कृतं पापं चौरेणात्मापहारिणा ॥' इति स्मृत्युक्तपापं मे भविष्यतीति भावः ।

पुरोधाः । (सोपहासम्) वीरप्रधान ! बहुशो वितथ-प्रतिज्ञस्य ते सुविवेकविजृम्भिता प्रतिज्ञेयम् अवितथा भविष्यति । यथा किल ममासौ प्रतिज्ञा—

यावद्भारतसाम्राज्यमहं नोपाददे बलात् ।
तावद्दिल्लीशशुद्धान्तं न विशामि स्वयेच्छया ॥

सेना । अरे वाचाट ! नन्वयं न भवसि—

देवादिदेव-दधिपायस-लोभलाला-
क्लिन्नामनर्गलमृषावचनैकदक्षाम् ।
जिह्वां विकृष्य तव दुर्व्वचनप्रगल्भा-
मेतेन तावदसिना तिलशश्छिनद्मि ॥ (१)

(इति पुरोधसं ग्रहीतुमुपसर्पति)

पुरोधाः । (सावष्टम्भम्) अरे मूढ़ !

---

(१) देवेत्यादि—। देवादिदेवः एकलिङ्गनाथशिवः, तस्य यद् दधिपायसं तस्य लोभः, तेन लालाक्लिन्नां स्यन्दिनीभूयिष्ठाम् अनर्गलं निर्ब्बाधं मृषावचनं मिथ्यावर्णनं तत्र एकदक्षाम् अद्वितीयकुशलां दुर्व्वचनप्रगल्भां दुर्व्वाक्यप्रयोगे धृष्टां तव जिह्वां विकृष्य मुखकुहरादाकृष्य तिलशः तिलं तिलं यथा स्यात्तथा छिनद्मि, अत्र तिलशब्दस्तत्परिणामपरः । 'संख्यैकवचनाच्च वीप्सायाम्' इति (पा० ५-४-४३) शस्प्रत्ययः क्रियाविशेषणे कर्म्मविधानेन कारकत्वस्यान-पायात् । लालाबाहुल्यस्य वचनविघातकत्वेऽप्यनर्गलनिःसरणकथनाद् विरोधा-लङ्कारः, कालभेदग्रहणेन तत्परिहारात् । मृषाभाषणस्य श्रुतिकठोरवचनस्य च तिलशो जिह्वाच्छेदनहेतुत्वात् काव्यलिङ्गालङ्कारः ।

ममैकलिङ्गार्च्चनतत्परोऽयं करो रिपौ दण्डमपि प्रयुङ्क्ते ।
जिजीविषुश्चेदसि तिष्ठ तत्र पुरः पदं मा कुरु मृत्युहेतुम् ॥

( इति दण्डमुद्यच्छति )

मान । सेनापते ! ब्राह्मणोऽयं वराकः, निवर्त्तस्व दुर्व्यवसितादस्मात् । ( पुरोधसं प्रति ) ब्राह्मण ! प्रदत्ताभयोऽसि गच्छेदानीं यथाभिमतमनुष्ठातुम् ।

पुरोधाः । एवमस्तु ( इति निष्क्रान्तः ) ।

सेना । देव ! एवं दुर्व्वचनपटीयसि ब्रह्मबन्धौ किञ्चिदपि कर्त्तुमनीशस्य मे क्रोधाग्निर्नोपशाम्यति । दहति मे हृदयं तदनुजानातु देवः कथमप्येनमुपशमयितुम् ।

मान । सेनापते ! नायमवसरः पात्रं वा क्रोधस्य, वाग्वज्रपातदह्यमानं मामेवावलोक्य प्रतिपालय (१) तावदवसरम् । क्रोधोत्सर्गपात्रं पुनर्वाप्पाकुलमेव, यतः—

अत्रोद्भूतः प्रतापः प्रथमपरिभवं हन्त कृत्वा मदीयं
सर्व्वेषां देशजानां हृदयमनुगुणं तत्र नित्यं व्यधत्त ।
येनेदानीं निरीहा अपि यजनपरा ब्राह्मणा मूढचित्ता-
स्तिर्य्यंश्चोऽपि चमन्ते मयि मनुजपतौ वाग्विषं मोक्तुमारात् ॥ (२)

---

(१) प्रतिपालय = प्रतीक्षस्व ।

(२) अत्रेत्यादि—। अत्र वाप्पाकुले उद्भूतः उत्पन्नः प्रतापः प्रतापसिंहः हन्त खेदे मदीयं प्रथमपरिभवं प्रथमावमाननां कारणनिर्देशेन पङ्क्तिभोजनानङ्गी-

( आकाशे बद्धलक्ष्यः(१) ) अरे रे दुरभिमानपीवर (२) ! समयानभिज्ञ (३) ! प्रतापसिंह !

देशे देशे मम सुविमला कीर्त्यते कीर्त्तिगाथा
राज्ये राज्ये नरपतिगणा मत्पदान्ते लुठन्ति ।
क्षुद्रः क्षत्रः स्वकुलगरिमाहङ्कृतस्त्वं पुनर्मे
कार्य्याकार्य्ये विमृशसि पुरा श्वेव सिंहस्य मूढ़ ! ॥ (४)

---

काररूपां [illegible]वा सर्व्वेषां देशजानां देशवासिनां हृदयं मनः नित्यं तदनुगुणं मदीयपरिभवानुकूलं व्यधत्त कृतवान्, येन परिभवेण तदानुकूल्येन वा हेतुना यजनपरा याजकाः निरीहाः शान्ताः ब्राह्मणा अपि मूढ़चित्ताः अर्थबोधरहितास्तिर्य्यञ्चः पक्षिणोऽपि आरात् समीपाद् दूराच्च मनुजपतौ राजनि मयि इदानीम् अस्मिन् काले अद्यैतन्मुहूर्त्ते वाग्विषं विषतुल्यां वाचं मोक्तुम् उत्स्रष्टुं क्षमन्ते शक्नुवन्ति। वाग्विषमिति रूपकम्, याजकब्राह्मणानां पक्षिणाञ्च दुर्व्वचनप्रयोगपात्रत्वं क्व क्व च राजत्वमिति विरूपयोः संघटनात् विषमालङ्कारश्च ।

(१) आकाशे बद्धलक्ष्यः = नभसि निबद्धदृष्टिः क्रोधावेगेन विमूढ़ः प्रतापसिंहस्यासत्त्वेऽपि तदुपस्थितिं मन्यमान इति भावः, अथवा नभ उपलक्ष्य स्वर्गस्थं प्रतापमुद्दिश्येति ।

(२) दुरभिमानपीवर = निन्दितो यः अभिमानः साम्प्रतमनुचितः कुलाभिमानः तेन पीवर स्थूल तेन पुष्ट इत्यर्थः । अरे रे इति अवज्ञासूचकसम्बोधनार्थम् ।

(३) समयानभिज्ञ = समयस्य कालप्रभावस्य अनभिज्ञ, अस्मिन् जवनाधिकारकाले येन कर्म्मणा अभ्युदयो भवति तत्र परिज्ञानशून्य इति तदेतत् सम्बोधनपदद्वयम् ।

(४) देश इत्यादि—। देशे देशे गौड़-मगधोत्कलादिषु सर्व्वेषु देशेषु कलङ्कस्पर्शशून्यतया निर्म्मला कीर्त्तिगाथा यशोवर्णनश्लोकः तद्गीतं वा । राज्ये

अरे वृथागर्व्वित ! भारतसाम्राज्यविपुलकार्य्यव्यापृतस्य मे क्षुद्रकर्म्मण्यलब्धावसरतया विजयमानः परस्तान्मृत्युना रक्षितोऽसि, अन्यथा,—

कोदण्डे करवालचालनविधौ यन्त्रोत्कटे नालिके
शस्त्रास्त्रेष्वपरेषु तुल्यविभवो योऽयं प्रलम्बो भुजः ।
आ-गान्धार-हिमाद्रि-वङ्गजलधि-प्रख्यात-वीर्य्याङ्कितो
यामो दण्ड इवापरस्तव तनोः सोऽपाहरिष्यच्छिरः ॥ (१)

सेना । (स्वगतम्) अहो प्रकृतिगम्भीरोऽपि देवो मिथ्याभिशस्तिप्रसृतदुःसहापमानस्मरणक्षोभादेव विकत्थमानो

---

राज्ये प्रतिराज्यं मत्पदान्ते नरपतिगणाः—एकस्य राज्ञोऽनन्तरमन्यस्याधिकारेऽपि पूर्व्वे परे च नरपतयः इत्यर्थज्ञापनाय 'गणा' इत्यत्र बहुवचनम्, मम चरणप्रान्ते लुठन्ति, एतेन स्वस्योत्कर्षातिशयो ध्वनितः । वस्तुतः क्षुद्रः धनादिहीनतया क्षुद्रतमभूखण्डाधिकारित्वेन च लोकैरज्ञातः क्षत्रः क्षत्रियसामान्यान्तर्गतोऽपि स्वकुलगरिम्णाहङ्कृतः, स्ववंशगौरवेण गर्व्वितः अभिजनवानस्मीत्यभिमानवांस्त्वं मम सर्व्वनृपतिप्रधानस्येति गम्योऽर्थः, सिंहस्य कुक्कुर इव कार्य्याकार्य्ये करणीयाकरणीये विमृशसि पुरा विमृष्टवान् विचारितवान्, पुरायोगेऽतीते लट् । कुक्कुरस्य सिंहकार्य्याकार्य्यविचारो यथा अकिञ्चित्करः, तथा तव मदीयकार्य्याकार्य्यविचारोऽकिञ्चित्कर इति भावः । मूढेति सम्बोधनमयुक्तकरणात् । सिंहकार्य्याकार्य्यविचारस्य कुक्कुरे सम्भावनारूपत्वादुत्प्रेक्षेयम् । रे मूढ ! श्वा इव क्षुद्रस्त्वं सिंहस्य मम कार्य्याकार्य्ये विमृशसि पुरेत्यन्वये उपमातिशयोक्त्योः सङ्करः ।

(७) कोदण्ड इत्यादि—। कोदण्डे धनुषि, करवालचालनविधौ तरवारिप्रयोगकौशले—यन्त्रोत्कटे = यन्त्रेषु क्षेपणनियामकेषु मध्ये उत्कटे विषमे भीषणे

दृश्यते। (प्रकाशम्) देव ! क्रियातिपत्ति (१) रेषा तदविलम्बित-मेव जनकसमतेजसि प्रतापपुत्रे मेवारपतावमरसिंहे तदन्येषु च मेवारवीरेषु यदिदानीमाशंसनीयं (२) तदादिशतु देवः।

मान। सेनापते ! किमन्यदाशंसनीयम्। सम्प्रति हि—

कुर्य्यां दिल्लीशपादाम्बुजयुगलनतं तं प्रतापस्य पुत्रं
कृत्स्नं वाप्पान्ववायं विगतकुलमदं ध्वस्तवीर्य्यं प्रकुर्व्वन्।
वीराणां चण्डशक्तप्रभृतिकुलभुवां छिन्नमुण्डावलीभि-
[illegible]मा मेवारभूमिर्मम शमनसमस्येच्चतां क्रोधवेगम्॥ (३)

---

नालिके वन्दुक इति ख्यातेऽस्त्रे अपरेपु शस्त्रास्त्रेपु शस्त्रेपु कुन्तादिपु अस्त्रेपु नाराचादिपु तुल्यविभवः समानशक्तिः, आ-गान्धार-हिमाद्रि-वङ्गजलधीति, गान्धार-देश-हिमालयादारभ्य वङ्गजलधिपर्य्यन्तं प्रख्यातं विख्यातं वीर्य्याद्भुतं वीर्य्यस्याद्-भुतं विस्मयावहत्वं वीर्य्याश्चर्य्यं यस्य सः, यद्वा विख्यातं यद् वीर्य्यं तेनाद्भुतः विस्मयावहः यामो यमसम्बन्धी अपरो दण्ड इव यः अयं मदीय इत्यर्थः प्रलम्बः दीर्घो भुजः स तव शिरो मस्तकं तनोराकण्ठदेहात् अपाहरिष्यत् व्ययोजयिष्यत्। यदि त्वं अन्त्रविस्रस्तिपीड़या मृत्युग्रस्तो नाभविष्यः कियत्कालानन्तरमहमेव त्वामहनिष्यमिति गद्यपद्ययोः पिण्डितार्थः। अपरो यामो दण्ड इवेत्यत्रोत्प्रेक्षा। अपरस्य यमदण्डस्यासत्त्वात्।

(१) क्रियातिपत्तिः = क्रियाया अनिष्पत्तिः, तस्य मृत्युरभूत्, अतएव तदीयशिरोऽपहरणक्रियायाः निष्पत्तिः कथमपि न भवितुमर्हति, अतो विफलात् तदालोचनाद्विरमतु देव इत्यर्थः।

(२) आशंसनीयं = अस्माभिः वाञ्छनीयम्।

(३) कुर्य्यामित्यादि—। कृत्स्नं सर्व्वं [illegible]

सेना। उपपन्नमेतदेव देवस्य।

मान। सेनापते(१)! आगन्तुकव्याक्षेपेणातिक्रान्तः कालः, प्रकृतमिदानीमवधारय। तथा हि—सम्पन्नप्रायं मदागमनप्रयोजनम्, निरवशेषं लब्धा मेवारप्रवृत्तिः कृता चारपरीक्षा, प्रदर्शिताश्च ते चितोरनगरस्यारक्षाभूमयः, तत्र कृतपूर्व्वगुल्मसन्निवेशसमाहितदृष्टिना चाप्रमत्तेन त्वया वर्त्तितव्यम्। गोचरीकृतश्चायमर्थश्चितोरशासकस्य।

सेना। (कृताञ्जलिः) भर्त्तृप्रभाव एव सुसम्पादयति भृत्यकर्म्माणि, तन्मन्ये देवादेशोऽयमपरिहीनो भविष्यति।

मान। मत्प्रतिज्ञाते च मेवारनिपातनकर्म्मणि त्वामेव प्रतिनिधितया विनियुञ्जे, त्वदनुमताश्चान्ये सहायास्ते भविष्यन्ति।

सेना। (सप्रणामम्) महानयं प्रसादः।

---

वीर्य्यं विलुप्तवीर्य्यं विगलितवंशाभिमानं प्रकुर्व्वन् प्रकर्षेण कुर्व्वन् हेतौ शतृप्रत्ययः तं मया अपसर्पितं प्रतापस्य पुत्रम् अमरसिंहं दिल्लीश्वरपादपद्मयुगलप्रणतं कुर्य्यां—चण्डशक्तप्रभृतिकुलभुवां चण्डावत् शक्तावत् जगावत् इत्यादिनामभिः प्रसिद्धगिह्लोटवंशसमुद्भूतानां वीराणां छिन्नमुण्डावलीभिः छिन्नमुण्डश्रेणिभिर्व्याप्ता आकीर्णा मेवारभूमिः मेवारभूखण्डं शमनसमस्य यमतुल्यस्य मम क्रोधवेगमीक्षतां पश्यतु। इति मदाशंसा युष्माभिरनुवर्त्तताम्, युष्माकमप्येतदाशंसनीयम् इति भावः।

(१) इष्टसिद्धेरुपायं वक्तुमुपक्रमते सेनापत इति।

मान । तदद्यैव चाराध्यक्षमाहूय चण्डशक्तकुलयोरन्योन्यभेदमुपजनयितुमुपदिशामि, येन साम्प्रतमन्यतो (१) भेदजर्ज्जरेऽपि मेवारराष्ट्रे द्विषदाक्रमणप्रतिरोधाय ते सम्मिलिताः प्रतापसूनुं न प्रोत्साहयेयुः, न वा स्वयं प्रवर्त्तेरन्निति ।

सेना । देव ! क्षुद्राः खलु ते, बलवति रिपौ प्रयोज्यस्तु भेदोपाय इति मे प्रतिभाति । यतोऽसौ प्रतापतनयः—

गाण्डीवक्षिप्तकाण्डाधिकविपुलबलप्रोज्ज्वलल्लौहपिण्डै-
रग्न्यस्त्रैरस्मदीयैर्दलितगिरितटीवप्रदुर्गप्रभावः ।
स्फारैर्मत्खड्गधारैः क्षपितहयबलोद्वेलवीरापहारै-
रुद्भ्राम्यच्चण्डशक्तान्वयजभटगणो जेष्यते हेलयैव ॥ (२)

किं वा देवो मन्यते ।

---

(१) अन्यतोऽन्यस्मात् कारणाद् राज्ञः सामन्तानां च भेदेन जर्ज्जरे विशीर्णे । तथापि दिल्लीपतेराक्रमणे तत्प्रतिरोधाय चण्डशक्तकुलजानामैकमत्यं सम्भाव्यते तद्व्याघातः कर्त्तव्य इति भावः ।

(२) गाण्डीवेत्यादि—। गाण्डीवम् अर्ज्जुनस्य धनुः तेन क्षिप्ता ये काण्डाः बाणाः तेभ्योऽधिकाः श्रेष्ठाः, गाण्डीवक्षिप्तकाण्डाधिकाः अतएव विपुलबलाः प्रचुरशक्तयः प्रोज्ज्वलल्लौहपिण्डाः प्रज्वलन्तोऽग्न्युद्गारिणो लौहपिण्डाः अयोगोलकाः ( गोला इति प्रसिद्धाः ) येषां तैः अस्मदीयैः अग्न्यस्त्रैः अग्निसम्बन्धिभिरस्त्रैः विशेषणमहिम्ना वृहन्नालिकास्त्रैः कामान इत्याख्यैः दलिता उन्मथिता गिरितटीवप्रदुर्गप्रभावा यस्य सः गिरयश्च दर्य्यः कन्दराश्च वप्राः प्राकाराश्च दुर्गाश्च प्रभावः प्रभुशक्तिश्च ते । वृहन्नालिकास्त्रक्षिप्तप्रज्वलल्लौहगोलकाघातेन

मान । उपपद्यत एतत् तथापि—

येनोपायेन विजयः सद्यः सिध्यति लीलया ।
तमाश्रयेत मतिमान् इति नीतिविदां मतम् ॥

अपि च,—भवेद्बलक्षयः स्वल्पो यस्मिन्मार्गेऽवलम्बिते ।
श्रेयान् स एव विज्ञेयः परराष्ट्रं जिगीषताम् ॥

तदेहि, यथा दिल्लीपतेस्त्वरितमुदयपुराक्रमणं प्रत्यनुज्ञानम्

---

उदयपुरप्रान्तवर्त्तिनः शैलाः तिरोधानस्थानभूताः कन्दराः प्राकाराः दुर्गाश्च विध्वंसिता भविष्यन्ति, तेन तत्प्रभावोऽपि नाशमेष्यतीति भावः । स्फारैः प्रचुरैः मामकैः खड्गधारैः खाड्गिकपुरुषैः कर्त्तृभिः क्षपितानि हयबलानि येषां ते अतएवोद्वेला व्याकुला ये वीरास्तेषामपहारैः निधन-व्यङ्गत्वपलायनरूपैरपहारै-र्हानिभिः हेतुभिः उद्भ्राम्यच्चण्डशक्तान्वयजभटगणाः उद्भ्राम्यन्तः विशृङ्खलं धावन्तः कान्दिशीकाः पलायमाना इत्यर्थः चण्डशक्तान्वयसम्भूता भटगणा यस्य सः अमरसिंहः हेलयैव अनायासेनैव जेष्यते, विजितो भविष्यति । अत्र च्छेकानु-प्रासवृत्त्यनुप्रासौ, हेलया विजयं प्रति गिर्य्यादिदलनस्य चण्डशक्तकुलजभटगणा-नामुद्भ्रान्तेश्च हेतुत्वात् वाक्यार्थहेतुककाव्यलिङ्गालङ्कारः ।

मानसिंहसेनापत्योश्चरित्रतालोचनम् । मानसिंहः प्रकृत्या सद्विवेचकः, किन्तु शुकवाक्येन पुरोहितवाक्येन च क्रोधातिशयात् स्वभावधैर्य्यविच्युतः स्वप्रशंसितमपि प्रतापसिंहमधिक्षिप्तवान् । इदं हि वैचित्र्यं भविष्यदुन्मादस्य सूचकम् । एतेन मेवारराजपत्त्रप्रयोगस्य साफल्यं ज्ञापितम् ।

सेनापतिश्च विकत्थनपरायणोऽपि विश्वासपात्रतया शौर्य्येण च मानसिंहस्य प्रेयान् तथाविधप्रेयस्तया गर्व्वितस्य सेनापतेः प्रभोरग्रेऽप्यौद्धत्यवर्णनं भविष्यद-

अधिगम्यते यथायथमस्मदीयं रहस्यं रक्षितं स्यात् तथा मन्त्रयितुं मन्त्रणागारं प्रविशावः ।

( इति निष्क्रान्तौ । )

इत्यमरमङ्गलनामनाटके मानसिंहोद्वेजनाभिध-

स्तृतीयोऽङ्कः समाप्तः ।

---

कल्याणसूचनाय । गुणपक्षपातितया मानसिंहमहाराजेन तदीयदोषोऽयं सोढः । इदं हि मानसिंहचारित्रवैशिष्ट्यम् । अन्यत् सुगमम् ।

तृतीयाङ्कस्य टीकेयं नाटकेऽमरमङ्गले ।
मङ्गलेव शिवे भूयान्मिलितार्थप्रकाशनी ॥

---

# चतुर्थोऽङ्कः

ततः प्रविशति राजा देवी च।

राजा। देवि! सत्यमिदानीं समरसिंहस्य मित्रमस्मि। येन राजनीतिमार्गमनुसरता मया सर्व्वदैव परवञ्चनमनुष्ठीयते।

देवी। अज्जउत्त आबदि धम्मरक्खत्थो कूबड़ो वि अणुचिट्ठिदव्वो त्ति उबदिसंतो तित्थं गच्छंतो गुरू कधं विसुमरिअदि?

[आर्य्यपुत्र! आपदि धर्म्मरक्षार्थः कपटोऽपि अनुष्ठातव्य इति उपदिशन् तीर्थं गच्छन् गुरुः कथं विस्मर्य्यते?]

राजा। (सविस्मयम्) कथं तं विस्मरामि, यो हि भगवान्—

दूरस्थोऽपि चिरात् कृपामयतया स्वप्ने शुभं मे दिशन्
दुश्चिन्ताजलधेः समुद्धरति मामावर्त्तवात्याकुलात्।
प्रच्छन्नस्थितिरप्यमुष्य भजतां सत्कर्म्मणे कल्पते
भूच्छायापिहितस्य तिग्मकिरणस्येव प्रशान्तत्विषः॥ (१)

---

(१) चिरात् दीर्घकालं व्याप्य दूरे दूरवर्त्तितीर्थे स्थितोऽपि स्वप्ने मे शुभं दिशन् मङ्गलं ज्ञापयन् आवर्त्तवात्याकुलात् आवर्त्तः पौनःपुन्यं सैव वात्या

देवी। ता कधं भणासि समरसिंघस्स मित्तं म्हि त्ति ?

[तत्कथं भणसि समरसिंहस्य मित्रमस्मीति ?]

राजा। (सवैलक्ष्यम्) कर्त्तृत्वाभिमानमूढ़स्य अयत्न-सम्भवोऽयं वाग्विसर्गः। (१)

(नेपथ्ये)—न सुखं कामे न सुखं विषये

सुखमिह केवलममले हृदये।

कतकमिलितमिव समलं सलिलं



विमलं हृदयं भवति प्रणये ॥ (२)

---

वातालो, यद्वा आवर्त्तः पौनःपुन्यमेवावर्त्तः अम्भसां भ्रमः वात्यैव कुपितवायुसमूह एव वात्या वाताली ताभ्यामाकुलाद् व्याप्ताद् दुश्चिन्ताजलधेः अनर्थचिन्तास्वरूपात्समुद्रात् मां समुद्धरति, उत्तारयति भूच्छायापिहितस्य भुवश्छाया भूच्छाया राहुः तया पिहितस्य आच्छादितस्य अतएव प्रशान्तत्विषः गतकिरणस्य अथच शमशोभित-तेजसः तिग्मरश्मिकिरणस्येव सूर्य्यस्येव अमुष्य श्रीगुरोः प्रच्छन्नस्थितिरपि सूर्य्यपक्षे प्रच्छन्ना जनैः स्पष्टमदृश्यमाना, गुरुपक्षे दूरस्थत्वेनास्माकमज्ञाता स्थितिः स्वस्थानमपि भजतां सूर्य्यपक्षे शास्त्रश्रद्धावतां गुरुपक्षे स्वभक्तानां सत्कर्म्मणे सूर्य्यपक्षे स्नानदानादिधर्म्माय गुरुपक्षे हितकर्म्मणे कल्पते समर्था भवति शक्त्यर्थयोगाच्चतुर्थी। रूपकोपमालङ्कारौ।

(१) वाग्विसर्गः वाचो निःसरणम्।

(२) इह अस्मिन् लोके कामे स्त्रीपुरुषसंयोगे सुखं न भवति, विषये धनादौ न सुखम् अस्ति। हृदये निर्म्मले सति केवलं सुखम्। कतकाख्यफल-चूर्णयुक्तं समलम् आविलं जलमिव प्रणये प्रेम्णि सति हृदयं निर्म्मलं भवति।

पतिरत-रमणी-हरिरत-मानव-
देशहितव्रत-जनसमुदाये ।
त्रिदिव-दुरापं परमं सुखमपि (१)
जनकपरायण-शुभमति-तनये ॥ (२)

परमगतिर्म्मम (३) भवतु प्रणयः
परममतिर्म्मम (४) भवतु प्रणये ।
परमधृतिर्म्मम (५) भवतु प्रणयः
परमरतिर्म्मम (६) भवतु प्रणये ॥

देवी । साहु हिअअदंसिणी वीराए गीदी ।

---

(१) पतिरतरमण्यादीनां समुदायः, समुदायः समूहः । अपिः समुच्चये, पतिरतस्त्रीसमूहे विष्णुभक्तमानवसमूहे देशहितव्रतजनसमूहे पितृभक्तपुत्रे च स्वर्गदुर्लभं परमं सुखं भवतीत्यर्थः ।

(२) पितृपरायणा पितृसेवैकतत्परा शुभा लोभादिनिरपेक्षा मतिर्यस्य तस्मिंस्तनये ।

(३) परमगतिः उत्कृष्ट उपाय उत्कृष्टं लभ्यं वा ।

(४) परमा अभिसन्धिरहिता ।

(५) परमा सन्तोषान्तरापेक्षया उत्कृष्टा धृतिः सन्तोषो यस्मात् सः प्रणयो मम भवतु । अस्मिन् गीते पतिरतेत्यादिना विशेषेण प्रणयसामान्यसुखजनकत्व-समर्थनादर्थान्तरन्यासः । विमलं हृदयमित्यादिपादेन प्रणयस्य परमगतित्वादि-भावेन प्रार्थनाहेतुत्वकथनात् काव्यलिङ्गम् । एकस्य प्रणयस्य परमगतित्वाद्यनेक-रूपेणोल्लेखादुल्लेखालङ्कारश्च । पज्झटिकाच्छन्दः ।

६) परमरतिः=सर्व्वाधिकोऽनुरागः ।

[ साधु हृदयदर्शिनी वीराया गीतिः (१)। ]

राजा । देवि ! इयमपि त्वत्सख्यपरिचयमेव निवेदयति कथमन्यथा वाराङ्गनाया एतादृशी भावपरिशुद्धिः सम्भवति ! युक्तं खल्वभिहितमभियुक्तैः "संसर्गजा दोषगुणा भवन्तीति"।

देवी । अज्जउत्त ! अदो ज्जेव तक्केमि पुव्वं जधा वीरा पुरिसाणं बसणकलंकहेदू आसी, अहं वि तधा अज्जउत्तस्स बसणकलंकहेदू होमि त्ति ।

[ आर्य्यपुत्र ! अतएव तर्कयामि पूर्व्वं यथा वीरा पुरुषाणां व्यसनकलङ्कहेतुरासीत्, अहमपि तथा आर्य्यपुत्रस्य व्यसनकलङ्कहेतुर्भवामीति । ]

राजा । प्रिये ! अन्यादृशोऽयं प्रकारः (२), तथा हि,—

कलङ्कवृद्धिः शशलाञ्छनस्य
तेजोविवृद्धिं क्रमशो व्यनक्ति ।
ममापि योऽयं व्यसनप्रवादो
रिपुक्षयायैव स मां युनक्ति ॥ (३)

त्वया समुद्भावितस्य व्यसनकलङ्कारोपस्य प्रभावादेव निर्भयदिल्लीश्वरस्य मां प्रत्यभियानं येन शालुम्ब्रापतिप्रभृतयः शान्तिभाजोऽपि सामन्ता जवनसमरं कर्त्तव्यतया मन्यन्ते । अतो

---

(१) साधु इति गीतिक्रियाविशेषणम् । हृदयदर्शिनी = मनःशुद्धिप्रकाशिका ।

(२) वीरदत्तायाः व्यसनकलङ्कहेतुत्वं तव च तथात्वं स्वरूपतो भिन्नम् ।

(३) कलावृद्धौ चन्द्रस्य कलङ्करेखाया वृद्धिः, तया च तेजोवृद्धिः स्फुटा भवतीति भावः । शिष्टः सुगमः । दृष्टान्तालङ्कारः ।

यन्मया काङ्क्षितं तदिदानीं पतिहितरतायास्ते प्रयत्नेनैव प्राप्तोऽस्मि ।

देवी । अज्जउत्तस्स मंतउत्ती ज्जेव इध पहाणं कारणं ।

[ आर्य्यपुत्रस्य मन्त्रगुप्तिरेव इह प्रधानं कारणम् । ]

राजा । यदि नाम कारणबलावलं विचार्य्यते, तर्हि श्रीगुरोराशीर्वादफलं भगवदेकलिङ्गनाथस्य प्रसादमेव बलवत् कारणमवगच्छ ।

देवी । अज्जउत्त ! सच्चं एदं, अण्णधा जवणबलस्स पड़िरोहत्थं अज्जउत्तेण ववट्ठाविदं वि भिल्लसेणावलं सामंताओ ण आणंति । वसणकलंकं अ सच्चं आणंति त्ति कधं एदं संपज्जइ ।

[ आर्य्यपुत्र ! सत्यमेतत्, अन्यथा जवनबलप्रतिरोधार्थमार्य्यपुत्रेण व्यवस्थापितमपि भिल्लसेनाबलं सामन्ता न जानन्ति व्यसनकलङ्कं च सत्यं जानन्तीति कथमेतत् सम्पद्यते ? ]

राजा । न केवलमेतावत्, येनाहं चतुरतमेन दीर्घकालं मोहितः, स एव मयेदानीं मोह्यते, न च प्रतिबुद्धो भवति । तदेतद्विभाव्य निश्चिनोमि—

यं देवा न विदन्ति नैव मुनयो नो वा विधिर्नो हरि-
र्यस्योन्मीलति रोमकूपनिकरे ब्रह्माण्डकोटिः सदा ।

योे मायामयविग्रहोऽप्यवितथो मायोज्झितो मायिकः
सर्व्वाश्चर्य्यमयः स नः पशुपतिः प्रीतो गुरोराशिषा ॥ (१)

अतएवेयं विस्मयावहा मन्त्रगुप्तिः ।

देवी । जुज्जदि एदं, वीराजणणीए अह्माणं सव्वणास-अरादो अणलसंजोअणादो सत्तुरहस्सप्पआसो अघड़णघड़णं; ण क्खु तहिं देवदाप्पसादं उज्झिअ अण्णो हेदू अरिहदि होदुं । ता णमो णमो भअवदो एक्कलिंगणाधस्स, णमो णमो भअबदी[illegible] चिदोरेस्सरीए ।

[ युज्यत एतत्, वीराजनन्या (२) अस्माकं सर्व्वनाशकरात् अनलसंयोजनात् शत्रुरहस्यप्रकाशोऽघटनघटनम्, न खलु तत्र देवताप्रसादमुज्झित्वा अन्यो हेतुः अर्हति भवितुम् । तन्नमो नमो भगवते एकलिङ्गनाथाय, नमो नमो भगवत्यै चितोरेश्वर्य्यै ।]

---

(१) यमित्यादि—। देवमुनिविरिञ्चिविष्णुभिरविदिततत्त्वस्य यस्य रोमकूपनिकरे ब्रह्माण्डकोटिः असंख्यानि ब्रह्माण्डानि सदा सततमुन्मीलति आविर्भवति यो मायामयविग्रहोऽपि इन्द्रजालवत् कल्पितदेहोऽपि अवितथः सत्यस्वरूपः, मायोज्झितः मायाहीनः अथच मायाव्यवहारो सर्व्वाश्चर्य्यमयः सर्वाद्भुतमयः सर्वाणि आश्चर्य्याणि सर्व्वविधानि अद्भुतानि यत्र प्राचुर्य्येण सन्ति स पशुपतिः शिवः गुरोराशिषा नः अस्माकं प्रीतः सम्बन्धसामान्ये षष्ठी अस्मान् प्रति प्रीत इत्यर्थः । तृतीयचरणे विरोधालङ्कारः । पारमैश्वर्य्याद् विरोधपरिहारः ।

(२) यद्यपि साम्प्रतं वीरदत्तेति वास्तवं नाम देव्या परिज्ञातं राज्ञापि, तथापि यथाभ्यासं वीरेति नामैव गृह्यते, शुद्धिप्राप्तहृदयायास्तस्या मानहानिर्माभूदिति ।

प्रतीहारी । (प्रविश्य) जेदु जेदु भट्टा, सभामंडव-ट्ठिदाओ सामंताओ देअवादं पच्चक्खं सेविदुं अहिलसंति ।

[ जयति जयति भर्त्ता, सभामण्डपस्थिताः सामन्ता देवपादं प्रत्यक्षं सेवितुमभिलषन्ति । ]

राजा । देवि ! दिष्ट्या वर्द्धसे । अद्य चिराकाङ्क्षितस्य चितोरोद्धारस्य मङ्गलारम्भः । युद्धाय कृतनिश्चयाः सामन्ताः स्वस्व-परिकल्पितव्यसनमहार्णवान्मामुद्धर्त्तुं समागताः । अहमप्यात्मनो व्यसनं ख्यापयंस्तेषां हृदयावेगं वर्द्धयामि । ततश्चाद्यैव माभूच्चितोरोद्धाराय युद्धं तथापि तन्मङ्गलारम्भरूपेयं मे प्राथमिकी जवनसमरयात्रेति प्रीयते मे हृदयम् । अस्तु नाम जयः पराजयो वा स्वर्गस्थितपितृदेवस्योत्तराधिकारप्राप्तेरयं प्रथमः परिचय इति महान् मे हर्षः । विशेषतो यद्येकमपि दिनं चितोरमधिकर्त्तुं शक्नुयाम्, सफलं मे जीवनं भविष्यतीत्याशया नृत्यति मे हृदयम् । तदनुजानातु देवी समरलीलारम्भाय ।

देवी । (सास्रम्) देअदेअप्पसादेण होदु दे सव्वदो सिद्धी ।

[ देवदेवप्रसादेन भवतु ते सर्व्वतः सिद्धिः । ]

राजा । देवि ! किमेतत् तवाप्यश्रूद्गमः ?

देवी । (सलज्जम्) आणंदसलिलं एदं त्ति पसण्णो

होहि। (स्वगतम्) इत्थिआहिअअ! आणंदकालो एसो क्खत्तिआणं।

[आनन्दसलिलम् एतत् (१) इति प्रसन्नो भव। स्त्रीहृदय! आनन्दकाल एष क्षत्रियाणाम्।]

राजा। भल्ले! विलासनिकेतनमार्गमादेशय।

प्रती। इदो इदो एदु देओ (इति मार्गं दर्शयन्ती राजानं पुरःसरीकृत्य परिक्रामति)।



[इत इत एतु देवः।]

देवी। अह्मो! सण्णिहिदाणं ज्जेव भट्टुणो इत्थिआणं उच्छाहो सुहं अ होदि, ण उण अण्णधा। जदो प्पत्थिदे ज्जेव अज्जउत्ते सव्वं मे णिलीणं! ता अहं हि णिहुदं अज्जउत्तस्स सहआरिणी हुविस्सं। दाणीं उण आमंतणिज्जा वीरा। (इति निष्क्रान्ता)।

[अहो! सन्निहितानाम् एव भर्त्तुः स्त्रीणामुत्साहः सुखञ्च भवति न पुनरन्यथा। यतः प्रस्थित एवार्य्यपुत्रे सर्व्वं मे निलीनम्। तदहं हि निभृतम् आर्य्यपुत्रस्य सहचारिणी भविष्यामि। इदानीम् आमन्त्रणीया वीरा।]

---

(१) आनन्दाश्रुजलमिति निश्चित्य त्वं प्रसन्नतां सौमनस्यं प्राप्नुहीत्यर्थः। इदं तु देव्याः भर्त्तृप्रसादनमात्रम्। ममेदमश्रु यादृग् भवतु त्वया तु आनन्दसलिलमिति निश्चेयमिति गूढार्थः।

प्रती । इअं उज्जाणभूमी । अदूरे अ विलास-णिएदणं ।

[ इयमुद्यानभूमिरदूरे च विलासनिकेतनम् । ]

राजा । ( दृष्ट्वा ) पितुरुद्यानभूमिभागोऽयं प्रतिदिनमासेव्यमानोऽपि क्षणे क्षणे नवं भावमाश्रयन्नालोक्यते, तदामन्त्रणीयोऽयम् ; ( उद्याने बद्धदृष्टिः ) भ्रातरुद्यानराज !

प्रीतिं परां जनयसि त्वमुपाश्रितानां
त्वं देवपूजनविधेरुपकारकोऽसि ।
त्वं सौरभेण विदितः सुभगोऽसि च त्वं
त्वामेव तातजनितेषु कृतीति मन्ये ॥ (१)

( इति सस्पृहमालोकयन् परिक्रामति )

---

(१) उपाश्रितानां समीपागतानां सौरभादिना परां प्रकृष्टां प्रीतिम् आनन्दम् जनयसि अहं तु उपाश्रितानां सामन्तादीनां प्रीतिजनने समर्थो नास्मि पूर्वं चितोराक्रमणवैमत्यात् साम्प्रतं व्यसनित्वप्रवादाच्च । देवपूजनविधेः देवार्च्चनविधानस्य त्वमुपकारकोऽसि उपयोगी भवसि पुष्पादिद्वारा,—चितोरोद्धारं विना अहं देवपूजनस्य मेवारमण्डलदेवपूजायां प्राचीनविधेरुपकारको नास्मि । त्वं सौरभेण सौगन्ध्येन विदितः ख्यातः अहं तु सौरभेण यशसा हीनः, त्वं सुभगः सुन्दरः, अहं तु भाग्यहीनः, अतएव तातजनितेषु पितृसम्भूतेषु मध्ये कृती धन्यः इति मन्ये निश्चिनोमि इतियोगे प्रथमा वयम् । उद्यानापेक्षया स्वस्यापकर्षो ध्वन्यते । अचेतने उद्याने चेतनव्यवहारसमारोपात् समासोक्तिः अनुमानालङ्कारश्च कृतित्वरूपसाध्यस्य निश्चयरूपायां सिद्धौ पूर्वपादत्रयार्थस्य हेतुत्वात् । अत्र सम्भावनाया अभावेन नोत्प्रेक्षा, मन्य इत्युपादानाच्च न काव्यलिङ्गमिति ध्येयम् ।

प्रती । अज्ज-समरसिंह-प्पहुदीहिं प्पधाणपुरिसेहिं सोहिदं दीसदि एदं विलासणिएदणं ।

[ आर्य्य-समरसिंहप्रभृतिभिः प्रधानपुरुषैः शोभितं दृश्यत एतत् विलासनिकेतनम् । ]

ततः प्रविशति विलासनिकेतनस्थः समरसिंहश्चाटुकाराश्च ।

समरः । ( स्वगतम् ) चतुरा खलु वीरदत्ता, या तावदिदानीम् अमरसिंहं पञ्जरस्थं शुकमिवावरोधनिरुद्धं विदधाति । यस्तामपहाय प्रायेण (१) नावतिष्ठते व्यसनी । मन्यन्ते च स्थूलधियः—"वीरा शुद्धशीला सत्कुलीना चेति" । प्रियमेतदस्माकम्, यदेतेन सिद्धप्रायं नः समीहितम् (२) । सन्निहितं दिल्लीश्वरबलम्, निरुद्यमश्चायं व्यसनमुग्धः (३) ।

प्रती । एदं विलासणिएदणं । ता प्रविसदु देओ ।

[ एतत् विलासनिकेतनं तत् प्रविशतु देवः । ]

---

(१) प्रायेण = प्राचुर्य्येण, एतेन तामपहाय राजसभादौ नागच्छति, सचिवैः सामन्तैर्लेखेन च राजकार्य्यं सम्पादयति कदाचिद् विलासनिकेतनमिदमागच्छतीति सूचितम् ।

(२) समीहितम् = दिल्लीश्वरेण उदयपुरराज्याधिकार इत्येवं रूपम् इष्टम्, सिद्धप्रायम् = अल्पावशिष्टसिद्धिकम् । इदानीमपि युद्धानुद्योगादचिरेण समीहितसिद्धिर्भविष्यतीति भावः ।

(३) दिल्लीश्वरवाहिन्यामुदयपुरमण्डलान्तर्गतदौवारिस्थानसमीपमागतायामपि व्यसनान्धोऽयं तत्प्रतिरोधाय न यतते इत्यर्थः ।

राजा तत्र प्रवेशं नाटयति ।

सर्व्वे । (दृष्ट्वा आसनादुत्थाय) जयति जयति देवः ।

राजा । (उपविश्य) सखे समरसिंह ! अपि वर्त्तते काचिन्नवीना प्रवृत्तिः (१) ?

समरः । (स्वगतम्) किमयं दिल्लीश्वराभियानं जानाति ? अथवा स्त्री-पान-द्यूत-विलासी कथमेतदवगन्तुं शक्नुयात् ! तदन्यादृशोऽयं प्रश्नः । किन्त्वद्यैव सामन्ताः सर्व्वमेनमवगमयिष्यन्ति, तदेतत् प्राप्तकाल (२) मुत्तरम् । (प्रकाशम्) देव ! अस्ति तावदेका, (वामाक्षिस्पन्दनं सूचयित्वा) किन्तु दुर्निमित्तदर्शनेन बिभेमि प्रकाशयितुम् । (स्वगतम्) वराकं खलु दुर्निमित्तं पौरुषपरायणानाम् ।

राजा । (स्वगतम्) धूर्त्त ! दुर्निमित्तमद्यैव ते फलिष्यति । (प्रकाशम्) सखे ! त्वमप्येवं ब्रवीषि ! (३)

समरः । (स्वगतम्) व्यसनपरीतो मूढोऽयमप्रयत्नेन शक्यते विपथं ग्राहयितुम् । (प्रकाशम्) यद्भवतु देवहितार्थं ब्रवीमि, अभिद्रुह्यन्ति (४) सामन्ताः देवस्य शान्तिसुखम्, तत्कल्पितं (५) वितथमवितथं वा जवनबलानामभियानमद्यतनी प्रवृत्तिः ।

---

(१) प्रवृत्तिः = वृत्तान्तः । (२) प्राप्तकालम् = कालोचितम् ।

(३) एवं ब्रवीषि = दुर्निमित्तभयं कथयसि । (४) अभिद्रुह्यन्ति = द्विषन्ति ।

(५) तैः = सामन्तैः, कल्पितम् = कल्पनामात्रेणोपस्थापितम् अथचार्थापत्ति-

राजा । (स्वगतम्) गतोऽसौ समयो यत्र त्वदुक्तिजातं वेदवत् प्रमाणमवगतवानस्मि । (प्रकाशम्) सखे ! उभयथापि (१) कर्त्तव्यमुपदिश ।

समरः । (स्वगतम्) बध्यत (२) एवायं मूढः (प्रकाशम्) इदानीं न खलु किमपि कर्त्तव्यं वर्त्तते, परस्तात् तु यथाप्राप्तं विचारयिष्यामः ।

प्रथमश्चाटुकारः । देअस्स पदावेण सअं दिल्लीणाधो वि भीदो बट्टदि का कधा अण्णाणं, कप्पिदा णूणं जवणबलाणां अभिजाणप्पउत्ती, ता सुहं उज्झिअ किं अण्णं करणिज्जं ?

[ देवस्य प्रतापेन स्वयं दिल्लीनाथोऽपि भीतो वर्त्तते, का कथा अन्येषाम् (३), कल्पिता नूनं जवनबलानाम् अभियानप्रवृत्तिः तत्सुखमुज्झित्वा किमन्यत् करणीयम् ? ]

द्वितीयः । अदो पढमं आरम्भिअदु संगीदअं ।

[ अतः प्रथममारभ्यतां सङ्गीतकम् । ]

तृतीयः । देवादेशमपेक्षामहे ।

---

प्रमाणेन निश्चितम् । जवनानामागमनं विना प्रजानामीदृग् व्याकुलत्वमनुपपन्नमिति तत्प्रमाणाकारः । प्रथमार्थपक्षे वितथमिति द्वितीयार्थपक्षे अवितथमिति ।

(१) उभयथापि = वितथत्वावितथत्वप्रकारद्वयेन सन्देहविषयेऽपि ।

(२) बध्यते = निरुद्धचेष्टः क्रियते । यथायं निरुद्यमः स्यात् तथोपदिशामीत्यर्थः ।

(३) सर्व्वं एव भीताः, भवदाक्रमणाय समरे कः सेनापतिर्भविष्यतीति भावः ।

राजा । ( स्वगतम् ) आगच्छन्ति सामन्ता इति व्यसन-ख्यापनार्थम् अनुष्ठीयते सङ्गीतारम्भः । ( प्रकाशम् ) भवत्वेवं तावत् ।

तृतीयः । ( गायति )

युवतिमुखमण्डलं कनकमयकुण्डलं
भासयति मम हृदयवासम् ।
चलनलिनलोचनं तरुणजनरोचनं
भावयति मन्मथविलासम्—(१)

द्वितीयः । साहु रे ताद-जीवण ! साहु ।

[ साधु रे तात-जीवन ! साधु । ]

( नेपथ्ये ) कष्टं भोः !

या पेशला-पुलिनभूमिरशेषशोभा
देवप्रतापनृपतेश्चरणाङ्क-पूता ।

---

(१) कनकमयकुण्डलं चलनलिनलोचनं तरुणजनरोचनं युवतिमुखमण्डलं मम हृदयवासं भासयति मन्मथविलासं भावयति असम्पूर्णं गीतमेतदिति सूचनायात्र चकारो नोपात्तः । हिरण्मयकुण्डलशोभितं चञ्चलकमलसदृशनयनयुगलोपेतं युवजनप्रीतिकरं युवतिमुखमण्डलं मम हृदयमेव वासः गृहं तं भासयति उज्ज्वलयति मन्मथविलासं मदनस्य लीलां भावयति भावनाविषयतां नयतीत्यर्थः । अत्र वास-शब्दः सदा युवतिमुखचिन्ताव्यञ्जनाय । भासयतीत्यनेन मुखमण्डलस्य चन्द्रवद्-भास्वरत्वं व्यज्यते, हृदयवासमित्यत्र रूपकं नलिनलोचनमित्युपमा च । जयदेवीय-वदसि यदीतिवन्मालाच्छन्दः ।

देशैकमङ्गलकथामुखरा पुरासीत्
सा कामगीतमलिनाद्य विटान् बिभर्त्ति ॥ (१)

राजा । (विलोक्यात्मगतम्) हन्त सामन्ताः ! युष्मदाचरणमेवास्य विपर्य्यासस्य मूलम् (२) ।

द्वितीयः । (विलोक्य सभयम्) अम्मो ! एदे सत्तपाणो सामंता आअच्छंति, ता कहिं पलाइस्सं (इति सकम्पं परितो निरीक्षते) ।

[अहो ! एते शस्त्रपाणयः सामन्ता आगच्छन्ति तत् कुत्र पलायिष्ये !]

ततः प्रविशति कृतयुद्धसज्जः शालुम्ब्रापतिः, भणसिंहः, बान्दाटक्कुरश्च ।

सर्व्वे । जयति जयति देवः ।

---

(१) अशेषशोभासम्पन्ना देवस्य प्रतापनाम्नो नृपतेः अथच देवानामिव प्रतापो यस्य तस्य नृपतेश्चरणाङ्कपूता पदचिह्नपवित्रा या पेशलापुलिनभूमिः उदयपुरराजधानीपश्चिमप्रान्तनिबद्धस्य पेशलानाम्नः क्रोशार्द्धविस्तृतह्रदस्य पुलिनभूमिः तटभूमिः पुरा देशस्य मङ्गलकथयैकया केवलया मुखरा आसीत् अद्य कामगीतिमलिना कामभोगप्रकाशकगीतैर्म्मलिना कलङ्किता सा विटान् कामुकानुचरान् बिभर्त्ति पुष्यति विरूपयोः संघटनाद् विषमालङ्कारः ।

(२) युष्मदाचरणम् = युष्माकं चितोराक्रमणविरोधि निश्चयज्ञापनकार्य्यम् । अस्य विपर्य्यासस्य = पेशलानीरे कामगीतिमलिनविटजनसन्निवेशरूपवैपरीत्यस्य । कापटिकसमरसिंहस्य परित्यागेऽपि युष्माकं चितोराक्रमणप्रवृत्तिर्न भविष्यतीति शालुम्ब्रापतिवचनेन निश्चित्योपायोऽयं रचित इति भावः ।

राजा । भो भोः सामन्ताः ! कथमेवमनवसरे श्रीमतामत्रागमनम् ?

शालुम्ब्रा । देव ! नायमनवसरोऽस्मदागमनस्य, यतः—

त्वमेकः स्वाधीनो नरपतिरसि क्षत्रियकुले
त्वमेकः सर्व्वेषां निगमपथभाजां प्रभवसि ।
पवित्रा मेवारक्षितिरपि च ते मूलपुरुषा-
दिमां ख्यातिं हर्त्तुं तव जवनराजो व्यवसितः ॥(१)

राजा । (सावज्ञमिव) (२) शालुम्ब्रापते ! चिराद्गते व्यवस्यन्ति । तदलं मे शान्तिभङ्गेन, यथाधिकारमुपवर्त्तन्तां भवन्तः ।

शालुम्ब्रा । नायं देवस्य शान्तिभोगकालः, नाप्ययं व्यवसायो जवनराजस्य मनोरथमात्रेण, यतः,—

---

(१) एकः स्वाधीनो नरपतिः त्वं क्षत्रियकुलेऽसि, क्षत्रियकुलवृत्तिर्भवसि, एकस्त्वं सर्व्वेषां निगमपथभाजां श्रुतिमार्गाश्रितानां वर्णाश्रमिणामित्यर्थः शेषे षष्ठी, प्रभवसि मुख्यो भवसि, अपि च किञ्च ते मूलपुरुषात् मूलपुरुषं वाप्पारावमारभ्य मेवारक्षितिः पवित्रा जवनराजत्वदोषरहिता, जवनराजो दिल्लीश्वरः, तव इमां कथितप्रकारां ख्यातिं प्रसिद्धिं यशः हर्त्तुं विनाशयितुं व्यवसितः व्यवसायमुद्यमं कृतवान् इत्यर्थः। अत्र मेवारक्षितिशब्द उदयपुरप्रदेशपरः। आर्थादितरव्यावर्त्तनात् परिसंख्यालङ्कारः।

(२) अवज्ञायाः कृत्रिमत्वात् इवेति ।

नानाशस्त्रास्त्रभीमा जवननरपतेर्व्वाहिनी घोररूपा
दोवारिप्रान्तभागं प्रविशति भवतो राज्यमेतज्जिघृक्षुः।
तस्मान्नार्य्योऽनुपायाः परमधनसतीधर्म्मविभ्रंशभीता
विप्राश्चान्ये च वर्णा भयजड़ितधियो गुप्तये त्वां स्मरन्ति॥(१)

राजा। (स्वगतम्) इदानीमप्रतिवचनमेव श्रेयः।

भग्ग। देव,—

त्यक्त्वा भोगसुखं, कुलक्रमगतिं संश्रित्य वीरोचिता-
मार्त्तानां परिरक्षणाय नियतः कीर्त्तिं निजां ख्यापयन्।
अस्माभिः सहितो व्रजाद्य समरं वीर! त्वदुग्रायुधा-
घातध्वस्तसमस्तवीर्य्यगरिमा नश्यत्वरीणां चमूः॥ (२)

---

(१) नानेत्यादि—। जवननरपतेर्ज्जवनराजस्य वर्त्तमानदिल्लीनाथस्य नाना-शस्त्रास्त्रभीमा विविधैः शस्त्रैः करवालकृपाणिकाप्रभृतिभिः अस्त्रैः नालिकादिभिर्भीमा भीषणा घोररूपा घोरं दारुणं रूपमाकृतिर्यस्याः सा वाहिनी एतद् राज्यम् उदय-पुरमण्डलं भवतः भवद्धस्ताद् जिघृक्षुः आदित्समाना सती दोवारिप्रान्तभागं = 'दोवारि' नामकप्रशस्तपर्व्वतवर्त्मनः प्रान्तभागं सीमाभूमिं प्रविशति, तस्माद् हेतोः परमधनसती-विभ्रंशभीताः परमधनं यः सतीधर्म्मः पुरुषान्तरानवमर्शः तस्य विभ्रंशभीताः विनाशशङ्किता अनुपायाः सप्राणतद्रक्षणोपायरहिता नार्य्यः, भयजड़ितधियः भीतिस्तब्धबुद्धयः विप्रा ब्राह्मणाः अन्ये वर्णाश्च गुप्तये गोपनार्थं रक्षार्थं च त्वां स्मरन्ति त्वामेव रक्षकत्वेनाधियन्ति। भयस्य स्मरणहेतुत्वात् काव्यलिङ्गा-लङ्कारः। गुप्तय इति गोपनार्थतायामुपयोगात् परमधनेत्यत्र परिणामालङ्कारः।

(२) त्यक्त्वेत्यादि—। भोगसुखं बहिरिन्द्रियसंस्पर्शजं तुच्छानन्दं त्यक्त्वा, वीरोचितां वीरयोग्यां कुलक्रमगतिं कुलक्रमस्य पुरुषपरम्परायाः गतिं पद्धतिं संश्रित्य अवलम्ब्य आर्त्तानामासन्नविपत्पीड़ितानां परिरक्षणाय नियतः नियमवान् निजां कीर्त्तिं

बान्दाठक्कुर: । देव ! कथमिदानीमपि जोषमास्यते(१) ।

जातो यत्त्वं दिनकरकुले नो तमो-योग-दोष:,
न त्वं शत्रोर्मृदुरपि भिया यस्य तात: प्रताप: ।
संग्रामस्ते कुलपरिचित: सा हि ते भक्तिभूमि:
कस्माज्जाड्यं भजसि नितरां त्वं प्रपन्नान् विहाय ॥ (२)

अपि च,—

नृपते ! तवैव पुरत: कुलाङ्गना
जवनैर्बलेन हृतधर्म्मसम्पद: ।

---

स्वं यश: ख्यापयन् प्रथयन् अस्माभि: सहितोऽद्य समरं युद्धक्षेत्रं व्रज गच्छ, हे वीर ! अरीणां चमू: जवनानां सेना तव उग्रायुधानां भीषणप्रहरणानामाघातेन ध्वस्तो विनष्ट: समस्तवीर्य्यगरिमा सकलशौर्य्यगौरवं यस्या: सा सती नश्यतु अदृश्या भवतु । समरगमनं प्रति कुलक्रमगत्याश्रयादे: प्रत्येकं कारणत्वात्समुच्चयालङ्कार:, त्वदुग्रायुधेत्यत्र काव्यलिङ्गं च ।

(१) जोषमास्यते = तूष्णीं स्थीयते ।

(२) जात इत्यादि—। यत् यस्मात् त्वं दिनकरकुले जातोऽसि तस्माद्धेतो: तमोयोगदोष: तमोयोगरूपो दोषो नो नास्ति, कुलं वंश: गृहं च, सूर्य्यगृहे स्थितस्य तम:सम्बन्धो न भवति, तम: अज्ञानमन्धकारश्च । प्रतापसम्बन्धहीनस्यैव भयेन शत्रुसकाशे मृदुत्वं भवति, अत्र प्रतापशब्द: श्लिष्ट:, अथच प्रतापसिंहपुत्रस्य शत्रुभयं न युज्यते । संग्राम: = युद्धं राणासङ्ग इति प्रसिद्ध: संग्रामसिंहश्च, कुलेन वंशेन परिचित: चिरं ज्ञात: अथ च कुले परिचित: प्रसिद्ध: सा हि ते तव भक्तिभूमि: = भजनस्थानं भक्तिरूपानुरागस्य स्थानं च सा इत्यत्र तच्छब्देन संग्रामस्य परामर्शेऽपि विधेयप्राधान्यात् स्त्रीत्वम् । भक्तिभूमिरिति विधेयपदम् । हिशब्दो विशेषार्थ: । जाड्यं तम: प्रभृतिहेतुकं युद्धवैमुख्यम् । प्रपन्नान् आश्रितान् । कुल-तम:-प्रताप-संग्राम-भक्तीनां भेदेऽप्यभेदाध्यवसायात् श्लेषमूलातिशयोक्ति:, विभावनाविशेषोक्तिसङ्करश्च ।

भवितार एव तदहो ! सहिष्यसे
सुरविग्रहांश्चरणमर्द्दितानिव ॥ (१)

राजा । (स्वगतम्) किमिदानीं शालुम्ब्रापतिरभिदधाति, तदेव मे श्रोतव्यम् ।

शालुम्ब्रा । देव ! जन्मभूमिसेवात्रतैककर्म्मणः सुगृहीतनाम्नः प्रतापसिंहस्य आत्मसम्भवो भवान्, जवनाक्रान्तां जन्मभूमिमुपेक्ष्य तुच्छं विषयसुखं बहुमनुते ?

क्व ते यातं तेजः क्व पुनरगमत् ते भुजबलं
क्व वा देशप्रेमा क्व च जवनविद्वेषगरिमा ।
पितुः कार्य्ये भक्तिः क्व च तव गता सा नरपते !
चितोरोद्धारार्थं ननु यदवलम्बोऽजनि भवान् ॥ (२)

राजा । (स्वगतम्) शालुम्ब्रापते ! सर्व्वमेव वर्त्तते, परमेतदाकर्णयन् कर्णसुखमनुभवितुं तूष्णीं तिष्ठामि ।

---

(१) नृपत इत्यादि—। हे नृपते ! तव एवं जाड्यमापन्नस्येति भावः पुरत एव कुलाङ्गनाः कुलस्त्रियः जवनैरपहृतसतीत्वधर्म्मधना भविष्यन्त्येव चरणमर्द्दितान् सुरविग्रहानिव पददलिता देवमूर्त्तीरिव तत् = जवनकर्त्तृककुलाङ्गनाधर्म्महरणं सहिष्यसे सोढुं प्रभविष्यसि, इति काकुः अहो इति धिक्कारे विस्मये वा । उपमालङ्कारः ।

(२) क्व त इत्यादि—। याः तेजोभुजबलदेशप्रेमजवनजातिविद्वेषपितृकार्य्यभक्तयश्चितोरोद्धारार्थं यतमानस्य तेऽवलम्बनभूता आसन्, ताश्चाद्य ते क्व गताः इति भावः । ननु अनुनये निग्रहे प्रश्ने वा । विषमालङ्कारः ।

समरः । ( स्वगतम् ) समरभीरुरयममरसिंहो जातस्त-देनम् अनुवर्त्तिष्ये । ( प्रकाशम् ) शालुम्ब्रापते ! दिल्लीनाथो मेवारभूमिमाक्रान्तवान्, का पुनरत्र चिन्ता, सकलराजप्रतिपन्नं कञ्चित् करमङ्गीकृत्य निवर्त्त्यतामात्मक्षयः श्रीमद्भिः ।

राजा । ( स्वगतम् ) आः दुरात्मन् ! एवं ब्रुवतस्ते न विदीर्णा सहस्रधा रसनया ।

शालुम्ब्रा । अरे कपटकञ्चुक ! किमुच्यते करमङ्गी-कृत्येति ; आः पाप ! कृतघ्न ! चाण्डाल !

ध्वस्तं वज्रं किमु सुरपतेर्नापतन्मूर्ध्नि यत् ते
मृत्युग्रस्ता किमु वसुमती त्वां हि यन्नाग्रसिष्ट ।
सुप्तः किं वा सकलजगतामीश्वरः सर्व्वसाक्षी
यत्ते दण्डं न खलु विदधे तत्क्षणाद्घोररूपम् ॥ (१)

---

(१) ध्वस्तमित्यादि—। सुरपतेरिन्द्रस्य वज्रम् अशनिः किं ध्वस्तं विनष्टम् ? यत् यस्मात् ते तव मूर्ध्नि नापतत् पतितम्, वसुमती पृथिवी किं मृत्युग्रस्ता मृत्युना कवलिता ? यद् यस्मात् त्वां नाग्रसिष्ट निगीर्णवती, हि शोके। सर्व्वसाक्षी सर्व्वजगता-मीश्वरः किं सुप्तो वा ? यद् यस्मात् तत्क्षणात् तथाविधवाक्योच्चारणक्षण-माश्रित्य ते तव घोररूपं दण्डं न विदधे न चकार खलु निश्चये वज्रस्याविनाशे पृथिवीदेवताया जीवनवत्त्वे परमेश्वरस्य चेतनासत्त्वे, उदयपुराख्यमेवारप्रदेशस्य जवनाधीनत्वार्थं वचनमुच्चारयतो गुरुपातकग्रस्तस्य ते दण्डोऽभविष्यदेवेति भावः । सहेतुकसम्भावनारूपत्वादुत्प्रेक्षात्रयम् ।

( तथापि,—

नो ध्वस्तं मम शस्त्रमेतदमलं प्राणापहं वैरिणां
जीवत्येव बहुप्रवीरतनया मेवारभूरुज्ज्वला ।
जागर्म्येष समग्रशक्तिकरणः साक्षात्प्रतापानुगो
दण्डं ते सदृशन्तु नैव नृपशो ! वीक्षे विचिन्वन्नपि ॥(१)

भण । आर्य्य ! शालुम्ब्रापते ! कृतं विलम्बेन,—

शस्त्राघातपवित्रमृत्युमधमो नार्हत्ययं पातकी
दुर्व्वाच्यं वदतोऽस्य कर्त्तुमुचितो वक्त्रे परो निग्रहः ।)

बान्दाठक्कुरः । ( उत्थाय )

---

(१) नो इत्यादि—। वज्रध्वंसे, पृथिव्या जीवनाभावे, जगदीश्वरस्य स्वापे सत्यपि । वैरिणां द्विषतां प्राणापहं प्राणानामपहा अपहानं यतः, तादृशम् अमलं निशितं ममैतच्छस्त्रं नो ध्वस्तं न विनष्टम्, एतदित्यनेन तरवारिप्रदर्शनं सूचितम्, बहुप्रवीरतनया बहुप्रकृष्टवीरप्रसूः उज्ज्वला दीप्यमाना मेवारभूर्जीवत्येव न तु मृत्युग्रस्ता, समग्रशक्तीनि करणानि साधनानि यस्य सः साक्षात् प्रतापानुचरः एष इत्यात्मनिर्देशात् अहमित्यर्थः जागर्म्मि अवहितस्तिष्ठामि न सुप्तोऽस्मि, तर्हि कथं दण्डो न दीयते, इत्याशङ्कायामाह, नृपशो विचिन्वन्नपि मृग्यन्नपि ते सदृशं दण्डं नैव वीक्षे पश्यामि । सर्व्वेषां दण्डानां त्वदपराधापेक्षया लघुत्वादिति भावः । अतएव दण्डदानविलम्ब इत्याशयः । यथासंख्यालङ्कारः । सत्यपि हेतौ दण्डनिरूपणरूपफलाभावाद् विशेषोक्तिः । अथवा 'नृपशो' इति सम्बोधनपदार्थस्य सदृशदण्डवीक्षणाभावे हेतुत्वम्, यतः नराणां राजदण्डो वर्त्तते, पशूनां च बन्धनताड़नादिदण्डः । यश्च नृपशुः न तु केवलं नरो न वा केवलं पशुः तस्यानुरूपो दण्डो नोपलभ्यते शास्त्रलोकयोरिति काव्यलिङ्गं न तु विशेषोक्तिः ।

तत्पादाहति-पातितस्य वदनं घर्षन् मुहुः कुट्टिमे
द्राग्द्रौणिर्द्रुपदाङ्गजन्मन इव प्राणान् हराम्येष ते ॥ (१)

( इति समरसिंहं ग्रहीतुं धावति )।

समरः । अरे आततायिन्! प्रतिषिद्धशस्त्रग्रहणा विलास-भूमिरियम् इत्यतः साम्प्रतं जीवसि, किन्त्वयं न भवसि,

मद्बाहुदृढ़निष्पेष-पिण्डीकृतकलेवरः ।
लोहितो लोहितोद्गारैर्गच्छ वैवस्वतक्षयम् ॥ (२)

( इति यावत् प्रत्याक्रमणाय यतते, तावद्भणसिंह-वान्दा-ठक्कुरौ तस्य हस्तद्वयं बध्नीतः )।

समरः। (स्वगतम्) हन्त! प्रसह्य निगृहीतोऽस्मि, न च

---

(१) शस्त्रेत्यादि—। अधमः पातकी अयं शस्त्राघातात् पवित्रमृत्युं पूतमरणं नार्हति, नास्य युज्यते। दुर्व्वाच्यं वदतः, सम्प्रत्येव अकथनीयं कथितवतोऽस्य वक्त्रे मुखे परः प्रकृष्टो निग्रहः कर्त्तुमुचितः योग्यः। एतदुक्ति पूरयन् वान्दाठक्कुरः सत्वरं समरसिंहमाह—तत् तस्मात् शस्त्राघातपूतमरणानर्हत्वात् पादाहति-स्य पातितस्य पादाहत्या पादाघातेन पातितस्य ते तव द्रुपदाङ्गजन्मनोधृष्टद्युम्न द्रौणिरिव एषः अहं वदनं मुहुः कुट्टिमे पापाणबद्धे भवनतले ( 'मेझे' इति वङ्ग-भाषाप्रसिद्धे ( कर्षन् घट्टयन् द्राक् सपदिप्राणान् हरामि गृह्णामि ।

(२) मद्बाहित्यादि—। मद्बाहोर्दृढ़निष्पेपेण गाढ़पीडनेन पिण्डीकृतकले-वरः, पिण्डीकृतं वर्त्तुलीकृतं कलेवरं यस्य सः लोहितोद्गारेण रक्तवमनेन लोहितः रक्तवर्णः वैवस्वतक्षयं विवस्वतः सूर्य्यस्य क्षयमिवास्तमिव वैवस्वतक्षयं शमनसदनं गच्छ प्राप्नुहि। सूर्य्यमण्डलस्य वर्त्तुलत्वादस्तगमनदशायां रक्तत्वाच्चास्तगामि-सूर्य्योपमा व्यज्यते। 'लोहितो' इत्यत्र यमकञ्च ।

व्यसनाभ्यासलब्धभीरुभावोऽयं राजा वाङ्मात्रेणापि मामुपकर्त्तुमीष्टे, भवत्वेवं तावत्, ( प्रकाशम् ) एको निरस्त्रो बहुभिर्धृतास्त्रैः पुरत एव देवस्य निगृह्यते इति कोऽसौ धर्म्मः ?

राजा । ( स्वगतम् , सम्प्रति धर्म्ममुपदर्शयत्ययं पापीयान् ।

भण । अरे रे महापातकिन् ! त्वमपि धर्म्ममुपदर्शयसि तथापि श्रूयताम्,—

आत्मापहारी पिशुनः कृतघ्नः
क्षत्रप्रकर्षक्षपणप्रवृत्तः ।
त्वं दस्युरेवासि न वीरधर्म्मा
विनिग्रहस्ते ननु राजधर्म्मः ॥ (१)

शालुम्ब्रा । भणसिंह ! कृतं क्षुद्रालापेन, तिष्ठत्वसौ वराकः, देशजातिधर्म्मान् उत्सादयितुम् अग्रेसरेऽपि कुलवैरिणि व्यसनविमूढो राजायं परपदप्रणामोपदेशमाददानो निश्चिन्तस्तिष्ठति, सम्यगस्माभिरनुबोधितोऽप्युपेक्षमाणो दर्पणस्थमात्मप्रतिबिम्बं निरीक्षते, तत् सर्व्वैरस्माभिर्विचारणीयं "किमत्र कर्त्तव्यमिति" ।

भण । ननु निष्प्रयोजनोऽयं विचारः, भवदभिमतमेव सर्व्वथा वयमनुमन्यामहे ।

---

(१) आत्मेत्यादि—। आत्मानमपहर्त्तुं शीलमस्य आत्मनः स्वरूपं प्रच्छाद्य व्यक्त्यन्तरत्वेन परिचयदायी । पिशुनः खलः, कृतघ्नः अन्नदातुर्महापकाररतः । क्षत्रप्रकर्षक्षपणे क्षत्राणां स्वाधीनतालोपे प्रवृत्तः । सुगममन्यत् ।

शालुम्ब्रा । (स्वगतम्) दृष्टं हि "विप्रकृतः पन्नगः फणां कुरुते इति" तदिदानीम् अनुचिताचरणामपि राजावमाननां धर्म्मरक्षामुद्दिश्य राजानं परिकोपयितुमाचरामः । (प्रकाशम्)

रे दर्पण ! त्वमसि निर्म्मलबाह्यमूर्त्ति-
रन्तर्नितान्तमलिनं तु तवाद्य विद्मः ।
यद्राजनाम-विदितं कुलकज्जलाङ्क-
मेनं दधासि हृदये गणिकेव यत्नात् ॥ (१)

तदयं ते दण्डः । (इति दण्डाघातेन दर्पणं चूर्णयति)

राजा । (स्वगतम्) इदमपि सोढव्यम् ।

शालुम्ब्रा । (स्वगतम्) इतोऽप्यधिकतरं दुराचरणमनुष्ठेयम् यदिदानीमपि न चेतयते देवः, हृदय ! मावसीद, धैर्य्यमालम्बस्व । (प्रकाशम्) आः यद्येवमपि नास्य कुलधर्म्मरक्षिणी प्रवृत्तिरुदेति, तदिदं मे चरममभिमतम्, शृण्वन्तु भवन्तः—

---

(१) रे दर्पणेत्यादि—। रे दर्पण मणिमयमुकुर, त्वं निर्म्मलबाह्यमूर्त्तिः निर्म्मला बाह्यमूर्त्तिर्दृश्यमानसम्मुखभागो यस्य सः असि भवसि, तु किंतु ते तव अन्तः अभ्यन्तरं नितान्तमत्यन्तमलीमसमद्य विद्मः जानीमहे,—यद् यस्मात्—राजनामविदितं राजेति नाम्ना प्रसिद्धं कुलकज्जलाङ्कं कुलस्य वाप्पावंशस्य कज्जलाङ्कं कज्जलचिह्नस्वरूपमेनं गणिकेव वाराङ्गनेव हृदये वक्षसि अथच मनसि यत्नाद् वहसि धारयसि । अनुमानोपमारूपकातिशयोक्तीनां सङ्करः ।

शस्यश्यामलभूमिभाग-नगर-ग्रामापणानात्मन-
स्त्यक्त्वा सर्व्वविधप्रजापरिवृतः शैलाटवीसंश्रयः ।
वन्यान्नोऽजनि पञ्चविंशतिसमाः सन्न्यासिवत् संयमी
यो योद्धा जवनैः स्वदेशकुलयोः स्वाधीनतारक्षिता ॥(१)

अपि च—

यद्रोषाग्निप्रभावप्रतिहतदहनज्वालभीमास्त्रजाला-
स्रासोल्लासप्रणाशव्यपगमितबलोत्साहसत्त्वप्रतापाः ।
त्यक्त्वा मेवारभूमिं सह विजययशोमानवीर्य्यैरनार्य्या
दूरीभूता दिनादाविव तिमिरघटा वैरिणो वेदबाह्याः ॥ (२)

---

(१) शस्येत्यादि—। स्वदेशकुलयोः स्वराष्ट्रवंशयोः स्वाधीनतारक्षिता स्वाधीनतायाः रक्षकः जवनैः सहार्थे तृतीया पञ्चविंशतिसमाः पञ्चविंशतिवत् सरान् व्याप्य योद्धा युद्धं कुर्व्वन् यः, आत्मनः स्वस्वामिकान् शस्य......आपणान् = शस्यश्यामलभूमिभागं शस्यसमृद्धभूखण्डं नगराणि ग्रामान् आपणान् हट्टानि च त्यक्त्वा विहाय सर्व्वविधप्रजापरिवृतः सर्व्वविधाभिः प्रजाभिः ब्राह्मणादिवर्णावर्णरूपाभिः परिवृतः शैलाटवीसंश्रयः गिरिकाननाश्रयः सन्न्यासिवत् संयमी भोगस्पृहादिवर्ज्जितः वन्यान्नः वनोद्भवशाकतृणशस्यादि अन्नं भोज्यं यस्य सः अजनि अभूत् । स्वाधीनतारक्षणस्य जवनयुद्धं प्रति हेतुत्वात् तद्युद्धस्य गिरिकाननाश्रयं प्रति हेतुत्वाच्च काव्यलिङ्गद्वयम् । सन्न्यासिवदित्यत्रोपमा च ।

(२) यद्रोषेत्यादि—। वेदबाह्या वेदानधिकारिणः अनार्य्या वैरिणः शत्रवः यस्य रोष एवाग्निस्तस्य प्रभावेण तेजसा प्रतिहतं निवारितं दहनज्वालभीमास्त्रजालं येषां ते, दहनज्वालैरग्निशिखाभिर्भीमं भीषणं नालिकाख्यमित्यर्थः, तच्च तत् अस्त्र-

धन्यं तदीयमिदमासनमार्य्ययोग्य-
मिन्द्रासनादपि पवित्रतमं प्रतीमः ।
अध्यासितुं तदयमर्हति नैव भीरु-
र्यावन्न याति समरे जवनक्षयाय ॥ (१)

( स्वगतम् ) अहो ! महापापमेतद्यद्राजद्रोहो नाम, प्रवृत्तेरविषयो वाङ्मात्रनिवेदितोऽपि यो नरकद्वारमिव मे पुरतः समुद्घाटयति ।

---

जालञ्चेति कर्म्मधारयः । रोषाग्नेः प्रबलशक्तित्वाद् बाह्याग्निर्वाधिष्णामं ऽाणां प्रतिघात इति तात्पर्य्यम्, त्रासो भयम् उल्लासप्रणाशः जयाशाप्रयुक्तानन्दस्य विनाशः ताभ्यां व्यपगमिताः विनाशिताः इति तत्पुरुषः ते बलोत्साहसत्त्वप्रतापा येषां बलं शारीरसामर्थ्यमुत्साहः मानससामर्थ्यं सत्त्वं धैर्य्यं प्रतापः प्रभावश्च । विजययशोमानवीर्य्यैः = विजयः कृतपूर्वस्तेषां यो विजयः तल्लब्धाधिकारः, स च यशः कीर्त्तिश्च मानः सम्मानश्च वीर्य्यं शौर्य्यं च तैः सह मेवारभूमिम् उदयपुरप्रदेशं त्यक्त्वा दिनादौ प्रातःकाले तिमिरघटा इव अन्धकारराशय इव दूरीभूताः दूरं गताः । त्यागस्य भेदेऽप्यभेदाध्यवसायादतिशयोक्तिमूलः सहविजयेत्यादौ सहोक्त्यलङ्कारः । रोषाग्निस्थले रूपकं च ।

(१) धन्यमित्यादि—। तदीयं तत्सम्बन्धि प्रतापसिंहदेवस्येत्यर्थः, धन्यं श्लाघ्यम् आर्य्ययोग्यं श्रेष्ठपुरुषोचितम् इदम् आसनं सिंहासनम् इन्द्रासनादपि देवराजस्यापि आसनात् पवित्रतममतिशयेन पवित्रं प्रतीमः विश्वसिमः, अयं भीरुः जवनक्षयाय जवनसंहारार्थं यावन्न याति युद्धार्थं न गच्छति (तावत्) तत् (आसनम्) अध्यासितुम् आरोढुं नैवार्हति नैव योग्यो भवति । श्लाघ्यस्य आर्य्ययोग्यस्य पवित्रस्य चासनस्योपवेशने भीरोर्जवननिग्रहनिवारणोद्यमविरहेण पापिष्ठस्य चाधिकारो नास्तीति भावः । काव्यलिङ्गालङ्कारः ।

राजा । (स्वगतम्) अयमवसरो मनोरथसाधनस्य । (प्रकाशम्) शालुम्ब्रापते ! अद्य खलु युक्तमभिहितम्, महाराजप्रतापसिंहसहचरेण भवता । तद् अहमद्य प्रतिजाने,—

यावन्मे शस्त्रपातक्षुभितहयगजोद्भ्रान्तिविभ्रान्तयोधा
रक्तोद्गारारुणाङ्गा जवननरपतेर्व्वाहिनी मुक्तकेशा ।
देशादस्मान्न गच्छत्यपचितविभवा नापि यावच्चितोरं
प्रत्यापद्ये, न तावत् कथमपि जनकस्यासनं संस्पृशामि ॥(१)

आकाशे देवदुन्दुभिध्वनिः ।

सर्व्वे । (सविस्मयमाकर्ण्य सहर्षम्) जयति जयति देवः ।

राजा । (विलासवेशान्तगूढं खड्गं बहिष्कृत्य)

हे खड्गराज ! जनकेन धृतोऽसि नित्यं
तत्सन्निभस्त्वमपि नाशयिता रिपूणाम् ।

---

(१) यावदित्यादि—। मे मम शस्त्रपातेत्यादेः सापेक्षत्वेऽपि गमकत्वात्समासः । मदीयशस्त्रपातेन क्षुभितं विशृङ्खलीभूतं हयगजं अश्वा गजाश्च तस्य उद्भ्रान्त्या चालकनिदेशमतिक्रम्य भिया अनियन्त्रितभ्रमणेन विभ्रान्ताः तच्चरणमर्द्दनशङ्कया भयाकुलतया कान्दिशीका धावन्तः योधा यस्याः रक्तोद्गारारुणाङ्गा रक्तस्रावेण अरुणानि रक्तवर्णानि अङ्गानि यस्याः सा अपचितविभवा परित्यक्तयुद्धोपकरणादिसम्पत् जवननरपतेर्व्वाहिनी जवनराजचमूः मुक्तकेशा केशसन्निवेशनविलम्बासहा सती यावत् अस्माद् देशात् न गच्छति पलायते यावच्च चितोरं न प्रत्यापद्ये पुनः प्राप्नोमि जवनकरात् उद्धरामि, गच्छतीत्यत्र प्रत्यापद्य इत्यत्र च यावद्योगे भविष्यति लट्, तावत् जनकस्यासनं सिंहासनं कथमपि केनापि प्रकारेण न संस्पृशामि का कथा

निष्कोष एव भयदोऽसि दुरासदश्च
तस्मिन्निव त्वयि दृढ़ा मम भक्तिरस्तु ॥ (१)

तदद्यारभ्य,—

सामन्ता मदनुव्रता रणभुवं गच्छन्तु तिष्ठन्तु वा
पौरा मे समयानुपालनविधिं वाञ्छन्तु नेच्छन्तु वा ।
सैन्यं किञ्चन मामनुव्रजतु वा मा वा तथाप्यात्मना
यावज्जीवमहं स्थितोऽस्मि समये साक्षी भवत्वीश्वरः ॥(२)

---

आरोहणस्य तत्स्पर्शमपि न करिष्यामि। देशादस्मात् पलायन्... प्रति मे शस्त्रपातेत्यादिविशेषणवाक्यार्थस्य हेतुत्वात् काव्यलिङ्गालङ्कारः।

(१) हे खड्गराजेत्यादि—। हे खड्गराज खड्गानां राजा श्रेष्ठः, तत्सम्बोधने नित्यं जनकेन मम तातपादैर्धृतः असीति त्वमर्थेऽस्त्ययम्। तत्सन्निभः स जनकः सन्निभा उपमानं यस्य तेन सन्निभः सुसदृश इति वा। यतः त्वमपि रिपूणां शत्रूणां नाशयिता विनाशकः, निष्कोष एव कोषात् पिधानचर्म्मणो निष्क्रान्त एव उद्यमनात् पूर्व्वमपि भयदोऽसि भीतिप्रदो भवसि दुरासदः अन्यैः समीपमागन्तुमशक्यः चः समुच्चये। जनकोऽपि निष्कोष एव निर्नास्ति कोषो धनसञ्चयो यस्य स एव भीतिप्रदो दुरासदश्चासीत् अतः तस्मिन् जनक इव त्वयि मम दृढ़ा अचला भक्तिः भजनम् आश्रयतया ग्राह्यत्वबुद्धिः जनकपक्षे पूज्यानुरागरूपा अस्तु तिष्ठतु। अत्र काव्यलिङ्गं श्लेषमूलोपमा खड्गपितृगोचरयो रिपुनाशयितृत्वभक्त्योर्भेदेऽप्यभेदाध्यवसायादतिशयोक्तिश्च।

(२) सामन्ता इत्यादि—। सामन्ताः = तदाख्या भूस्वामिनः मदनुव्रताः मम अनुव्रताः अनु सदृशं व्रतं नियमः शत्रुसंहारादिनियमः येषां ते सन्तः रणभुवं समरक्षेत्रं गच्छन्तु वा अथवा तिष्ठन्तु न गच्छन्तु इत्यर्थः, पौराः पुरवासिनो जनाः मे मम समयानुपालनविधिं प्रतिज्ञारक्षणक्रमव्यापारं वाञ्छन्तु इच्छन्तु, वा अथवा नेच्छन्तु,

शालुम्ब्रा । ( सहर्षमात्मगतम् ) यथा व्यसनार्णव-निमग्नोऽपि निगूढ़मिव पोतं खड्गराजमिममाश्रयति, यथा च त्वरितमेव सम्यक् प्रतिपन्नः कुलोचितं तेजः, तथा मन्ये गूढ़ाकारोऽयं देवः (१) । ( प्रकाशम् ) इदानीन्तु जानामि देवस्य प्रतापसिंहस्यैव चरणतलच्छायामाश्रिता वयमिति ।

सर्व्वे सामन्ताः । वयमपि प्रतिजानीमहे सर्व्वथा महाराजमनुव्रताः स्मः ।

पुनराकाशे दुन्दुभिः ।

रा[illegible] । आकर्णयत तावत्—

धन्या यूयमथाद्य बान्धवगणा मुक्ताश्चिरं किल्विषात्
कर्त्तव्यस्थिति-हृत्प्रसाद-परमोत्साहैः पवित्रीकृताः ।
आलस्यप्रकटावसादविगमादुद्योगिनः श्रेयसे
यानालोक्य मुदान्वितैः सुरगणैरातोद्यमातन्यते ॥ (२)

---

किञ्चन सैन्यमेकमपि सेना मामनुव्रजतु वा मा अनुव्रजतु वा सर्व्वत्रैव माङ्योगे माशब्दस्तेन लुटः प्रयोगो न लुङः । तथापि यावज्जीवं यावत्काल जीवामि तावत् आत्मना स्वयं समये कृतायां 'यावन्मे' इत्यादिरूपायां प्रतिज्ञायां स्थितः निश्चलोऽस्मि आरम्भकालस्य प्राधान्याभिप्रायेण लट्प्रयोगः । ईश्वरः साक्षी भवतु । भविष्यतोऽपि वर्त्तमानरूपतया ग्रहणादतिशयोक्तिः । प्रतिज्ञादार्ढ्यप्रत्यायनार्थमिदं वचनम् ।

(१) पताकास्थानमिदम्, व्यसनित्वेन निर्णीतस्यामरसिंहस्य, शालुम्ब्रापतिना यथार्थस्वरूपपरिज्ञानात् सहसा सर्व्वेषां सामन्तानाममरसिंहनिदेशैकानुवर्त्तित्वरूप-साधनार्थसम्पत्तेः । यत्रार्थे चिन्तितेऽन्यस्मिंस्तल्लिङ्गोऽन्यः प्रयुज्यते । आगन्तुकेन भावेन पताकास्थानं तु तत् । सहसैवार्थसम्पत्तिर्गुणवत्युपचारतः । पताकास्थानक-मिदं प्रथमं परिकीर्त्तितमिति च लक्षणात् ।

(२) धन्या इत्यादि—। हे बान्धवानां गणाः गणस्यानेकत्वाद् बहुवचनम्,

अपि च—अङ्गुल्या ऊर्द्ध्वं निर्द्दिश्य—

विलोकयत मा चिरं सुरसमाजमध्ये स्थितः
पिता मम पितामहैः सह तथा भवत्पूर्व्वजैः ।
निरीक्ष्य परमोद्यमान् जननभूहितार्थेषु नः
शुभाशिषमुदीरयत्यमरवाद्यमन्द्रस्वरः ।। (१)

सर्व्वेषां राजानमुद्दिश्य जयध्वनिः ।

---

यद्यप्यत्र त्रय एव स्थितास्तथापि तेषां प्रत्येकमेकैकगणप्रतिनिधित्वान्न [illegible]वचनासङ्गतिः । आलस्येन प्रकटः स्पष्टः योऽवसादः तद्विगमात् तद्विनाशात् अंशे कल्याणार्थम् उद्योगिनः चिरं चिरेण किल्विषात् विहिताकरणजनितपापात् अथ मुक्ताः अथानन्तरं कर्त्तव्ये स्थितिः स्थिरत्वं हृत्प्रसादः मनसः प्रसन्नता परमोत्साहः धर्म्मरक्षार्थाध्यवसायः तैः पवित्रीकृताः, कर्त्तव्यस्थितौ मनःप्रसादः कारणं तत्र धर्म्माध्यवसायः कारणं तैः कर्त्तृभिः पवित्रीकृताः तमस आलस्यादिहेतोस्तमोगुणात् उत्तारिताः यान् आलोक्य दृष्ट्वा मुदान्वितैः आनन्दविशेषयुक्तैः सुरगणैः आदित्यवसुरुद्रादिरूपगणदेवताभिः अन्यैश्च देवैः आतोद्यं वाद्यमातन्यते सर्व्वतो विस्तार्य्यते वाद्यध्वनिर्निष्पाद्यते । आतोद्यध्वनेर्निष्पादनस्यैवातोद्यविस्तारत्वात्, ते यूयं धन्याः भाग्यवन्त इत्यर्थः, चिरमित्यव्ययशब्दः, अत्र लुप्ततृतीयान्तः, दीर्घकालेनेति तस्यार्थः, तस्य मुक्ता इति मोचनक्रियायामन्वयः । धन्यत्वं प्रति देवगणानां सानन्दवाद्यध्वनेः, तं प्रति यदालोकनरूपस्य वाक्यार्थस्य हेतुत्वात् काव्यलिङ्गालङ्कारः । काव्यलिङ्गान्तरं चाप्यूहनीयम् ।

(१) विलोकयतेत्यादि—। विलोकयत पश्यत, मा चिरं विलम्बं मा कुरुत, सुरसमाजमध्ये देवसभमध्ये मम पितामहैः पितामहप्रपितामहप्रभृतिभिः तथा भवतां पूर्व्वजैः पित्रादिभिः सह स्थितः पिता प्रतापसिंहदेवः जन्मभूमिहितकर्म्मसु परमोद्यमान् परमः कायिकवाचिकमानसरूपत्वेन प्रकृष्टः उद्यमः उद्योगो येषां तान् नः अस्मान् निरीक्ष्य दृष्ट्वा अमरवाद्यमन्द्रस्वरः अमरवाद्यम् देवदुन्दुभिः तस्य

समरः । ( स्वगतम् ) यथायं प्रकृतिमापन्नस्तथाहमिदानीमनुवर्त्ते । ( प्रकाशम् ) चिराकाङ्क्षिते जवनसमरे देवमनुवर्त्तितुम् अनपराधनिगृहीतं मामनुमन्यतां देवः ।

राजा । ( स्वगतम् ) आदिष्टो नगरपाल आगतप्राय इति मन्ये । सम्प्रति भूतार्थमस्य कथयामि । ( प्रकाशम् ) मानसिंहप्रणिधे ! अद्यापि कपटं न मुञ्चसि ।

समरः । ( स्वगतम् ) अहो ! गूढ़ाकारेण तावदनेन विदितवृत्तान्तेनापि वञ्चितोऽस्मि, चित्रमिदमप्रतिविधेयञ्च ; तदिदानीम[illegible]न्योपायो यन्त्रपरिचालितवद्दिष्टफलमेवानुभवामि ।

प्रविश्य प्रतीहारी ।

प्रतीहारी । जेदु जेदु भट्टा । णअरवालो उवट्ठिदो ।

[ जयति जयति भर्त्ता । नगरपाल उपस्थितः । ]

राजा । अविलम्बं प्रवेशय ।

प्रती । जं देवो आणवेदि ( इति निष्क्रान्ता ) ।

[ यद्देव आज्ञापयति । ]

---

मन्द्रस्वर इव गम्भीरध्वनिरिव मन्द्रस्वरो यस्य स तादृशः सन् शुभाशिषमुदीरयति शुभाशीर्व्वचनं प्रयुङ्क्ते । उदयसिंहस्य चितोरात्पलायनेऽपि स्वाधीनताया अपरित्यागात्—स्वर्गस्थत्वमलीकम् । इदं च प्रोत्साहनवाक्यमात्रम्, भावप्रवणस्वकल्पनानुरूपमिति बोध्यम् । मन्द्रस्वरयोर्भेदेऽप्यभेदाध्यवसायादतिशयोक्तिस्तन्मूलोपमा च ।

नगरपाल: । (प्रविश्य) जयति जयति देव: । देवादेशमनुवर्त्तमानेन मया धृता बहव: शत्रुप्रणिधय:, प्राप्तं परप्रत्यभिज्ञानचिह्नम् ।

राजा । नगरपाल ! परितुष्टोऽस्मि ते कर्म्मकौशलेन, तदिदं ते पारितोषिकम् (इति स्वाभरणं प्रयच्छति)।

नगर । महानेष प्रसाद: (इति सप्रणामं गृह्णाति) ।

राजा । किन्तु नायमवसरो विचारपरीक्षयो:, तदत्र निगड़बद्धं कपटसमरसिंहम्, (अङ्गुल्या निर्दिशन्) इमौ च (१) चाटुकारौ सुपरिरक्षितेषु कारागारविविक्त (२) कोष्ठेषु, पृथक् पृथगप्रमत्त (३) मवस्थापय ।

नगर । यथाज्ञापयति देव: (इति समरसिंहं संयम्य) आगच्छ महापुरुष ! आगच्छ, मत्कुणिकोणसदृशं कारागारकोष्ठमध्यासितुम् । (चाटुकारौ प्रति) परिधाय भूषणमागच्छतां महाभागौ (इति हस्तपदबन्धं परिधापयति) ।

सामन्ता: । अरे कापटिका: ! अनुभवत फलमिदानीं राजाभिसन्धानस्य ।

नगर । चलत रे चलत, (इति समरसिंहादीनादाय निष्क्रान्त:) ।

---

(१) चकारात् निगड़बद्धावित्यर्थो लभ्यते ।

(२) विविक्तम् = निर्ज्जनम् ।

(३) अप्रमत्तम् = सावधानं यथा स्यात्तथा ।

द्वितीयचाटुकारः । हद्धी ! हद्धी ! ण क्खु मं वीर-पुरिसाणं इध बलिं करेदु, एदे बंधुअणा जहिं णीअंति, मं बि तहिं णेदु अज्जो, आदिसदु देवो, रक्खदु देवो, महुरो देवो, अण्णप्पदो देवो हा ! हा !! हा !!!
( इति राज्ञः पादान्ते पतन् रोदिति ) ।

[ हा धिक् हा धिक् ! न खलु मां वीरपुरुषाणामिह बलिं करोतु, एते बन्धुजना यत्र नीयन्ते मामपि तत्र नयत्वार्य्यः । आदिशतु देवो रक्षतु देवो मधुरो देवः अन्नप्रदो देवः, हा हा हा । ]

रा[illegible] । चतुरक ! मा रोदीस्त्वं हि न परप्रणिधिः, स्वभावभीरुरन्नपानार्थं मामनुवर्त्तसे, तद्गच्छ वा तिष्ठ वा, यावज्जीवमविच्छिन्ना ते वृत्तिः (१), न च ते प्रतिरोद्धा कश्चिदस्ति ।

चतुरकः । ( उत्थाय सविस्मयं क्षणं तूष्णीं स्थित्वा प्रसन्नं राजमुखं निरीक्ष्य सहर्षं कृताञ्जलिः ) अम्मो ! महाप्पसादो ता गमिस्सं । ( स्वगतम् ) को इध जमदुआले चिट्ठिदुं इच्छदि ( इति द्रुततरं निष्क्रान्तः ) ।
[ अहो महाप्रसादः तद्गमिष्यामि । क इह यमद्वारे स्थातुमिच्छति ! ]

शालुम्रा । आनन्दमयोऽयं शुभो मुहूर्त्तस्तदधुनैव देवस्य समरयात्रामङ्गलारम्भमिच्छामि ।

---

(१) यावज्जीविष्यसि तावदेव ते दीयमानाया मासिकवृत्तेर्विच्छेदो न भविष्यतीत्यर्थः ।

राजा। एवमस्तु, (भगसिंह-बान्दाठक्कुरौ प्रति) भगसिंह! बान्दाठक्कुर! त्वरयतां भवन्तौ वाहिनीः समरयात्रायै, सर्व्वतः प्रवर्त्तयताञ्च यात्रामङ्गलाचारम्।

भगसिंहबान्दाठक्कुरौ। यथाज्ञापयति देवः (इति निष्क्रान्तौ)।

राजा। शालुम्ब्रापते! जवनाक्रमणप्रतिरोधार्थं सुघटिता भिल्लसेना अन्तपालदुर्ग (१) सन्निधौ गिरिमार्गस्य वामभागमध्यासिता, दक्षिणेन गिरिमार्ग (२) मस्माभिरभिषेणयितव्यम्, मध्येन (३) गिरिमार्गेण च परसेनासञ्चार; तदेवं पूर्व्वापरप्रवेशनिर्गममार्गयोः शैलाद्यन्तरितवामदक्षिणभागस्थसेनाभि (४) रवरोधे निर्व्बाधोऽस्माकं विजयस्तदेवमुपदिश्य प्रवर्त्तनीयः सेनासञ्चारो भवद्भिः।

---

(१) अन्तपालदुर्गः सीमान्तरक्षणोचितो दुर्गः।

(२) दक्षिणेन गिरिमार्गम्, एनया द्वितीया, गिरिमार्गाद्दक्षिणस्यां दिशीत्यर्थः। एनप्प्रत्ययान्तो दक्षिणशब्दः। तस्य चाव्ययत्वात् लुप्तविभक्तिकत्वमिति बोध्यम्।

(३) मध्येनेति तृतीयान्तपदम्। गिरिमार्गस्य विशेषणम्। मध्यस्यैव सुखसञ्चारमार्गतया तेन परसेनाभिरभियास्यते। न हि निर्व्बाधं पन्थानमपहाय विना कारणमपथाश्रयः परेषां भविष्यतीति तात्पर्य्यम्।

(४) वामभागे भिल्लसेना, दक्षिणभागे च क्षत्रियसेनाः इति भावः। पार्श्वद्वये शैलस्य विभिन्नावंशौ, प्राचीरवत्तिष्ठतः, मध्ये पन्थाः; प्राचीरवत् स्थितयोः शैलांशयोरारम्भसमाप्तिस्थानयोः प्रवेशनिर्गममार्गसंज्ञा, इति बोध्यम्।

शालुम्ब्रा। (सलज्जम्) देशरक्षायै देवचेष्टितं यथा यथा निगूढ़मवगच्छामि तथा तथैवात्मानमकारणराजावमाननया पापीयांसमनुभूयानुतप्तोऽस्मि, तत्प्रसादयामि देवम्, क्षम्यतामविज्ञाततत्त्वस्य ममायमपराधः।

राजा। मा तावदेवम्। न खलु सर्व्वज्ञो भवान्, प्राक् प्रतिहतचितोराक्रमणस्य रोषक्षोभाभिभूतस्य यन्मे रहस्यचेष्टितं तेन वयमेवापराद्धाः, न खलु चिरमित्रम् अनाख्यातरहस्यं भवितुमर्हतीति।

शालुम्ब्रा। महिमायं देवस्य। अथ यद्गतं तद्गतम्,—

अद्यारभ्य वयं शिशोदकुलजाश्चान्ये च येऽस्मद्रता-
स्ते सर्व्वे समचेतसः स्थिरधियो जाताश्चितोरोद्धृतौ।
वित्तं बन्धुजनं सुखञ्च सकलं मुञ्चेम देहन्तथा
सङ्कल्पं न परित्यजेम तमसौ यावन्न संसिध्यति॥ (१)

(नेपथ्ये चारणगीतम्)—

---

(१) अद्येत्यादि—। अद्यारभ्य शिशोदकुलजाः (शिशोदसंज्ञाकारणं भूमिकायां द्रष्टव्यम्) शिशोदकुलं वाप्पावंशधरराहुपान्ववायः तस्माज्जाताः वयं च ये अस्मद्रताः अस्मदनुरक्ताः अन्ये कुलान्तरजाश्च ते सर्व्वे समचेतसः एकचित्ताः सन्तः चितोरोद्धृतौ चितोरस्योद्धारे स्थिरधियोऽविचलितबुद्धयो जाताः। वित्तं धनं बन्धुजनं कुटुम्बवर्गं सकलं सर्व्वविधं सुखं च मुञ्चेम त्यजेम, न केवलमेतावत् किन्तु तथा वित्तादिवद् देहं मुञ्चेम नियमरूपविध्यर्थे लिङ्। विधिश्चात्मपरः। असौ= सङ्कल्पः चितोरोद्धृतौ सङ्कल्पः यावत् न संसिध्यति यावद्योगे भविष्यति लट्, तावत् तं सङ्कल्पं न परित्यजेम।

( १ )

जयति महेशो जयति महेशी जयति चितोरधरित्री
स जयति वाप्पा यस्य भवानी साक्षादायुधदात्री ।
विदितं यदरुणसौरपताकापृथिवीरञ्जनरंह-
स्तदभिजनश्रीर्जयति महीपतिरतुलबलोऽमरसिंहः ॥

( २ )

स जयी समरे भारतशातनजवननिपातनकामः
सुविहितसमरः प्रीतैरमरैर्नीतः परमं धाम ।

---

(१) जयतीत्यादि—। महेशः एकलिङ्गनाथशिवो जयति सर्व्वोत्कर्षेण वर्त्ततां, महेशी चितोरेश्वरी जयति, भवानी श्रीदुर्गा यस्य साक्षात्—प्रत्यक्षभूता आयुधदात्री खड्गं प्रायच्छत, स वाप्पाः चितोराधिनाथो मूलपुरुषः, जयति। यदरुणेति—यस्य अरुणसौरपताका अरुणा रक्तवर्णा सौरपताका सूर्य्यमण्डलचिह्निता पताका वैजयन्ती तस्याः पृथिवीरञ्जनरंहः पृथिव्या रञ्जनं रागजनकं रंहः वेगः विदितं सर्व्वजनप्रसिद्धं तदभिजनश्रीः तस्य वाप्पानाम्नश्चितोरराजस्य यः अभिजनः अन्ववायः तस्य श्रीः शोभासम्पदादिस्वरूपः अतुलबलः अतुलं निरूपमं बलं सामर्थ्यं सेना च यस्य सः महीपतिः राजा अमरसिंहो जयति। जययात्रागतो वाप्पाराजस्य रक्तवर्णा सूर्य्याङ्किता वैजयन्ती सवेगमेकस्माद्देशाद्देशान्तरं नीयमाना क्रमेण भूमण्डलं स्वीयभासा रक्तवर्णमनुरागयुक्तञ्चाकरोदिति तृतीयपादतात्पर्य्यम्।

पताकावेगे रञ्जकत्वासम्बन्धेऽपि सम्बन्धाध्यवसायात् श्लेषमूलातिशयोक्ति-स्तदभिजनश्रीरित्यत्र हेत्वलङ्कारश्च। निन्दति चन्दनमित्यादिजयदेवीयमात्रा-च्छन्दः। चारणगीतार्थो भूमिकापरिशीलनेन सुबोधो भविष्यतीति स्मरणीयम्।

(२) स इत्यादि—। भारतशातनाः आक्रमणेन भारतं शातयन्ति क्षीणं कुर्व्वन्ति ये तादृशानां जवनानां निपातनकामः निषूदनाभिलाषी सुविहितः शोभनं

कागाराभिधतटिनी धावति यदसृक्पूता ! कापूरुषांह-
स्तदभिजनश्रीर्जयति महीपतिरतुलबलोऽमरसिंहः ॥

( ३ )

यो निजपूर्व्वजतापहरणकृतकृत्यभगीरथमूर्त्ति-
र्जवननृपतिहृतपूर्व्वचितोरोद्धरणस्थापितकीर्त्तिः ।

---

यथा स्यात्तथा विहितः कृतः समरो येन तादृशः अतएव प्रीतैः प्रीतिमद्भिरमरैर्देवैः परमं धाम [illegible]लोकं नीतः स समरः समरसिंहः जयी जययुक्त एव सम्मुखसंग्राम-हतस्याक्षयस्वर्गप्राप्त्या मानवयोनेरुत्कर्षलाभात् । कागाराभिधा कागारनाम्ना प्रसिद्धा तटिनी नदी यस्य असृजा पूता सती कापुरुषांहः कापुरुषाणाम् अंहः पापं धावति प्रक्षालयति । तदभिजनेत्यादि—चतुर्थपादार्थः पूर्व्ववत् । कागारमिति दृषद्वतीनद्याः म्लेच्छसङ्केतितं नाम, किं तु कानां जलानामगारं गृहमिति व्युत्पत्त्या जलाशय-विशेषार्थकतया देवभाषायामपि स्थापयितुं शक्यते, प्रचरदितिहासाध्येतॄणां सुखबोधाय तन्नामात्र गृहीतम् । सा च नदी ब्रह्मावर्त्तपश्चिमप्रान्तवाहिनी सरस्वतीदृषद्वत्योर्देव-नद्योर्यदन्तरं तं देवनिर्म्मितं देशं ब्रह्मावर्त्तं प्रचक्षते इति मनुस्मरणात् । अत्र केषाञ्चित् आभिधानिकानां दृषद्वतीपरिचयोक्तिर्लिपिप्रमादमूला । दृषद्वत्याख्यायाः कागारापरनाम्न्या नद्यास्तीरे जवनयुद्धे समरसिंहो भारतरक्षार्थं प्राणांस्तत्याजेति वार्त्ता भूमिकायां द्रष्टव्या । एकस्य समरसिंहस्य जवनसमराभिलापतत्-समरतदनन्तरपरमधामगमनानां क्रमेण भावात् पर्य्यायः तृतीयचरणेऽसम्बन्धे सम्बन्धाध्यवसायादतिशयोक्तिः ।

( ३ ) य इत्यादि—। निजपूर्व्वजानां स्वीयपितृपितामहतत्पितृव्यादीनाम्, भगीरथपक्षे प्रपितामहभ्रातॄणां तापहरणेन जवनानां चितोराधिकारप्रयुक्तो यस्तापो दुःखम् भगीरथपक्षे तापो नरकदुःखं तस्य हरणेन अपनोदनेन कृतकृत्यः कृतार्थः

**संयतदिल्लीनाथ-महम्मदखिलिजिर्हामिरसिंह-**
**स्तदभिजनश्रीर्जयति महीपतिरतुलबलोऽमरसिंहः ॥**

---

भगीरथमूर्त्तिः भगीरथस्य मूर्त्तिरिव मूर्त्तिर्य्यस्य । यद्वा भगीरथस्य मूर्त्तिः प्रतिकृतिः जवननृपतिना आल्लाउद्दीन इति ख्यातेन 'पाठान'वंशीयदिल्लीश्वरेण हृतपूर्व्वं पूर्व्वं हृतं यच्चितोरं चितोरप्रदेशः तदुद्धरणेन अस्खलितेन तस्य पुनरधिकारेण स्थापिता स्थिरीकृता कीर्त्तिर्य्येन सः, तत्कीर्त्तिस्थापनस्य प्रकारमाह । संयतेति—संयतो वन्दीकृतो दिल्लीनाथमहम्मदखिलिजिर्य्येन स हामिरसिंहः,—तदभिजनेत्यादि पूर्व्ववत् । अत्रेयमैतिहासिकी वार्त्ता—चितोरराजलक्ष्मणसिंहस्य पितृव्यो भीमसिंहो [illegible]मासीत्, तत्पत्नी पद्मिनी भूमण्डलैकसुन्दरीति ख्यातिमभजत् । तदानीमाल्लाउद्दीनाख्यः पाठान-संज्ञकजवनकुलोत्पन्नो भारते सम्राट्-पदमध्युवास । स हि श्रुतपद्मिनीरूपोत्कर्ष-श्चितोरमाचक्राम । पद्मिनीप्रभृतयः सर्व्वा रमण्यो ज्वलति हुतभुजि, सर्व्वे च क्षत्रवीरा जवननालिकास्त्रानले देहमाजुहुवुः । एवं चितोरस्य जवनकर्त्तृकाधिकारदशायां हामिरसिंहो द्वादशवर्षदेशीयो मातामहकुले तस्थौ । तत्पिता चारिसिंहो जवनसमरे वीरगतिमाप पितृव्योऽजयसिंहः क्षुद्रे मेवारैकदेशे राज्यमशिषत् । स च स्वशत्रुवधेन परीक्षितशौर्य्यं हामिरसिंहमेव तद्राज्याधिकारतिलकेनालञ्चकार । अत्रान्तरे आल्लाउद्दीनस्य मरणात् परं तत् सिंहासनं प्राप्नुवति महम्मदखिलिजौ हामिरसिंहश्चितोरनगरमधिचकार । तद्रक्षार्थमागतं सवाहिनीकं दिल्लीश्वरं विजित्य वन्दीचकार । स खलु गत्यन्तराभावेन हीनसन्धिनात्मानं मोचयामास । तथा च हामिरो भगीरथवदेवस्वर्गतानां पूर्व्वजानां तापमपाचकार । दिल्लीनाथविरोधावसरे गङ्गाविर्भावपुण्यदशहरातिथौ गङ्गास्नानाय मातुरभिलापे निष्प्रत्यूहं मातुरभिलाप-पूरणायाराधिताया गङ्गायाः स्वप्नानुरूपस्तद्दिने नवीनप्रस्रवणाविर्भावस्तस्य भगीरथवत् कृतकृत्यत्वं निर्वर्त्तयाद्यापि गङ्गाविर्भाव इव गण्यते दशहरास्नानार्थिनो मेवारवासिन-स्तत्रैव स्नान्तीति। मान् ब्रह्मविष्णुमहेश्वरान् हम्मन्ति गच्छन्ति आश्रयन्ते इति यावत्,

( ४ )

दिल्लीश्वरजय-गर्व्वितदुर्ज्जय-गुर्ज्जरमालवजवन-
क्षितिपयुगलबलदलनो बन्धनकातररिपु-नृप-करुणः।
योऽतुलविजयस्तम्भचयोज्ज्वलकीर्त्ती राणाकुम्भ-
स्तदभिजनश्रीर्जयति महीपतिरमरो हतरिपुदम्भः॥

---

मशब्दस्य ब्रह्मविष्णुमहेश्वरवाचकत्वाद् गत्यर्थकहम्मधातोः कर्म्मण्यण प्रत्ययाच्च, महम्मा[illegible]र्णाश्रमिणः, तान् द्यति खण्डयति इति महम्मदः शैववैष्णवादिध्वंसी, खिलम् अप्रहता भूमिः तदेषामस्तीति खिलिनः अप्रहतभूस्वामिनः तेषां जिः जेता 'जिर्जेता' इत्येकाक्षरकोषात्। महम्मद इति नाम खिलिजिरिति कौलिकोपाधिः। अत्र प्रथम-चरणे भगीरथमूर्त्तिरिति प्रथमार्थपक्षे श्लेषमूलोपमा, द्वितीयार्थपक्षे तादृगतिशयोक्तिः प्रथमपादार्थस्य कार्य्यभूतस्य द्वितीयतृतीयपादार्थेन कारणभूतेन समर्थनादर्थान्तर-न्यासः।

(४) दिल्लीश्वरेत्यादि—। दिल्लीश्वरस्य तात्कालिकखिलिजिवंशजस्य जवन-नृपतेर्जयेन तं पराजित्य गर्व्वितौ यौ दुर्ज्जयगुर्ज्जरमालवजवनक्षितिपौ तयोर्युगलं तस्य यानि बलानि सेनास्तानि दलयति कर्त्तरि ल्युट्। गुर्ज्जरमालवयोः गुर्ज्जरदेशमालव-देशयोर्जवनक्षितिपौ जवनजातीयौ राजानौ, दुर्ज्जयौ च तौ गुर्ज्जरमालवजवनक्षितिपौ चेति कर्म्मधारयः। तयोर्मालवराजो वन्दीकृतो मासषट्कं कारागारे क्षिप्तः। बन्धनकातरे तस्मिन् रिपुनृपे रिपुश्चासौ नृपश्चेति समासः करुणः दयावान्, करुणयैव तस्य मुक्तिमदादित्यर्थः, अतुलाः निरुपमाः विजयस्तम्भाः समरजयसूचकस्तम्भाः तेषां चयः समूहः स एव उज्ज्वला देदीप्यमाना तेनोज्ज्वला वा कीर्त्तिर्यस्य तादृशो यो राणाकुम्भः राणोपाधिकः कुम्भः, तदभिजनश्रीर्हतरिपुदम्भः महीपतिरमरोऽमरसिंहो जयति। दम्भः कपटः हतो निराकृतो रिपुकपटो येन रिपोर्मानसिंहस्य चाराणां निगृहीत-

( ५ )

यद्बलविक्रमसङ्गरकातर-बाबर-जवन-नरेशः
सन्धिमयाचत भीतो भारतवर्षजये विगताशः ।
स्मरति मनस्तं समरक्षतशत-लक्षितवपुषं सङ्गं
तदभिजनश्रीर्जनयतु भूपतिरमरः कुलरिपुभङ्गम् ॥

( ६ )

धनजनयौवनसौख्यसौधतलशस्यविकस्वरराज्यं
विजहौ भूधरकाननचारी न तु यो वीर्य्यं प्राज्यम् ।

---

त्वादिति । रिपुनृपकरुण इत्यत्र विशेषोक्तिः रिपुत्वे हेतौ सत्यपि तत्फलस्य हिंसादिकार्य्यस्याभावस्य करुण इत्यनेन प्रतिपादनात् । स्तम्भानां कीर्त्तिहेतुतया तत्र कीर्त्तित्वकथनाद् हेत्वलङ्कारः इति तृतीयपादस्य प्रथमार्धे, द्वितीयार्धेऽतिशयोक्तिश्च । राणाशब्दस्य साधुता प्रस्तावना-टीकायामुपदर्शिता ।

(५) यदित्यादि—। यस्य बलविक्रमसङ्गरैः बलानि सेनाः विक्रमः शौर्य्यं सङ्गरः युद्धं युद्धनैपुण्यं तैः कातरः न्यूनीभावमाप्तः बाबरनामा जवनाधिपतिः भीतः स्वपराजयसम्भावनया त्रस्तः भारतवर्षजये विगताशः विगता विनष्टा आशा यस्य, यस्य भारतवर्षजयाशा विनष्टा तादृशः सन् सन्धिम् अयाचत प्रार्थितवान्, समरेषु बहुयुद्धेषु क्षतानि शस्त्राघातव्रणाः तेषां शतानि अत्र शतशब्दो बहुत्वबोधकः तैर्लक्षितं चिह्नितं वपुर्य्यस्य तं सङ्गं सङ्ग इति प्रथितं संग्रामसिंहं मनः स्मरति वृद्धचारणानां तत् प्रत्यक्षं मनः स्मरतीत्यनेन सूचितम्, संग्रामसिंहवपुषि युद्धक्षतचिह्नान्येकाशीतिरासन्नितीतिहासः । तदभिजनश्रीः भूपतिरमरः अमरसिंहः कुलरिपूणां जवनानां भङ्गं पराजयं जनयतु सम्पादयतु । सन्धिप्रार्थनहेतोः पदार्थत्वात् काव्यलिङ्गालङ्कारः ।

(६) यः भूधरकाननचारी गिरिवनचरः सन् धनं जनाः स्वजनादयः यौवनं तारुण्यं च तेषां सौख्यं तरतम्यन्नि तदनयुक्तमिति यावत् सौख्यं सुखं

अनशनमलिनं महिषीशिशुमुखमवलोक्यापि सुचेता
जन्मभूमिमुखमलिनिमहरणे प्राणपणस्य विनेता ॥

( ७ )

तृणमिव मानं तृणमिव दानं तृणमिव पुत्रकलत्रं
गणयन्नकरोत् सारं निजकुलगौरवरक्षणमात्रम् ।
अधनो बहुधन-दिल्लीपतिबल-निर्ज्जयदुर्ज्जयवीर्य्यो
मानवहृदये सततं तिष्ठन् स जयति भूपतिवर्य्यः ॥

---

सुखशब्दस्य चातुर्वर्ण्यादित्वात् स्वार्थे ष्यञ्प्रत्ययात् । तच्च सौधतलं हर्म्यतलं च शस्यानि च तैर्व्विकस्वरं कमलवद् विकासि राज्यं विजहौ तत्याज तु किं तु प्राज्यं प्रचुरं वीर्य्यं न विजहौ, महिष्याः शिशूनां च मुखम् अनशनमलिनम् अनाहारम्लानम् अवलोक्यापि दृष्ट्वापि सुचेताः सुमनाः प्रसन्नः जन्मभूमिमुखमलिनिमहरणे जन्मभूमेर्यो मुखमलिनिमा मुखम्लानिः जवनाधिकारजनिताशुद्धिसहितपराधीनताकलङ्कस्तस्य हरणम् अपनयनं तस्मिन् प्राणपणस्य प्राणानां पणः अकृतकार्य्यतायां प्राणानामुत्सर्ग इति समयबन्धस्तस्य यद्वा प्राणा एव पणो मूल्यं तस्य विनेता शिक्षयिता प्राणानां पणेन बहुप्राणमूल्येन वा जन्मभूमिसुखमालिन्यहरणं कर्त्तव्यमिति शिक्षायाः प्रदाता इत्यर्थः । महिषीशिशुपुत्रादीनामन्नाभावजनितदुःखाद् जन्मभूमेः पराधीनतादुःखं तस्यात्यधिकमासीदिति वस्तुव्यज्यतेः । अनशनेत्यादौ विभावनाविशेषोक्त्योः सङ्करः ।

(७) मानं तत्कालप्रसिद्धं दिल्लीश्वरप्रदत्तसम्मानं तृणमिव तृणतुल्यं तुच्छं गणयन् इति परेणान्वेति, दानं दिल्लीश्वरकर्त्तृकं भूखण्डगजाश्वनिष्कादिदानं तृणमिव गणयन्नित्यनेन पूर्व्ववदन्वयः पुत्राश्च कलत्राणि दाराश्च समाहारद्वन्द्वः तत्

( ८ )

जयति तदरिसूदनप्रताप-प्रभववपुर्बलविक्रमप्रतापः।
जवनगहनदाहतीव्रतेजा ज्वलन इवामरसिंह एष राजा ॥

---

पुत्रकलत्रं तृणमिव गणयन् मानादौ प्रत्येकं समुदाये चाविशिष्टां तुच्छतां बोधयितुं तृणमिवेत्यस्य त्रिरुपन्यासः निजकुलगौरवरक्षणमात्रं केवलं स्वीयकुलगौरवं निजकुलयोः स्वीयजनपदगोत्रयोः यद् गौरवं जवनानधीनत्वप्रयुक्तम् व्यत्वं तस्य रक्षणं पालनं सारं श्रेष्ठम् अकरोत् य इति प्राक्तनेन कर्त्तृपदेनास्य सम्बन्धः, अधनः निर्धनः स्वयं धनसञ्चयरहितः, बहुधनः प्रचुरधनसञ्चयश्चासौ दिल्लीश्वरश्चेति तस्य बलानां सेनानां निर्जयः निश्चितजयः तेन दुर्ज्जयम् अन्यैरपराजेयं वीर्य्यं शौर्य्यं यस्य सः, मानवहृदये सततं चिरकालं व्याप्य सदा तिष्ठन् स भूपतिवर्य्यः राजश्रेष्ठः असाधारणविशेषणमहिम्ना उत्तरपद्यस्थशब्दाच्च महाराणाप्रतापसिंह इति गम्यते, जयति। तृणमिवेत्यत्रोत्प्रेक्षा।

(८) अरीन् शत्रून् सूदयति अरिसूदनश्चासौ प्रतापः प्रतापसिंहश्चेति अरिसूदनेति प्रतापविशेषणं तत्पुत्रस्य तद्गुणोत्तराधिकारद्योतनेन युद्धोत्साह-प्रवर्द्धनार्थम्। सः पूर्व्वगीतिद्वयवर्णितः अरिसूदनप्रतापः प्रभवः प्रभवत्यस्मादिति उत्पत्तिहेतुर्येषाम्, तदरिसूदनप्रतापात् प्रभव उत्पत्तिर्येषामिति वा ते वपुर्ब्बलविक्रम-प्रतापाः यस्य, वपुः शरीरं बलं शारीरसामर्थ्यं विक्रम आन्तरिकसामर्थ्यं प्रतापः प्रभावः—तेजः। अतएव जवनगहनदाहतीव्रतेजाः जवना गहनमरण्यमिव तद् दहति कर्म्मण्यण्प्रत्ययात् जवनगहनदाहं तद्दहनक्षममिति यावत् तीव्रम् अत्यर्थं तेजः प्रतापः ज्वाला च यस्य स ज्वलन इव अग्निरिव एषः राजा अमरसिंहो जयति। उपमालङ्कारः।

( ६ )

निर्व्याजोज्झितपित्र्यराज्यमनुजे बाले स्थितं पालयन्
योऽसौ भीष्म इवाभवद् व्रततरश्चण्डः प्रचण्डोऽरिषु ।
तद्वंशप्रभवा जयन्ति कृतिनो वीरा रणेऽग्रेसरा
मेवाराधिपते रवेररुणवद् ध्वान्तद्विषद्ध्वंसिनः ॥

( १० )

अपि कृतवैरं भ्रातरमाजिश्रान्तं रक्षितुकाम-
स्तदनुसरणपरघातकजवनौ योऽनयदन्तकधाम ।

---

(९) योऽसौ अरिषु प्रचण्डः शत्रुषु अत्युग्रः न तु तदितरत्र, चण्डः चण्ड-नामा राणालक्षसिंहज्येष्ठपुत्रः, बालेऽनुजे स्थितं बालेनानुजेन मुकुलेन प्राप्तं निर्व्याजोज्झितम् पितृवाचा अकपटं स्व-परित्यक्तं पित्र्यराज्यम् पालयन् रक्षामात्रं कुर्व्वन् भीष्म इव व्रततरः सत्यव्रतपालकोऽभवत्, भीष्मपक्षे व्रतं सत्यं ब्रह्मचर्य्यं च ( भीष्मकथा महाभारतप्रसिद्धा ) तद्वंशप्रभवाः तद्वंशधराः रवेः सूर्य्यस्य अरुणवत् अरुण इव रणे मेवाराधिपतेरग्रेसराः ध्वान्तद्विषद्ध्वंसिनः ध्वान्तानीव द्विषन्तः शत्रवः अथच ध्वान्तानि द्विषन्त इव तान् ध्वंसयितुं नाशयितुं शीलमेषां ते कृतिनः कर्म्मकुशला वीरा जयन्ति । उपमालङ्कारद्वयम् ।

(१०) निरुपधिः अकपटश्चासौ देशप्रेमा देशभक्तिश्चेति तेन निराकृतः परित्यक्तः निरुपधिर्देशप्रेमा यस्य सः अतएव निराकृत इति वा दिल्लीश्वरबहुमानः आकव्वरकृतसत्कारो येन तादृशो यः कृतवैरं कृतपूर्व्वविरोधम् अपि आजिश्रान्तं आजौ हल्दीघाट्युद्धे श्रान्तं श्रमकर्शितं भ्रातरं ज्येष्ठभ्रातरं प्रतापसिंहं रक्षितुकामः सन् तदनुसरणपरौ घातकजवनौ तस्याजिश्रान्तप्रतापसिंहस्य वधार्थं प्रतापसिंह-

निरुपधिदेशप्रेमनिराकृतदिल्लीश्वरबहुमानः
शक्तसिंह इव तद्भववीरप्रकरो जयति रिपुहानः ॥

( ११ )

सामन्ताः सकला जयन्ति कृतिनो वीरास्तथान्ये भटा
येषां पूर्व्वजशोणितामृतरसैर्म्मेवारभूर्ज्जीवति ।
येषामद्य महोग्रवीर्य्यविजिता प्रोच्चण्डदावानल-
ज्वालादग्धतृणावलीव विलयं यास्यत्यरीणां चमूः ॥

मनुसरन्तौ जवनौ अन्तकधाम शमनसदनम् अनयत् जघानेत्यर्थः स शक्तसिंह इव यत्तदोर्नित्यसम्बन्धाद् रिपुहानः तद्भववीरप्रकरः तदुत्पन्नवीरसमूहो जयति, रिपुहान इत्यत्र सभङ्गश्लेषः, अत्रोपमानभूतः शक्तसिंहः, उपमेयः तद्वंशधरवीरसमूहः। उपमानपक्षे 'रिपुहा नः' इत्यत्र पदद्वयं तदर्थश्च नः अस्माकं रिपून् हतवान् भूते हन इति क्विप्प्रत्ययात्। उपमेयपक्षे रिपुहान इत्येकपदम् रिपूणां हानं हानिः अवसादो येन स रिपुहननस्यातीतत्वाभावेऽपि योग्यतायाः सत्त्वात्। उपमा।

(११) मेवारभूः उदयपुरराज्यं येषां पूर्व्वपुरुषरुधिरसुधारसैः अद्यापि जीवति स्वाधीनतादिना प्राणवती तिष्ठति अरीणां जवनानां चमूः वाहिनी येषां महोग्रवीर्य्यविजिता महोग्रेण अतिदारुणेन वीर्य्येण शौर्य्येण विजिता पराजिता सती प्रोच्चण्डदावानलज्वालादग्धतृणावलीव प्रोच्चण्डा उद्रिक्ता या दावानलज्वालाः ताभिर्दग्धा भस्मीभावं नीता तृणावलीव तृणराशिरिव अद्य विलयं निरवशेषक्षयं यास्यति ते सकलाः सर्व्वे सामन्ताः तथा अन्ये कृतिनो वीरा भटाः योद्धारः जयन्ति। रूपकमुपमा च।

चतुर्थाङ्कस्य टीकेयं नाटकेऽमरमङ्गले ।
गले मालेव धीराणां समाप्ता रुचिदाऽऽहिता ॥

( नेपथ्ये कलकलानन्तरम् ) जयति जयति मेवारनाथः ।

राजा । ( सहर्षम् ) शालुम्ब्रापते ! दृश्यते किल सर्व्वतः ससैनिकानां सामन्तानां महोत्साहः, तद् एहि कुलरिपुनिधनाय सत्वरं प्रतिष्ठामहे ।

( इति निष्क्रान्ताः सर्व्वे । )

इत्यमरमङ्गलनामनाटके समरयात्रोद्योगाभिध-
श्चतुर्थोऽङ्कः समाप्तः ।





# पञ्चमोऽङ्कः

## विष्कम्भकः ।

ततः प्रविशति कञ्चुकी ।

कञ्चुकी—यष्टिर्जराचलितहस्तधृता स्खलन्ती
नेत्रं बलीविलुलितभ्रु विमूढदृष्टि ।
वाणी च मे कफहृतोद्गमना तथापि
रक्षाविधिः प्रभवतीति नृपप्रभावः ॥ (१)

अहो महाप्रभावो देवः ! यस्य तावदिदमतिभीषणं विशालरणस्थलमन्तःपुरमिव प्रमोदमुपपादयति । लतागहन-समाच्छन्नो बन्धुरशैलखण्डपरिरचितः प्रान्तभागश्चायमन्तः-

---

(१) जरसा जरया चलितः कम्पितो हस्तस्तेन धृता अतएव स्खलन्ती पतनोन्मुखी मे यष्टिः, बलीविलुलिता चर्म्मशैथिल्यलम्बिता भ्रूर्यत्र तत् विमूढा तत्त्वनिर्णयाक्षमा दृष्टिर्यस्य तादृशं मे नेत्रं चक्षुः, कफहृतोद्गमना कफेन श्लेष्मणा हृतं रुद्धम् उद्गमनम् उच्चैर्निःसरणं यस्याः सा च मे वाणी, अत्र चकारात् मे इत्यस्य पूर्व्वापरयोः सम्बन्धः, एतेन यष्ट्यादीनां स्वस्वव्यापारासामर्थ्यं सूचितम् । तथापि रक्षाविधिः मत्कतृकान्तःपुररक्षाव्यवस्था प्रभवति स्वव्यापाराय कल्पते इति अयं नृपस्य राज्ञ एव प्रभावः प्रतापः । यष्टिदृष्टिवाण्यो रक्षाविधिसहायाः, तासां दुर्व्वलत्वेऽपि रक्षाविधेः सबलत्वं नृपप्रभावादेवेति भावः । विभावनालङ्कारः । कञ्चुकिकृतरक्षाविधिप्रभावनृपप्रभावयोर्भेदेऽप्यभेदाध्यवसायादतिशयोक्तिश्च ।

पुरस्याक्रोड़ इव निरुद्वेगसञ्चाररमणीयो (१) यस्य स्थाननिरूपणकौशलमावेदयति। अपि च येन 'षट्कर्णो भिद्यते मन्त्रः' इति नीतिविदां वचनमपि विफलीकृतम्। एकस्य वा शतस्य वा यस्य यावत् परिज्ञेयमन्यत्रानाख्येयं च देवसंपृक्तं कर्म्मजातम्, तत्रैव तावत् प्रतिरुद्धमास्ते, नान्यत्र व्यक्तीभवति। समरसिंहशङ्कितहृदया देवी समरसिंहद्वितीयमरण्यचारिणं देवं धनुर्द्धरवेशेन यदनुससार यच्च दरीगहनावृतदेहा वीरानुसरणपरान् (२) जवनदस्यूनलक्ष्यशरसम्पातेन निजघान, तत्केवलं सुबला जानात्यहमेव जानामि। देवस्य वर्षद्वयव्यापि व्यसनाभिनयरहस्यं सामन्तैरप्यविदितवृत्तान्तमासीत्। यदद्य च हयारोहिप्रवीरवेशप्रतिच्छन्ना तथाविधसुबलासहिता देवी देवमनुससार, तन्मे वीरायाश्च केवलं परिज्ञातम्। जपहोमादिनियमस्था सुबलाद्वितीया देवी प्रतिषिद्धान्यसञ्चारमन्तःप्रतिरुद्धं पूजागृहमध्यास्ते इत्यन्तःपुरिकाणामपि निश्चयः। एवं विविधाकारा मन्त्रगुप्तिर्देवस्यैवानुभावं व्यनक्ति। अन्यथा जरसाभिभूतस्य कुतो ममैषा शक्तिः!

---

(१) आक्रीड़ः = उद्यानम्। अन्तःपुरस्याक्रीड़ः प्रमदवनम् स इव निरुद्वेगसञ्चाररमणीयः = निरुद्वेगः नास्ति उद्वेगो भयचिन्ता यत्र तादृशो यः सञ्चारः सञ्चरणं विहरणं तेन रमणीयः मनोहरः। लतागहनादिसमाच्छन्नतया उन्नतावनतशैलखण्डेन परिरक्षितः गुप्तः निराकृतशत्रुसमागमभयः अयं प्रान्तदौवारिकेन्द्रस्यैकदेशः।

(२) वीरायास्तन्नाम्न्या अङ्गनाया अनुसरणपरान्, पश्चाद्धावनरतान्।

यत:—

बुद्धिर्भोगो बलं सत्त्वं कान्तिः पुष्टिः स्मृतिर्धृतिः ।
जरसा जीर्य्यते सर्व्वमेका वाणी विवर्द्धते ॥

एवमनर्गलवदनेन प्रवृद्धवचनेनापि मया रहस्यं नाख्यायते । तत् पुनरपि ब्रवीमि महाप्रभावो देव इति । तथापि सर्व्वथा दुर्निवारो जरादोषः । यतः स्वयमवेच्चितपरबलसन्नाहेन देवेनावरोधरक्षाविशेषोपदेशार्थमानीतोऽहं (१) यथावदुपदिष्टोऽपि मानसजल्पनेन क्षणमतिवाहयामि । ( नेपथ्ये बृहन्नालिकाध्वनिमाकर्ण्य तदभिमुखमवलोक्य च ) हन्तानलवर्षी खल्वयं महान् सम्मर्द्दः (२), भवतु, परिहाय तावदिदं समरसमालोकनकौतूहलं देवादेशपालनाय स्वाधिकारभुवं (३) प्रतिष्ठे यावत् तत्रैव वीराप्रधानमन्तःपुरिकारहस्यरणशिक्षाक्षेत्र (४) मवलोकयिष्यामि ।

( इति निष्क्रान्तः । )

इति विष्कम्भकः ।

---

(१) संख्याभूयस्त्वेन नालिकास्त्रबलेन च जवना यद्यस्मान् पराजित्योदयपुरराजधानीं प्रविशेयुस्तदान्तःपुरगुप्तिव्यवस्था यथा कर्त्तव्या तदुपदेशप्रदानार्थं कञ्चुकी राज्ञा तत्रानीत इति भावः । (२) सम्मर्द्दः = युद्धम् । (३) स्वीयकार्य्यस्थानम् । (४) अन्तःपुरिकाणाम् अन्तःपुरस्थमहिलानामेकं समरशिक्षाक्षेत्रं अन्यैरपरिज्ञातमन्तःपुरप्रमदवनैकदेशे स्थापितं तत्र च वीराया आध्यक्ष्यं राजमहिष्या इहागमनेन जातमित्याशयः ।

ततः प्रविशति भग्नजानुर्भणसिंहः ।

भणसिंहः । (सखेदम्) हन्त मे व्रीड़ास्थानम्, यदहं वीरवरस्य शक्तसिंहस्य तनयः स्वेच्छया (१) दैवगत्या वा रणस्थलं परित्यज्यापसृतोऽस्मि । कथमेवं कलङ्कितमाननं वीरसमाजाय दर्शयिष्यामि । (नेपथ्ये बृहन्नालिकास्त्राणां गर्ज्जनध्वनिः) अहो साम्प्रतमपि तथैव गर्ज्जनं प्रतिपन्ननालिकास्त्राणाम्—

सिन्धोः कल्लोलकोलाहलबहुलचलद्वीचिवेलाभिघात-
ह्रादन्यक्कारि सेनाकलकलसमरातोद्यशब्दोपमर्दि ।
प्र[illegible]म्भोदनिर्य्यच्छतशतकुलिशोद्गर्ज्जनाक्षेपिवीर्य्यं
शश्वद् द्यावापृथिव्यौ स्थगयदिदमहो श्रूयते श्रोत्रभेदि ॥ (२)

---

(१) स्वेच्छयेति लोकप्रतीतिमाश्रित्य ।

(२) सिन्धोरित्यादि—। सिन्धोः समुद्रस्य कल्लोलकोलाहलाः कल्लोलानां महातरङ्गाणां ये कोलाहला दूरगाम्यव्यक्तध्वनयः कोलाहलतुल्यत्वात् कोलाहला इति तैर्बहुलाः प्रचुरा ये चलद्वीचिवेलाभिघातह्रादाः चलन्त्यो वीचयः महातरङ्गोत्थापिततरङ्गास्तैर्वेलायां तीरभूमौ येऽभिघाताः आघाताः तेषां ह्रादाः उच्चध्वनयस्तेषां न्यक्कारि नीचः कर्त्तुं शीलमस्य तदिति प्राग्वर्त्तिगद्यस्थस्य गर्ज्जनमित्यस्य विशेषणम्, सेनानां स्थलजलनवाहिनीनां ये कलकलाः अव्यक्तध्वनयः आतोद्यशब्दाः रणवाद्यध्वनयश्च तान् उपमर्द्दितुम् अभिभवितुं शीलमस्य इदमपि गर्ज्जनस्य विशेषणान्तरम्, प्रत्यग्राः नवीनाः येऽम्भोदाः मेघाः तेभ्यो निर्य्यन्ति निःसरन्ति शतशतानि बहूनि कुलिशानि अशनयस्तेषामुद्गर्ज्जनानि उच्चैः स्तनितानि आक्षेप्तुं भर्त्सितुं शीलमस्य एवंभूतं वीर्य्यं सामर्थ्यं यस्य तत् एतदपि गर्ज्जनविशेषणं द्यावापृथिव्यौ आकाशभूमी स्थगयत् आच्छादयत् श्रोत्रभेदि कर्णपटहविदारकम् इदम् अतिसन्निहितस्थानोद्भूतं गर्ज्जनमिति विशेष्यपदमुक्तम् । शश्वत् वारंवारं श्रूयते । अत्र व्यतिरेकोऽतिशयोक्तिश्चालङ्कारः । स्रग्धरावृत्तम् ।

कष्टं तद्दैवमश्रुतपूर्व्वेण भीमगर्ज्जनेन परित्रस्तो मे तुरङ्गः, स्वयं प्रबलवेगपराङ्मुखो मामपि विमुखीचकार पाषाणस्खलनपतितश्च मामपि पातयन् जानुभङ्गविकलीचकार। विशालवाहिनीदर्शनभीतञ्च मामकं सैन्यमिति। हा धिक्! चतुरङ्गक्रीड़ा (१) चर्य्यया विस्मृतं रणकौशलम्, हतं नः क्षात्रं तेजः, जितं भीत्या (२)। (नेपथ्ये कलकलः) कष्टं परावर्त्तन्ते योधाः। भग्नजानुरनुत्साहश्चास्मि। अहो किं करोमि! हन्त स्वबलप्रधानयोधानपि पराङ्मुखानवलोक्य स्वयमेव देवः समागच्छति, तदिदं लज्जामलीमसमाननं नास्मै प्रदर्शयामि। (इति तरुपार्श्वमाश्रितः)।

ततः प्रविशत्यश्वारूढ़ो राजा।

भो भो मेवारवीराः समरमिदमहो युष्मदाक्रीड़लीलं
याथ क्वेमं विहाय त्रिदशपुरपथं देशरक्षाव्रतं वा।
वीक्षध्वं जन्मभूमिर्ज्जवनपदभरैर्दु:सहैः पीड्यमाना
निःशब्दं रोदितीयं मलिनमुखरुची रक्षतैनां सुपुत्राः॥ (३)

---

(१) 'चोरं' खेल इति प्रसिद्धः क्रीड़ाविशेषः।

(२) जितं भावे क्तः, भीत्या इति कर्त्तृपदम्। भीतिरुत्साहशौर्य्यादिकमजयदित्यर्थः।

(३) भो भो मेवारवीराः युष्मदाक्रीड़लीलम् युष्माकम् उद्यानलीलासदृशलीलास्थानं समरमिदं युद्धमेतत्, अहो इति प्रशंसायां, युद्धस्योद्यानविहारतुल्यविहारस्थानत्वात्। अहो इत्यस्य परपदेन सम्बन्धाद् विस्मयबोधकत्वं वा।

अपि च शृणुत भोः सिंहशावकाः (१)—

गोमायवोऽमी रिपवः समस्ता
भीतिस्थलं नैव भवादृशानाम् ।
धृतिं समालम्ब्य सरोषदृष्ट्या
वीक्षध्वमेते विलयं प्रयान्तु ॥ (२)

(नेपथ्ये जयध्वनिः) हन्त! प्रत्यावर्त्तन्ते पुनः सर्व्वतो वीराः, निरुद्धः पुनर्ज्जवनवाहिनीवेगः। (निरूप्य सहर्षम्) उभयतो हन्यते जवनवाहिनी। साधु जवनसेनापते! (३) साधु

---

इमं त्रिदशपुरपथं युद्धरूपं स्वर्गस्य पन्थानं त्यक्त्वा विहाय देशरक्षाव्रतं देशरक्षाया नियमं विहाय वा क्व याथ कुत्र गच्छथ। त्रिदशपुरपथशब्दस्य पुंलिङ्गतया इममिति पुंस्त्वनिर्देशः। इयं जन्मभूमिः दुःसहैः असहैः जवनपदभरैः जवनानां चरणभारैः पीड्यमाना दूयमाना मलिनमुखरुचिः म्लानमुखकान्तिः सती निःशब्दं रोदिति नीरवं क्रन्दते,—वीक्षध्वं पश्यत, कर्म्मकर्त्रोः सन्देहे परत्वात् कर्त्तैवेति वीक्षध्वमित्यस्य कर्म्मपदं द्वितीयाविभक्तियुक्तं नोपलभ्यते। हे सुपुत्राः सत्पुत्रा एनां रक्षत, जवनान् विजित्य इमां जन्मभूमिं तेभ्यो रक्षत त्रायध्वम्। अत्र न प्रतीयमानोत्प्रेक्षा, किन्त्वतिशयोक्तिः, जन्मभूमिभक्तस्य राज्ञस्तथाध्यवसायात्, उत्प्रेक्षायाश्च सम्भावनारूपत्वात्।

(१) सिंह इति तद्देशीयक्षत्रियाणां कौलिकोपाधिः, शावका इति पूर्व्वजापेक्षया न्यूनबलत्वसूचनाय। अथच मृगेन्द्रशिशवः।

(२) अमी समस्ताः सर्व्वे रिपवः गोमायवः शृगालाः। अतः भवादृशानां सिंहवंश्यानां नैव भीतिस्थलं भयस्थानम्। न हि सिंहशावकाः शृगालेभ्यो बिभ्यति। परिणामकाव्यलिङ्गालङ्कारौ। सुगममन्यत्।

(३) सेनापतेर्नाम खानूखानान् इत्यैतिहासिकाः।

यदेतत्त्वया परिचालितं बलं पुरतः पश्चाच्च निरन्तरमभिताड्यमानमपि न साहसं मुञ्चति न वा कर्त्तव्यात् परिभ्रश्यति। अहो द्विधाविभक्तं किल सर्वतः सैन्यम्, तत्रैकं पुरोमुखमन्यच्च पश्चान्मुखमिति कृतव्यूहं महता विक्रमेण संग्रामयति। साधु शत्रो साधु! स्पृहणीयविक्रमोऽसि। (दूरवीक्षणयन्त्रेण विलोक्य) हा धिक्! यन्त्रयोगेण दृश्यते पश्चाद्भग्नप्राया मे भिल्लसेना, कातरदृष्टिर्मामेवानुसन्धत्ते पर्य्यवस्थितमिदानीं राजन्यबलं चण्डकुलादिसामन्तैरधिष्ठितं वैरिभिरुत्साहेन युध्यते, तदिदानीं पश्चादेव गच्छामि।

हंहो विक्राम तावज्जवनबलतमो भिल्लसेनादृगन्ते
कामं चैधस्व तावद्विकटगजघटाम्भोदसम्भेदभीमम्।
यावद्देवप्रतापप्रतिनिधिरमलश्रीरयं खड्गराजो
मार्त्तण्डज्योतिरुग्रो न खलु वितनुते तत्र तेजःप्रकाशम्॥ (१)

(इति निष्क्रान्तः।)

---

(१) हंहो इत्यादि—। हंहो सम्बोधने, जवनबलतमः! जवनसेनारूपान्धकार! भिल्लसेनादृगन्ते भिल्लसेनायाः भिल्लवाहिन्या दृगन्ते दृशः रणकौशलाभिज्ञताया अन्ते समीपे तावद् विक्राम स्वशक्तिं प्रकाशय, विकटगजघटाम्भोदसम्भेदभीमम् = विकटा विशाला बहुस्थानव्यापिनी गजघटा हस्तिश्रेणी, विकटगजघटैव अम्भोदा मेघाः तैः सम्भेदः मेलनं तेन भीमं भीषणम्, कामं यथेष्टं तावद् एधस्व च वृद्धिं च प्राप्नुहि, देवप्रतापप्रतिनिधिः देवश्चासौ प्रतापश्चेति देवो राजा देवभावप्राप्तश्च प्रतापः प्रतापसिंहः तस्य प्रतिनिधिः, तत्तुल्यकर्म्मा अमलश्रीः निर्म्मलकान्तिः अत्र मार्त्तण्डज्योतिरुग्रः मार्त्तण्डस्य सूर्य्यस्य ज्योतिषा प्रति

भग । (सहर्षम्) अहो द्वितीयः खलु महाराज-प्रतापसिंहो देवः तथा हि—

तदेव रणकौशलं स च पराक्रमो दुःसह-
स्तदेव गतिलाघवं प्रहरणेषु सैव स्थितिः ।
तदेव गुरुसाहसं परगुणे स एवादरो
धृतिर्विपदि सैव यच्चिरमहो सनाथा वयम् ॥ (१)

तदिदानीमपि (२) क्षणमाश्वस्य पुनः समरभुवमवतरामि ।

---

फलितकिरणैरुग्रः तिग्मदर्शनः अथच सूर्य्यतेजोवत् प्रखरः अयं खड्गराजः तत्र (भिल्लसेनादृगन्ते) यावत् तेजःप्रकाशम् स्वप्रभावप्रकाशम् अथच आलोक-प्रकाशं न वितनुते ।

अन्धकारः खलु स्वावरणशक्त्या जनानां दृष्टिं प्रतिहन्ति मेघपटल-संमिश्रणे तस्यावरणशक्तिर्वर्द्धते चेति सत्यम्, किन्तु सूर्य्यालोकसम्पाते विनश्यति । तथा जवनबलमधुना भिल्लसेनानां रणबुद्धिं ह्रासयत् गजघटासम्मेलनेन प्रबली-भवदपि प्रतापसिंहदेवधृतखड्गस्य तेजसा क्षिप्रमेव निर्मूलं भविष्यति । स्वस्याविकत्थनत्वमनेन दर्शितम्, एतत्खड्गसहायः स्वयमहं योद्धुं गच्छामीति भावः । अत्रालङ्कारो रूपकं पितृखड्गतेजःप्रकाशकथनभङ्ग्या स्वस्य युद्धमभिहित-मिति पर्य्यायोक्तं च ।

(१) तदेवेत्यादि—। प्रतापसिंहदेवस्य यद् रणकौशलमासीत्, तदेव रणकौशलमित्यर्थः, निदर्शनालङ्कारः । अन्यदीयधर्म्मसम्बन्धस्यान्यत्राभावेन सादृश्ये पर्य्यवसानात् । स च पराक्रम इत्यादावप्येवम् । स्थितिः = मर्य्यादा । अहो इति प्रशंसायाम्, चिरं व्याप्य वयं सनाथाः सरक्षका भवामः तरुणस्य राज्ञो दीर्घजीवनाशंसया चिरमिति । कार्य्येण कारणसमर्थनादर्थान्तरन्यासः ।

(२) इदानीमपि = जानुभङ्गदशायामपि ।

तादृशं देववचनमाकर्ण्य मन्ये मृतोऽपि मेवारजातः क्षत्रियो न खलु निरुद्यमः स्थातुमुत्सहते। किं पुनर्मादृशः क्षुद्राघातमात्रपरिक्लिष्टो विलक्षितो (१) वा।

(नेपथ्ये कलकलः, विलोक्य) हन्त (२), दूरं गते देवे पुनरवसीदति क्षत्रियसैन्यम्! अहो शालुम्ब्रापतिरपि परापतन्ति स्वकुलसैन्यानि विलोक्य व्याकुलीभूतः कमपि सेनाभागं निभृतं स्थापयन्नित एवाभिवर्त्तते।

ततः प्रविशति शालुम्ब्रापतिः।

शालुम्ब्रा। हा धिक्! नालिकास्त्रविच्छि... भग्ना मे सेना न शक्यते पर्य्यवस्थापयितुम्, इतस्ततः सा परापतति, एकांशेनैव, कथमपि रक्षिता। यथा विजयिनो जवनसेनोदयपुरमभियान्ती निरुध्येतेति तदनुकूलं स्थानमवलोकयामि (दृष्ट्वा) इदमेव युक्तं स्थानम् अहो अयमत्रैव भग्नजानुभणसिंहः। भणसिंह! अपि ध्रियसे!

भण। (मुखमवनमय्य) त्रपापहृतप्राणः कथं ब्रवीमि ध्रिय इति।

शालुम्ब्रा। (निश्वस्य) सत्यमेतत्। किं तु। यन्महाराजस्यानुमतं तदानीमेव चितोराक्रमणं तत् प्रतिषेधयतामस्माकमयं परिणामः। दीर्घशान्तिसम्भोगजनितालस्यक्रीड़ाविलासमूढ़ानां सहसा महती जवनभीतिरद्य क्षत्रियाणामवसाद-

---

(१) विलक्षितः = लज्जितः।

(२) हन्त खेदे।

यति नैसर्गिकं तेजः। भणसिंह! जवनैराक्रान्ता वयमिति भियैव ग्रस्तशक्तयो विपद्यन्ते भूयांसः।

भण। केचिदिति वक्तव्यम्।

शालुम्ब्रा। अलमुत्तरेण। अद्य स्मर देवस्य भेदच्छेदपरेति (१) देशस्य मङ्गलमय इति च (२) वचनम्। हा धिक्, कथं न तदानीमाक्रान्तं चितोरनगरम्, कथं न प्रतिपालितो देवादेशः!

भण[illegible] शालुम्ब्रापते! तदानीमीदृगेव फलमभविष्यत्।

शालुम्ब्रा। न हि, न हि; आक्रामतामाक्रमणोत्साह एव द्विगुणं तेजो विदधाति। तदानीमाक्रमणोत्साहसञ्चारश्चास्मदायत्त आसीत्। हा हताः स्मः; अद्य लब्धं राजनिदेशातिक्रमफलम्। भग्नो दर्पः। हा धिक्! किमिदानीं जवनैर्विजिता भविष्यामः। (नेपथ्ये कलकलः, विलोक्य) कष्टम्! परापतन्ति (३) सर्व्वतः सैन्यानि! (नेपथ्यमभिलक्ष्योच्चैः) हन्त भो योधाः!

---

(१) भेदच्छेदपरा चिरादसिलतेत्यादि (११२ पृ०) पद्यम्।

(२) देशस्येत्यारभ्य (११३ पृ०) नायं मङ्गलमयः समय इत्यन्तम् (११४ पृ०)। तत्र व्याख्यातमेतत् पद्यद्वयम्।

(३) परापतन्ति = पराङ्मुखानि भवन्ति।

स्मरत भवतां धर्म्मं कीर्त्तिं तथैव कुलस्थितिं (१)
भजत परमोत्साहं वैरिक्षयाय दृढ़व्रताः ।
भवत समरे हृष्टा वीरा भयं त्यजत, द्रुतं
कुरुत जननीचिन्ता (२) नाशं महाकुलनन्दनाः ।। (३)

आः तथापि पलायध्वे । ( आकाशे ) किं ब्रूथ मुष्टिमेया वयम् असंख्या जवना इति ? ततः किम् ? शृणुत भोः !

एकः सूर्य्यो ध्वान्तराशिं निहन्ति
व्याघ्रश्चैको हन्ति मेषान् सहस्रम् ।
विद्वानेको मूर्खलक्षस्य जेता
हन्ता वाप्पावंश्य एकोऽरिसङ्घम् ।। (४)

तथापि न निवर्त्तध्वे हंहो—

---

(१) कुलस्थितिम् = कुलमर्य्यादाम् ।

(२) जननीचिन्ता = मातॄणां जवनस्पर्शभयोद्वेगः । यद्वा जनन्या जन्मभूमेर्यो पराधीनतोद्वेगः । अत्रार्थे जन्मभूमेश्चेतनत्वारोपादतिशयोक्तिः ।

(३) महाकुलनन्दनाः = महावंशप्रसूताः इति सम्बोधनम् । दृढ़व्रताः वीरा महाकुलनन्दना इत्येषां विशेषणानां साभिप्रायत्वात् परिकरालङ्कारः । धर्म्मादिस्मरणस्य उत्साहहेतुवाक्यार्थत्वात् काव्यलिङ्गञ्च । दिग्दर्शनमेतत् काव्यलिङ्गान्तरस्य । शिष्टं सुगमम् ।

(४) हन्ता = हनिष्यति । अरिसङ्घम् अरातिसमूहम् । प्रथमद्वितीयपादयोः प्रतिवस्तूपमा तृतीयचरणे दृष्टान्तः ।

राजन्यानमरीकरोति समरे मृत्युः सुखालिङ्गिता
तां त्यक्त्वा परमप्रियामनुगतां क्व त्रस्नवो गच्छथ ।
सैषा युष्मदुपेक्षिता तु गणिकारूपेण लब्ध्वा क्षणं
धृत्वा वो विवशांश्चिराय महति क्लेशे विनिक्षेप्स्यति ॥ (१)

अरे रे कापुरुषाः—

युष्माकं जननी स्वसा स्थितिमती जाया सुता वा स्नुषा
सावित्रीव गृहे गृहे विजयते सौभाग्यसम्पादनी ।

---



(१) राजन्यानित्यादि—। समरे सुखालिङ्गिता सुखेन आनन्देन आलिङ्गिता आश्लिष्टा प्रियेवादरेण प्रीत्या च स्वात्मनि निवेशिता अथच सुखं सुखजनकं दुःखाजनकमिति यावत् आलिङ्गितमालिङ्गनं यस्याः अपापायाः स्वपत्न्या एवालिङ्गनं दुःखाजनकं भवति अन्यासामालिङ्गनं पापजनकतया नरकदुःखजनकम् । मृत्युः मरणं राजन्यान् अमरीकरोति अनमरान् मरणधर्म्मिणोऽमरान् करोति स्वर्गं प्रापयति । अतः अमरत्वहेतुतया परमप्रियां प्रेयसीम् अनुगताम् अनुवर्त्तिनीं मरणस्य जन्मिधर्म्मत्वात् पत्नीपक्षे वशवर्त्तित्वात्, तां त्यक्त्वा भो त्रस्नवः ! भीरवः ! क्व गच्छथ याथ । तु किन्तु सा एषा मृत्युः युष्मदुपेक्षिता युष्माभिरनादृता सती गणिकारूपेण गणयित्रीरूपविशिष्टा आयुर्गणननिपुणा पत्नीपक्षे वेश्यारूपेण क्षणं लब्ध्वा समयं प्राप्य विवशान् प्रतीकाराशक्तान् वो युष्मान् धृत्वा गृहीत्वा महति क्लेशे नरके अथच दुःखसमुद्रे चिराय चिरकालं व्याप्य विनिक्षेप्स्यति पातयिष्यति । इदानीं पलायनेऽपि मृत्युः आयुर्गणनयेव समयं ज्ञात्वा युष्मान् आक्रम्य नरकं प्रापयिष्यति रणात् पलायनेन क्षात्त्रधर्म्मभ्रंशादिति भावः । मृत्यौ पत्नीत्वव्यवहारसमारोपात् समासोक्तिः । पत्न्या गणिकाभावे इह महादुःखात् परत्र च पत्युर्नरकात् उत्तरार्द्धसङ्गतिः । 'पर्य्यङ्कशायिनी नारी विधवा पातयेत् पतिम्', इत्यादिस्मृतेः । मृत्युपक्षे गणिकारूपेणेत्युपलक्षणे तृतीया प्रतीयमानोत्प्रेक्षा च ।

ताः सर्व्वाः शरणार्थिनीरशरणाः कष्टं हरिष्यन्ति भो
दुर्व्वारा जवनाः, रणं यदि भिया युष्माभिरुत्सृज्यते ॥ (१)

हा धिक्! न कोऽपि स्थैर्य्यमालम्बते। तत्किमयोग्य-सन्तानजननी जवनदासी भविष्यति नो मेवारभूमिः?

(नेपथ्ये) शृणुत शृणुत पुत्रा मातरं मामवेत्य
त्यजत समरभीतिं यात वैरिक्षयाय।
सफलविजययात्रा मण्डिताः पुण्यकीर्त्या
वरमुचितमभीष्टं प्राप्स्यथ प्रीतिपूर्णाः ॥ (२)

उभौ। (सविस्मयम्) किमेतत् (इति शब्दमनुसृत्य परिक्रामतः)।

ततः प्रविशति न्यग्रोधशाखाश्रिता देवी।

देवी। (शृणुत शृणुत पुत्रा इत्यादि पुनः पठति)।

---

(१) युष्माकमित्यादि—। जननीत्यादौ प्रत्येकमन्वयाद् विजयत इत्युत्तरत्रैकवचनं चैत्रो मैत्रो वा गच्छतीतिवत्। सौभाग्यसम्पादनीति युष्माकं यत् सौभाग्यं तस्य सम्पत्तौ जनन्यादीनां हेतुत्वात्। 'स्त्रियः श्रियश्च गेहेषु न विशेषोऽस्ति कश्चन' इत्यादिस्मृतेः। सावित्री यथा पत्युः पितुः श्वशुरस्य स्वपुत्रादीनां च सौभाग्यसम्पादनी बभूव तथैव युष्माकं जननी वा स्वसा वेत्यादिः विजयते प्रशस्ता भवति। अर्थः सुगमः, उपमालङ्कारः। दुर्व्वारत्वस्य तद्वरणहेतुत्वात् काव्यलिङ्गञ्च।

(२) शृणुतेत्यादि—। श्लोकः सुगमः। अत्र समरभीतित्यागस्य वैरिक्षयार्थयात्रां प्रति हेतुत्वात् काव्यलिङ्गम्, श्रवणाद्यनेकक्रियासु कर्त्तृकारकैक्याद्दीपकञ्च।

( नेपथ्ये ) नूनमेषा मेवारभूदेवता स्वयमाविर्भूय नो रिपुक्षयाय प्रवर्त्तयति। कुतोऽन्यथास्मिन् वीरहृदयप्रकम्पने रणस्थले ईदृशस्य सीमन्तिनीरूपराशेः सम्भवः। विजयतां जननी। एते वयं वैरिक्षयाय प्रस्थिता एव।

शालुम्ब्रा। ( सहर्षविस्मयम् ) भणसिंह! पश्य पश्य नूनमेषा सकलशिशोदकुलसेविता मेवारभुवो दैवी मूर्त्ति-र्भगवती गौरी हीयमानांस्तनयान् परित्रातुमाविर्भूता न्यग्रोधतरुविटपमधिष्ठिता। अद्य सफलं नयनम्, सफलं जीवनम्। भणसिंह! प्रियं ते कथयामि ध्रुवोऽस्माकं जयो भविष्यति।

भण। ( विलोक्य ) अहो देवताप्रसादमहिमा।

कर्षन् सैन्यमशेषमेष निहतप्रत्यूहजालः क्षणाद्
भूयः प्राणविपत्तिमप्यगणयन्नग्रेसरः साहसी।
पादातप्रतिरुद्धनालिकमुखान् भल्लेन भिन्दन् रिपून्
कर्णः कर्णसमो बलेन बत नस्तातानुजो धावति ॥ (१)

---

(१) कर्षन्नित्यादि—। अशेषं समस्तं सैन्यं स्ववाहिनीं कर्षन् सञ्चालयन् क्षणेन निरस्तविघ्नराशिः. भूयः प्राणविपत्तिं बाहुल्येन जीवितात्ययसम्भावना-मगणयन् उपेक्षमाणः सन्नग्रेसरः पुरोभागं गच्छन् साहसी प्रशस्तसाहसयुक्तः बलेन कर्णतुल्यः नोऽस्माकं तातानुजः पितृव्यः प्रतापसिंहशक्तसिंहादीनां कनीयान् भ्राता कर्णः कर्णसिंहः पदातीनां समूहः पादातं तेन प्रतिरुद्धानि कीलनिखननेन पूरितरन्ध्र-तया अयःपिण्डक्षेपाशक्तीकृतानि नालिकमुखानि नालिकेषु मुखानि प्रधानानि बृहन्ना-लिकास्त्राणि येषां तान् रिपून्, यद्वा प्रतिरुद्धानि शङ्कुभिर्बद्धानि नालिकास्त्रमुखानि नालिकास्त्राणां 'कामान' इति ख्यातानां बृहन्नालिकास्त्राणां मुखानि ज्वलदयोगोलक-

शालुम्ब्रा । ( सहर्षम् ) हन्त! हन्त! यदर्थमहमिहागतोऽस्मि—न तस्यावसरो भविष्यतीति मन्ये (१), यतः—

अमन्दतरमन्दराचलविवर्त्तनावर्त्तित-
प्रचण्डनिनदोच्चलज्जलधितुल्यरूपः क्षणात् ।
अयं जवनवाहिनीसमुदयो भ्रमत्याकुलं
शिशोदकुलताड़ितः प्रतिनिवृत्तिमार्गाशया ॥ (२)

अहो,—पश्चादपि प्रतिहतः किल भिल्लसैन्यै-
रेष प्रसर्पति पुनः पुरतो जवेन ।
घोरो रणो भवति, हन्त पतन्ति बाणाः
पार्श्वद्वयादपि गिरेर्ज्जवनक्षयाय ॥ (३)

---

निःसरणमार्गा येषां तान् रिपून् भल्लेन भल्लास्त्रेण भिन्दन् विदारयन् जवेन धावति, वेगस्याधिक्यद्योतनाय जवेनेति पदमुपात्तम् । बत सन्तोषे ।

(१) जवनसैन्यानामुदयपुरराजधान्यभियानासम्भवेन तत्प्रतिरोधार्थप्रयत्नो निष्प्रयोजन इति भावः । हन्तद्वयम् अतिहर्षसूचकम् ।

(२) अमन्देत्यादि—। शिशोदकुलताड़ितः शिशोदकुलैरस्मद्वंशीयपुरुषैस्ताड़ितः पीड़ितः अयं प्रत्यक्षं दृश्यमानः जवनवाहिनीसमुदयः श्रेणीभेदभिन्नानां जवनवाहिनीनां समुदयः समूहः क्षणात् क्षणकालमध्ये अमन्दतरम् अत्यधिकं यन्मन्दराचलविवर्त्तनं मन्दराचलस्य सञ्चालनं तेन आवर्त्ततः जलभ्रमिभिर्योजितः, यः प्रचण्डनिनदोच्चलज्जलधिः प्रचण्डः भीषणो निनदो यस्य तादृशः उच्चलज्जलधिः उद्गच्छन् जलधिः,—उत्क्षिप्ततरङ्गः समुद्रः तेन तुल्यं रूपं यस्य तत्सदृशः सन् प्रतिनिवृत्तिमार्गाशया पश्चाद्गमनपथलिप्सया आकुलं विशृङ्खलं यथा स्यात् तथा भ्रमति अनवस्थितं चलति । छेकानुप्रासवृत्त्यनुप्रासावुपमालङ्कारश्च ।

(३) पश्चादित्यादि—। पश्चादपि प्रतिनिवृत्तिपथे च भिल्लसैन्यैः भिल्लजातीय-

भग । इतः पश्यतु शालुम्ब्रापते ! अलातचक्रवत् (१) सर्व्वतः परिवर्त्तमानं महाराजम्—

कर्णं रक्षति सम्मुखे, गिरिशिरःसंस्थान् धनुर्द्धारिणः
कर्त्तव्यं दिशति, प्रियं कथयति श्रान्तान् रणे सैनिकान् ।
पश्चाद्भिल्लबलं करोति सबलं वीर्य्यं प्रशंसन्मुहुः,
प्रोत्साहं जनयन्नसावुदयते सेनामुखे सर्व्वतः ॥ (२)

---

सेनाभिः [illegible]ः प्रतिरुद्धः किल सम्भावनायां अन्यथा तत्स्थानात् प्रत्यावर्त्तनं नाभविष्यत्, एषः जवनवाहिनीसमुदयः जवेन वेगेन पुनः पुरतः अग्रे प्रसर्पति प्रसरति,—घोरः भीषणः रणः युद्धं भवति सम्मुखभागस्थक्षत्रसैन्यैरित्यर्थाद् गम्यते, हन्त हर्षे वाणाः शराः जवनक्षयाय जवनानां नाशाय गिरेः पर्व्वतस्य पार्श्वद्वयादपि पार्श्वद्वयाच्च पतन्ति निक्षिप्ता भवन्ति । पुरः प्रसर्पणरूपेण कार्य्येण पश्चात् प्रतिघातस्य समर्थनात्, पुरः प्रसर्पणस्य रणहेतुत्वाच्च अर्थान्तरन्यासकाव्य-लिङ्गालङ्कारौ ।

(१) अलातम् = अङ्गारः । अनास्कन्दनीयत्वात् अङ्गारतुल्यत्वम्, क्षिप्रत्वात् चक्रतुल्यत्वमिति भावः ।

(२) कर्णमित्यादि—। असौ महाराजः सम्मुखे सम्मुखभागस्थं कर्णं स्वीयपितृव्यं कर्णसिंहं रक्षति गोपायति, गिरिशिरःसंस्थान् गिरेरुच्चप्रदेशस्थान् धनुर्द्धारिणः धानुष्कान् कर्त्तव्यमनन्तरकरणीयं कर्म्म दिशति अनुशास्ति, रणे श्रान्तान् सैनिकान् भटान् प्रियं प्रीतिकरवचनं कथयति ब्रवीति, प्रोत्साहं जनयन् जनयितुमित्यर्थः, मुहुर्व्वारंवारं वीर्य्यं प्रशंसन् शौर्य्यस्य प्रशस्तिवादं कुर्व्वन् पश्चात् पश्चाद्भागस्थं भिल्लबलं भिल्लजातीयवाहिनीं सबलं कुर्व्वन् नवोद्यमभृतं कुर्व्वन् सर्व्वतः सेनामुखे वाहिन्याः सर्व्वेष्वंशेषु भिल्लक्षत्रियनिर्व्विशेषेणेत्यर्थः उदयते उदयं प्राप्नोति । अनेकासु क्रियास्वेकस्य महाराजस्य कर्त्तृकारकत्वाद्दीपकालङ्कारः ।

शालुम्ब्रा । भगसिंह ! प्रीतिविस्मयविस्फारितेन चक्षुषा पश्यामि—

अहो दृश्यं राज्ञो रणशिरसि नैपुण्यमतुलं
पुरः पश्चाच्चान्ते य इह समदृष्टिर्विचरति ।
विजित्यास्त्रग्रामं परपरिगृहीतं निजबलै-
र्निरुन्धन् शत्रूणामपगमपथं यो विजयते ॥ (१)

भग । शालुम्ब्रापते ! देवव्यवस्थापितभिल्लसैन्येन विजीयमाना स्वल्पावशेषजवनवाहिनी भूयः पुरः [illegible]लिता; मन्ये तद्गतिदर्शनाय देवोऽपि गिरिशिरोमार्गेण इत एवाभिवर्त्तते । तदहमिदानीं समरभुवमवतरन् मातृनिदेशमनुपालयामि ।

---

(१) अहो विस्मये, रणशिरसि समराग्रभूमौ राज्ञः अमरसिंहदेवस्य अतुलम् अनुपमं दृश्यं द्रष्टव्यं नैपुण्यं निपुणताम् पश्यामीति गद्यस्थक्रिययान्वेति नैपुण्यं वर्णयति पुर इति, अथवा यदहं पश्यामि—तत्सर्व्वैर्दृश्यमित्याशयेनाह—अहो इति । नैपुण्यमिति प्रथमान्तम् । दृश्यं द्रष्टव्यम्, सर्व्वेषामेवेति शेषः । इह युद्धक्षेत्रे पुरः सम्मुखभागे पश्चात् पृष्ठभागे, अन्ते समीपे पार्श्वद्वये च समदृष्टिः समा निर्व्विशेषा दृष्टिर्यस्य तादृशः सन् यो ( राजा ) विचरति सञ्चरति, परपरिगृहीतं परैः शत्रुभिः परिगृहीतम् उपात्तम् अस्त्रग्रामं नालिकाद्यस्त्रसमूहं विजित्य स्वायत्तं कृत्वा निजबलैः स्वसैन्यैः शत्रूणाम् अपगमपथं पलायनपथं निरुन्धन् रुद्धं कुर्व्वन् विजयते जयलक्ष्मीवान् भवति—। यो विचरति यो विजयते तस्य राज्ञो रणशिरसि अतुलं नैपुण्यं दृश्यमित्यन्वयप्रकारः । नैपुण्यमिति सामान्यं परपादत्रयोक्तविशेषैः समर्थितमित्यर्थान्तरन्यासः ।

शालुम्ब्रा । अस्तु ममाप्ययं प्रकारः (१) । ( इत्युभौ निष्क्रान्तौ ) ।

देवी । ( स्वगतम् ) भअवदि मेआरभूदेवदे ! णिच्चिदो जओ भअवदीए तणआणं तहवि दढं भीदह्मि । ता मरिसेदु अवराहं महादेवी । ( विलोक्य ) अथ जधा जोधाणं इध दिट्ठी तधा आणामि ण मे अअं ओदरणसमओ ता एरिसी उज्जेव क्खणं चिट्ठामि त्ति ।

[ भगवति मेवारभूदेवते ! निश्चितो जयो भगवत्यास्तनयानां तथापि दृढं भीतास्मि । तत् मृष्यतु अपराधं (२) महादेवी । अथ यथा योधानामिह दृष्टिस्तथा जानामि न मे अयम् अवतरण-समयः तदीदृश्येव क्षणं तिष्ठामीति (३) । ]

ततः प्रविशति सैनिकवेशया सुवलयानुगम्यमानो राजा ।

राजा । पर्य्याप्ता मेवारयोद्धारः अलमिदानीं मे कात-रेष्वस्त्रधारणेन, ( दृष्ट्वा )—

आसीत् सैन्यं रिपूणां करितुरगभटव्रातपादातपूर्णं
शस्त्रास्त्रग्रामभीमं शतगुणमधिकं मामकेभ्यो बलेभ्यः ।

---

(१) जवनानां राजधान्यभिमुखगमनस्यैकान्तासम्भवात् तत्प्रतिरोधयत्न-स्यानर्थक्येनावशिष्टजवनसैन्यक्षयाय मातृनिदेशपालनं मयापि कर्त्तव्य-मिति भावः ।

(२) मेवाराधिदेवताभ्रमजननाय प्रयत्न एवात्तापराधः ।

(३) न्यग्रोधारूढस्त्रीमूर्त्तेः परिचयप्रदानायेयं स्वगतोक्तिः ।

तन्निष्पिष्टावशिष्टं भ्रमति तृणमिवावर्त्तनीतं क्षणेऽस्मिन्
हन्त क्षात्रप्रभावस्त्रिभुवनविदितो नाधुनाप्यस्तमेति ॥ (१)

---

(१) आसीदित्यादि—। करितुरगभटव्रातपादातपूर्णं शस्त्रास्त्रग्रामभीमं मामकेभ्यो बलेभ्योऽधिकं शतगुणं रिपूणां सैन्यमासीत् अस्मिन् क्षणे निष्पिष्टावशिष्टं तत् आवर्त्तनीतं तृणमिव भ्रमति, हन्त त्रिभुवनविदितः क्षात्रप्रभावः अधुनापि अस्तं नैतीत्यन्वयः।

करिणां तुरगाणां च ये भटव्राता योद्धृसमूहाः गजारोहा[illegible]श्वादिनश्च पादातं पदातीनां समूहश्च तैः पूर्णं शस्त्राणि तरवारिप्रभृतीनि अस्[illegible] नालिकादीनि तेषां ग्रामः समूहः तेन भीमं भीषणं मामकेभ्यः मत्सम्बन्धिभ्यः बलेभ्यः सैन्येभ्योऽधिकं प्रकृष्टं शतगुणं शतं गुणाः गुणनानि संख्यापूरणानि यस्य शतगुणमिति प्रकर्षहेतुरुक्तः, संख्यया शतगुणाधिकमिति यावत्, तेन शौर्य्यादिना प्रकर्षो निराकृतः, आसीत् अभवत्। निष्पिष्टात् मर्द्दितात् अवशिष्टं शेषरूपेण स्थितं तत्सैन्यं वाहिनी आवर्त्तनीतं जलभ्रमेणाकृष्टं तृणमिव भ्रमति घूर्णितं भवति, आवर्त्तनीतं तृणमिवेति भ्रमणस्य पराधीनत्वबोधनाय अस्मद्बलाकृष्टमेव एकस्मात् स्थानात् अन्यस्थानं गच्छति न तु स्वातन्त्र्येण। तृणमिवेति लुप्तविभक्तिकमव्ययं भ्रमणक्रियाविशेषणं तेनावर्त्तनीततृणसदृशं यथा स्यात्तथा भ्रमतीत्यर्थः, भ्रमणे तादृशतृणसादृश्यं स्वाश्रयभ्रमणवत्त्वसम्बन्धेन तृणवृत्तिधर्म्मविशेषमादाय बोध्यम्। अत्रोपमा न तूत्प्रेक्षा। हन्त हर्षे, त्रिभुवनविदितः त्रैलोक्यप्रसिद्धः क्षात्रप्रभावः क्षत्रियाणां तेजः अधुनापि जवनानां प्राबल्यकालेऽपि अस्तं न एति प्राप्नोति, न लुप्यते मेघान्तरितसूर्य्यस्येव क्वचिद्देशे तिरोधानेऽपि सर्व्वत्रादर्शनं न भवति इति भावः। अर्थान्तरन्यासः। आवर्त्तनीतं तृणमिवेत्यत्रोपमा न तूत्प्रेक्षा। यद्वा परतन्त्रभ्रमणेन साधर्म्म्येणायमुपमानोपमेयभावो बलेन, न तु भ्रमणेन, आवर्त्तनीतमिति विशेषणसत्त्वात्। तेन तृणमिवेति न क्रियाविशेषणं

सुबला। सच्चं क्खु एदं, पेक्खदु देवो बुड्ढी सालुम्बापदी तरुणवीरो व्विअ पुरदो निवड़िदं जवणसेण्णं अणाआसेण ताडेदि अचरिअं एसो भग्गजाणू भणसिंहो वि।

[ सत्यं खलु एतत् (१)। पश्यतु देवो वृद्धः शालुम्ब्रापतिस्तरुणो वीर इव पुरतो निपतितां जवनसेनामनायासेन ताड्यति आश्चर्य्यम् एष भग्नजानुर्भणसिंहोऽपि। ]

राजा। सुबले! महिमायं मेवारवसुन्धरायाः, यत्र त्वादृशी [illegible]लाङ्गनापि पुरुषवेशपरिग्रहेणाङ्गनाजनसुलभं मार्दव-मपहाय शतवीरसमानपौरुषा समरलीलामभिनयति।

सुबला। अत्थि एत्थ पच्चक्खं महिमा देवस्स।

[ अस्त्यत्र प्रत्यक्षं महिमा देवस्य। ]

(नेपथ्ये कलकलानन्तरम्) विजयतां विजयतां श्रीश्री-मेवाराधिदेवी। विजयतां विजयतां श्रीश्रीमेवारनाथः।

प्रसन्ना मेवारक्षितिरमरसिंहे नरपतौ
चितोरोद्धारार्थे नियमनिरते भोगविरते।

---

किन्तु लुप्तप्रथमान्तम्। पूर्व्वत्र तृणमिव मानभियादौ चतुर्थाङ्कस्थचारणगीते गणयन्नित्यस्य सत्त्वान्नोपमा। तृणतुल्यत्वाभाववति मानादौ तृणतुल्यतासम्भावनस्य गणयन्नित्येतत्पदादवगम्यमानत्वेन तत्रोत्प्रेक्षैव।

(१) एतत् = क्षात्त्रप्रभावस्यानस्तमयनम्, तत्समर्थनायाह पश्यत्विति।

यदाविर्भावेण क्षपित-जवनानीकनिकरा
कुरुक्षेत्राकारा बहु जयति देवारिरणभूः ॥ (१)

राजा। (सौत्सुक्यमाकर्ण्य) अहो श्रोत्रामृतमयं जयशब्दः। किन्तु यावच्चितोरनगरस्थो नैवं जयशब्दमाकर्णयामि तावदन्तःकरणं नामृतस्निग्धं भवति। तथाप्यद्य कथञ्चित् निर्वृतोऽस्मि, (सुबलां प्रति) हन्त सुबले! कथय क्व युष्माकं स्वामिनी वर्त्तते।

सुबला। देव! देवस्स अणुपिट्ठं मं पट्ठावअन्तीए देवीए भणिदं जधा हला सुबले! लद्धजआ पडिणिउत्ता इध ज्जेव मं पेक्खिस्ससि, अण्णधा ण त्थि कोवि णिण्णओ त्ति। दिट्टिआ जिदं अह्मेहिं तं अ पुव्वणिद्दिट्ठं ट्ठाणं एदं ज्जेव।

[ देव! देवस्य अनुपृष्ठं मां प्रस्थापयन्त्या देव्या भणितं यथा सखि सुबले! लब्धजया प्रतिनिवृत्ता इहैव मां प्रेक्षिष्यसे अन्यथा (२)

---

(१) मेवारक्षितिः, मेवारभूदेवता चितोरोद्धारार्थं चितोरोद्धारमुद्दिश्य नियमनिरते व्रतपालनरते अतएव भोगविरते राजोचितसुखभोगान्निवृत्ते नरपतौ अमरसिंहे प्रसन्ना, यस्या मेवारभूदेवताया आविर्भावेण क्षपितजवनानीकनिकरा विनाशितजवनसैन्यसमूहा कुरुक्षेत्राकारा कुरुक्षेत्रस्याकारः स्वरूपमिवाकारो यस्याः सा कुरुक्षेत्रवत्पविला वीरशोणितरञ्जिता च देवारिरणभूः देवारिनाम रणक्षेत्रं देवीरशब्देन वङ्गभाषया वर्णितं बहु बहुलं यथा स्यात् तथा जयति जययुक्ता भवति। देवारिरणक्षेत्रं कुरुक्षेत्रवत् तीर्थं जातमिति भावः। उपमालङ्कारः। कुरुक्षेत्रम् आकारो मूर्त्तिर्यस्या इति समासविग्रहे तु अतिशयोक्तिः। (२) अन्यथा = जयाभावे, पराजये इत्यर्थः।

नास्ति कोऽपि निर्णय इति। दिष्ट्या जितमस्माभिः, तच्च पूर्व्वनिर्द्दिष्टं स्थानमेतदेव। ]

राजा। सुबले! यद्येवं तदा पूर्व्वश्रुतवचनादिना संवादयन् जानामि मयि व्यूहपश्चाद्भागमुपगते पुरतः प्रभग्न-मस्मद्बलं पर्य्यवस्थापयन्ती युष्माकं स्वामिन्येव मेवारभुवो दैवी मूर्त्तिरिति व्यपदिश्यते योद्धृपुरुषैः।

सुबला। युज्जइ एदं।

[ युज्यत एतत्। ]

देवी। (स्वगतम्) दाणीं संपुण्णो जओ मेआरस्स, जअ-हरिसदिण्णहिअआओ जोहाओ। अअं क्खु मे ओदरणसमओ। दिट्ठिआ विजअसिरीभूसिदो अज्जउत्तो दीसदि। णिदेसआरिणी सही मे सुबला अ यधावअणं इध समाअदा। ता जाव विजइणं सेण्णाणं एत्थ संबाहा ण होदि, दाव इच्छेमि अज्जउत्तेण अणुण्णादा णअरं गंतुं (इति न्यग्रोधतरोरवतीर्य्य उपसर्पति)।

[ इदानीं सम्पूर्णो जयो मेवारस्य, जयहर्षदत्तहृदया योधाः। अयं खलु मे अवतरणसमयः। दिष्ट्या विजयश्रीभूषित आर्य्यपुत्रो दृश्यते। निदेशकारिणी सखी मे सुबला च यथावचनम् इह समागता। तद् यावद् विजयिनां सैन्यानामत्र संबाधा (१) न भवति, तावदिच्छामि आर्य्यपुत्रेणानुज्ञाता नगरं गन्तुम्। ]

---

(१) संबाधा=संकुलता।

सुबला। (विलोक्य सहर्षम्) जेदु जेदु भअवदी मेआरभूदेवदा। (राजानं प्रति) पेक्खदु देवो, इअं मेआरभूदेवदा सअं उवसप्पदि देवं।

[जयति जयति भगवती मेवारभूदेवता। पश्यतु देवः, इयं मेवारभूदेवता स्वयमुपसर्पति देवम्।]

राजा। (ससम्भ्रमं प्रतिनिवृत्य, विलोक्य सहर्षम्) देवि!

त्वं राजनीतिनिगमे मम शिक्षयित्री
शिष्यासि मे रणकलासु कृतश्रमा त्वम्।
सर्व्वापदि स्थिरमतिः सचिवोऽसि मे त्वं
त्वं गेहिनी सदृशदुःखसुखा सखी च॥ (१)

दिष्ट्या पुनर्मेवाराधिदेवता चाद्यासि संवृत्ता।

देवी। (सलज्जम्) अज्जउत्त! जइवि आबद्धम्मो एरिसो त्ति तुए उवदिट्ठाए ज्जेव मए अंतेउरिआविरुद्धं जं

---

(१) राजनीतिनिगमे राजनीतिस्वरूपे निगमे श्रुतौ—त्वं मे शिक्षयित्री शिक्षादात्री रणकलासु रणे कलासु च यद्वा रणस्वरूपासु कलासु कलाः संगीतादिरूपाः रणस्यानन्दक्रीड़ारूपत्वात् कलात्वेन रूपणम्। त्वं मे कृतश्रमा शिष्या, कृतः श्रमोऽध्यवसायो यया सा। त्वं मे मम सर्व्वापदि सर्व्वस्यां विपदि स्थिरमतिरविचलबुद्धिः सचिवोऽसि, त्वं गेहिनी जाया, सदृशदुःखसुखा सदृशे तुल्ये दुःखसुखे यस्याः तादृशी सखी च भवसीति शेषः विषयभेदादेकस्यानेकधोल्लेखादुल्लेखालङ्कारः।

किं बि अणुचिट्ठीअदि, तहबि तं सुमरंतीए पच्चा लज्जा होदि ।

[ आर्य्यपुत्र ! यद्यपि आपद्धर्म्म ईदृश इति त्वया उपदिष्टयैव मया अन्तःपुरिकाविरुद्धं यत् किमप्यनुष्ठीयते, तथापि तत् स्मरन्त्याः पश्चात् लज्जा भवति । ]

राजा । देवि !

का ते त्रपा त्वमसि यज्जननी प्रजानां
मेवाररक्षणविधौ विधिना नियुक्ता ।
देवप्रतापनृपतेः सदृशी स्नुषा त्वं
यत्ते कृतं तदनुरूपमहो तवैव ॥ (१)

( पुनर्नेपथ्ये जयशब्दः । )

राजा । ( विलोक्य सहर्षम् ) जितशत्रवः क्षत्रवीरा इत एव समागच्छन्ति । मन्ये मेवारदेवीदर्शनमेषामाद्यं प्रयोजनम् ।

---

(१) मेवाररक्षणविधौ मेवाररक्षाकार्य्ये विधिना विधात्रा नियुक्ता प्रजानां जननी मातृभूता यत् त्वम् असि भवसि तत् इति यत्तदोर्नित्यसम्बन्धात् ते तव का त्रपा लज्जा कापि लज्जा नास्ति, निजरूपेण सर्व्वेषां पुरत एव युद्धं कर्त्तुं त्वया शक्यते इति भावः । देवभावापन्नस्य मम देवस्य च प्रतापसिंहभूपतेः सदृशी योग्या स्नुषा पुत्रवधूस्त्वं ते तव यत् कृतं करणं तत् तवैव अनुरूपं योग्यं नान्यस्य, पूर्व्वार्द्धेऽर्थान्तरन्यासः, उत्तरार्द्धे समालङ्कारश्च ।

देवी। अज्ज जादा सिद्धी अप्पआसणिज्जरणकम्मा अवरोहजणो त्ति णिवेदेमि सुबलारक्खिदेण अस्सारोह-वेसेण पड़िच्छण्णा दाणीं ज्जेब णअरं गंतुं।

[ अद्य जाता सिद्धिः, अप्रकाशनीयरणकर्म्मा अवरोधजन इति निवेदयामि सुबलारक्षितेन अश्वारोहवेशेन प्रतिच्छन्ना (१) इदानी-मेव नगरं गन्तुम्। ]

राजा। देवि! एवमस्तु। सुबले! अनुवर्त्तस्व देवीम्। या खलु—

नाक्षत्रदीपनकरी विमलस्वरूपा
स्त्रीपुंसवेशपरिवर्त्तितभावरम्या।
ज्योत्स्नारुचा दिनकरेण च शोभितेयं
सन्ध्येव रञ्जयति मे हृदयान्तरीक्षम्॥ (२)

---

(१) प्रतिच्छन्ना = प्रच्छादितस्वरूपा।

(२) नाक्षत्रदीपनकरी न क्षत्राः अक्षत्राः क्षत्रभिन्नाः न अक्षत्राः न क्षत्रभिन्नाः नाक्षत्राः क्षत्राः तेषां दीपनकरी दीप्तिसम्पादिका सन्ध्यापक्षे नक्षत्राणामिदं नाक्षत्रं यद्दीपनं प्रकाशः तत्करी तज्जनिका, विमलस्वरूपा विमलं निष्पापं स्वरूपं यस्याः सा (सन्ध्यापक्षे) निर्म्मला प्रकाशवती च, स्त्री-पुंसवेशेन परिवर्त्तितो विपर्य्यासितो यो भावः सत्ता तेन रम्या इयं देवी, ज्योत्स्नारुचा चन्द्रिकाप्रभया दिनकरेण सूर्य्येण च शोभिता सन्ध्या दिनरात्र्योः सन्धिवेला इव मे हृदयान्तरीक्षं हृदयमेवान्तरीक्षमाकाशः तत् रञ्जयति अनुरागयुक्तं सन्ध्यापक्षे रक्तवर्णं

यावदहमपि विजयिनो वीरानभिनन्दयितुं प्रत्युद्-गच्छामीति ।

( इति निष्क्रान्ताः सर्व्वे । )

इत्यमरमङ्गलनामनाटके समरजयाभिधः
पञ्चमाङ्कः समाप्तः ।



---

करोति । एवं वेशपरिवर्त्तनस्य राज्ञा दृष्टपूर्व्वत्वादिति भावः । अत्र श्लेपमूलोपमालङ्कारः ।

मेवारस्य यादृगवस्था दिल्लीश्वरेण महाराजमानसिंहमुखादवगता, विदिततद्वृत्तान्तस्य मेवाराभियानपरजवनसेनापतेस्तत्रैव दृढ़प्रत्ययो जातः राष्ट्रप्रवेशदशायां कस्यापि प्रतिरोधोद्यमलक्षणस्यानुपलम्भात् । तेन च प्रत्ययेन स्वसैन्यसञ्चालनमबाधमशङ्कं च कुर्व्वन्नसौ दोवारिनामकस्थाने सहसा मेवारबलेनाक्रान्तः । ततो यथा युद्धं तदस्मिन्नङ्के कल्पनाप्रायं प्रदर्शितम् । मेवारनाथस्यास्मिन् युद्धे जयो जात इत्यैतिहासिकी वार्त्ता ।

टीकेयं पञ्चमाङ्कस्यामरमङ्गलनाटके ।
हाटके काचवद्युक्ता पूर्णा मरकतश्रिया ।

# षष्ठोऽङ्कः

ततः प्रविशति राजा देवी च ।

राजा । प्रिये, वीरायास्तावदज्ञातसञ्चारस्थानमपयानेन (१) भवत्या रणोत्साहवैधुर्य्यमिवावलोक्य स्वोत्साहमेवार्द्धविकलमवगच्छामि ।

यतः—मलिनमप्यनलेन समुज्ज्वलद्

भवति हेम परिष्कृतमञ्जसा ।

मम चमूस्तरसा तव तेजसा

भयदृढं जड़िमानममुञ्चत ॥ (२)



सैव भवती साम्प्रतं जड़ेव लक्ष्यते ।

देवी । (सास्रम्) अज्जउत्त, ण णीणिमित्तं एदं मे जड़त्तणं । सा हि मम दुईअं हिअअं आसि । ताए अदक्खिदेण अदंसणेण परिहूदं विअ अप्पाणं पेक्खामि । सरणं गदाए

---

(१) अज्ञाते सञ्चारस्थाने यस्मिन् कर्म्मणि तद् यथा स्यात् तथा अपयानेन पलायनेन । सञ्चारः सञ्चरणं गतिप्रकारः स्थानमवस्थितिप्रकारः ।

(२) मलिनं वस्त्वन्तरयोगादशुद्धम् अपि हेम काञ्चनम् अनलेन समुज्ज्वलत् दीप्यमानं सत् अञ्जसा याथार्थ्येन परिष्कृतं विशुद्धं भवति । मम चमूः वाहिनी तव तेजसा भयदृढं भयेन दृढं घनीभूतं जड़िमानं जड़त्वं तरसा वेगेन अमुञ्चत अत्यजत् । दृष्टान्तालङ्कारः ।

एव्वं अदंसणं रक्खअस्स कलंकं उग्घोसेदि, एदं मे दुईअं हिअअसल्लं।

[ आर्य्यपुत्र ! न निर्निमित्तमेतन्मे जड़त्वम्। सा हि मम द्वितीयं हृदयम् आसीत्। तस्याः अतर्कितेन अदर्शनेन परिभूतमिव आत्मानं पश्यामि। शरणं गतायाः एवम् अदर्शनं रक्षकस्य कलङ्कम् उद्-घोषयति, एतन्मे द्वितीयं (१) हृदयशल्यम्। ]

राजा। सत्यं खलु स्पर्शमणिप्रभावा-



दयोऽपि चामीकरतामुपैति।

तवैव सङ्गाद् गणिकापि सर्व्व-

त्यागव्रता प्रेममयी बभूव ॥ (२)

तदपयानं हेतुरपि दुःखस्य तस्मादधिकतरदुःखस्याप-नोदनप्रयासं न वाधितुमर्हति।

देवी। सव्वदो अह्माणं जओ होदि, ता कधेहि को णवो अधिअदरदुक्खहेदू जादो ?

[ सर्व्वतः अस्माकं जयो भवति, तत्कथय को नवोऽधिकतर-दुःखहेतुर्ज्जातः ? ]

---

(१) तस्या अतर्कितमदर्शनमेकं शरणागताया अरक्षणेन तव कलङ्कश्चापरं हृदयशल्यम् इति द्वितीयमित्युक्तम्, हृदयस्य शल्यमिव दुःखजनकमित्यर्थः।

(२) स्पर्शमणिप्रभावात्=स्पर्शमणेर्गुणेन। अयः=लौहम्। चामी-करताम्=स्वर्णत्वम्। यथा स्पर्शमणिस्पृष्टं लौहं स्वर्णं भवति इति सत्यं तथा श्यापि वीरा तव सङ्गादेव सर्व्वत्यागिनी प्रेममयी जातेत्यर्थः। दृष्टान्तालङ्कारः।

राजा । अस्ति हि नवस्त्वं वक्ष्यामि, यश्च पुराणस्तमपि नवीभूतमद्य मन्ये, यतः—

असीमाशा, सीमानियममितमायुस्तनुभृतां
शुभावस्था विद्युत्स्फुरणचपला, श्रीरनियता ।
अतः श्रेष्ठाभीष्टं प्रथममधिगन्तुं प्रयतते
कृती कालक्षेपं परिहरति यत्नाद् विषमिव ॥ (१)

मम तु दैवविड़म्बितस्य यथाशक्ति यतमानस्यापि श्रेष्ठाभीष्टे चितोराधिकारे महान् कालातिपातो जातो जायते च साम्प्रतमपि जवनवलाभियाननिरोधव्यापृतस्य, परस्तात् [illegible]धिकारासम्भवाशङ्का चेत्यधिकतरदुःखहेतुः ।

देवी । जवणाणं अक्कमणपड़िरोहत्थं समरेहिं उजेव एसो विलंबो ण उण अलसदाए, तहिं तहिं विअअसिरीए

---

(१) तनुभृतां प्राणिनाम् आशा दीर्घाकाङ्क्षा असीमा सीमाहीना, आयुः जीवितं सीमानियममितम् सीमाया यो नियमः अवधारणं तेन मितं परिच्छिन्नम्, शुभावस्था कल्याणप्रसविनी दशा विद्युत्स्फुरणचपला तड़ित्प्रकाशवत् स्वल्पकालस्थायिनी, श्रीः सम्पत् अनियता अस्थिरा, अतः कारणात् कृती विचक्षणः श्रेष्ठाभीष्टं श्रेष्ठं यदभीष्टम् एषितं तत् अधिगन्तुं प्राप्तुं प्रथमं प्रयतते प्रयत्नवान् भवति, कालक्षेपं कालविलम्बं यत्नाद् यत्नेन विषमिव विषवत् परिहरति त्यजति । विषपरिहारमिव कालक्षेपपरिहारं करोतीति तात्पर्य्यम् । विषमिवेत्यस्य क्रियाविशेषणरूपत्वात् । विधेयभावेन कर्म्मत्वाद् यथा श्रुतार्थो वा । अत्रोपमालङ्कारः । परिहार्य्यतया साधर्म्याद् विषवदिति कालक्षेपांशे विशेषणविधेयोपमेति केचित् । तच्चिन्त्यम् । अप्रस्तुतेन सामान्येन स्वस्य कालक्षेपादकृतित्वस्य प्रस्तुतस्य गम्यत्वादप्रस्तुतप्रशंसा च ।

अलंकिदस्स दाणीं अ सव्वधा पोरुसं दंसअंतस्स दे कधं अधिअदरदुक्खं ? पच्चा अ कधं तदधिआरस्स असंभवो संकिअदि ?

[ जवनानामाक्रमणप्रतिरोधार्थं समरैरेव एष विलम्बो न पुनरलसतया, तत्र तत्र विजयश्रिया अलङ्कृतस्य इदानीं च सर्व्वथा पौरुषं दर्शयतः ते कथमधिकतरदुःखम्, पश्चाच्च कथं तदधिकारस्यासम्भवः शङ्क्यते ? ]

राजा । अन्यत्र विजयश्चितोराधिकारश्चेत्यनयोर्म्महदन्तरम् । तथा हि,—

यदस्माकं तीर्थं पितृपुरुषकीर्त्तिस्मृतिकरं
सतीलक्षप्राणाहुतिजितमहापीठगरिम ।
तदद्यापि प्रोद्यज्जवनबलसंस्पर्शमलिनं
परं ध्यायं ध्यायं न शममुपयामि क्षणमपि ॥ (१)

---

(१) पितृपुरुषाणां पितरः पितृत्वमापन्नाः पुरुषाः मृताः पूर्व्वपुरुषाः यद्वा पितरः पुरुषाः पूर्व्वपुरुषाः तेषां कीर्त्तयः तासां स्मृतिकरं स्मरणजनकं सतीलक्षाणां बहुसंख्यकसाध्वीनां प्राणाहुतयः, प्राणानामग्नौ समर्पणानि ताभिः करणभूतानिः जितः पराजितः महापीठगरिमा महापीठानां हिङ्गुलादीनां गरिमा गौरवं पूज्यत्वं येन त्यक्तप्राणाया एकस्याः सत्या अङ्गप्रत्यङ्गसम्बन्धाद् हिङ्गुलादीनामेकपञ्चाशतो महापीठानां पूज्यत्वमत्र तु सतीलक्षाणां प्राणहीनसर्व्वाङ्गहवनसम्बन्धात्तदधिकं पूज्यत्वमिति भावः, यत् अस्माकं तीर्थं पुण्यक्षेत्रं चितोराख्यम् इति प्रकरणादसाधारणविशेषणाच्च गम्यते तत् अद्यापि अस्मिन्नहन्यपि प्रोद्यतां वृद्धिभाजां जवनबलानां संस्पर्शेन जवनानां बलसंस्पर्शेन वा मलिनं कलङ्कितं परम् अतिशयेन ध्यायं ध्यायं पुनः पुनर्ध्यात्वा क्षणमपि क्षणकालं व्याप्यापि न शममुपयामि शान्तिमाप्नोमि । सतीशब्दश्लेषमूलव्यतिरेकः काव्यलिङ्गञ्च ।

अथ च,—

मुहुर्म्मुहुः समरजयेऽपि मामके
वरूथिनी क्षयमुपगच्छति क्रमात् ।
न चाधुनाप्यजनि चितोरतोरण-
क्षणेक्षणं तदधिकृतिः कथं भवेत् ॥ (१)

इति चिन्तयन्नधिकतरं दुःखमनुभवामि ।

देवी । अज्जउत्त, णवं णवं सेण्णसंघडणं कुणंतेण तुए पूरिदं ज्जेब क्खअट्ठाणं ।

[ आर्य्यपुत्र ! नवं नवं सैन्यसंघटनं कुर्व्वता त्वया पूरितमेव क्षयस्थानम् । ]

राजा । देवि ! समरहतानां वीराणां स्थानपूर्त्तिरसम्भवैव । तथापि ये वर्त्तन्ते तेषामविरोधे सति नैवमाशङ्किष्यत, न त्वेवम्, विरोधो हि बलीयान्, स खलु मे नवोऽधिकतरदुःखहेतुः । तथा हि—

---

(१) मुहुर्म्मुहुः वारंवारं मामके मदीये समरजये जवनैः यानि समराणि तेषु जये सत्यपि वरूथिनी मदीया वाहिनी क्रमात्क्षयमुपगच्छति क्षीयते, अधुनापि चितोरतोरणक्षणेक्षणं चितोरतोरणस्य चितोरपुरबहिर्द्वारस्य क्षणेक्षणं क्षणमात्रदर्शनं नाजनि न जातम्, तदधिकृतिः तस्य चितोरस्य अधिकृतिः अधिकारः कथं भवेत् ? न सम्भवत्येव । अत्र तोरतोरेति यमकं क्षणेक्षणमित्यत्र च च्छेकानुप्रासः, वाहिनीक्षयात् पूर्व्वमारभ्य यद्बहिर्द्वारदर्शनं कर्त्तुं न पारितं क्षीणवाहिनीकस्य मे तदधिकारासम्भवः कैमुतिकन्यायसिद्ध इत्यर्थापत्तिश्च ।

युक्तांश्चितोरजयकर्म्मणि चण्डवंश्या-
नाग्रेसराननुगमिष्यति शक्तवंशः ।
बाधिष्यते पुनररिप्रमदानुबन्धी
का नाम नालिकपरीतपुरीजयाशा ॥ (१)

देवी । जइवि एव्वं, तहवि भणामि अणवेक्खिदसामंतसाहाअअस्स जस्स दे चिदोरक्कमणे पढ़मं महंतो उच्छाहो दिट्ठो सो ज्जेव तुमं सि त्ति ।

[ यद्य... एवं तथापि भणामि अनपेक्षितसामन्तसाहायकस्य यस्य ते चितोराक्रमणे प्रथमं महान् उत्साहो दृष्टः स एव त्वमसीति । ]

राजा । देवि, श्रूयताम्,—तदानीमहमनल्पबल एवासम् । सम्प्रति तु न तथा,—

येषां शराः प्रबलनालिकमुक्तलौह-
पिण्डोपमानगतयः स्थिरलक्ष्यपाताः ।

---

(१) शक्तान्वयः शक्तवंशः चितोरजयकर्म्मणि चितोरजयव्यापारे युक्तान् रतान् अग्रेसरान् सेनाग्रनेतॄन् चण्डवंश्यान् न अनुगमिष्यति, पुनः किन्तु—अरीणां शत्रूणां प्रमदानुबन्धी प्रमदमानन्दम् पुनः पुनः अनुबध्नन् पारम्पर्य्येण अभीक्ष्णं सम्पादयन् बाधिष्यते प्रतिरोत्स्यति, नालिकपरीतायाः नालिकास्त्रपरिवृतायाः पुर्य्याः चितोरनगर्य्या जयाशा का नाम, नाम सम्भावनायाम् । बाधनं शत्रूणामानन्दहेतुरिति काव्यलिङ्गम् । का नाम जयाशेति काकूपस्थापितजयाशाविरहं प्रति बाधनस्य पुर्य्यां नालिकपरीतत्वस्य च हेतुत्वाच्च काव्यलिङ्गान्तरम् ।

ते भिल्लवीरपुरुषाः समरे सहायाः
प्रायेण कूटकुशलैर्निहता द्विषद्भिः ॥ (१)

अपि चाघटनघटननिपुणा त्वमप्युदासीनेव स्थितासि । अतो बृहन्नालिकास्त्रसुरक्षितस्य चितोरदुर्गस्य बहिराक्रमणेनाधिकारो दुष्कर एवेति पर्य्याकुलतामापन्नोऽस्मि ।

देवी । ( क्षणं विचिन्त्य ) जवणादो धम्मरक्खणकामेहिं वम्भणेहिं सजादिसेण्णं जं संघड़िदं तं णिजोएहि ।

[ जवनाद् धर्म्मरक्षणकामैः ब्राह्मणैः सजातिसैन्यं यत् [illegible]टितं (२) तत् नियोजय । ]

---

(१) येषां शरा वाणाः प्रबलं प्रकृष्टबलसम्पन्नं बृहदिति यावत् यन्नालिकं तस्मान्मुक्तो निर्गतः तेन करणेन मुक्तः क्षिप्तो वा यो लौहपिण्डः आयसगोलकं तदुपमानम् उपमाकरणं यस्याः सा गतिर्गमनं येषां नालिकमुक्तलौहगोलकगतिसमानगतयः इत्यर्थः स्थिरः अविचलः लक्ष्यपातः लक्ष्ये पातः पतनं लक्ष्यप्राप्तिर्येषां अव्यर्थसन्धानाः ( आसन् ) समरे युद्धे सहायाः युद्धे मत्साहाय्यकृतः ते भिल्लवीरपुरुषाः भिल्लजातीयाः वीरपुरुषाः कूटकुशलैः कपटपटुभिः द्विषद्भिः शत्रुभिः प्रायेण बाहुल्येन निहताः मारिताः । उपमालङ्कारः । कूटकुशलैरित्यनेन अन्यायेन निहता इति वस्तु व्यज्यते ।

(२) स्ववीर्य्याद् राजवीर्य्याच्च स्ववीर्य्यं बलवत्तरमिति शस्त्रं द्विजातिभिर्ग्राह्यं धर्म्मो यत्रोपरुध्यते इति च मनुस्मरणादतर्कितक्रमणैकलिङ्गनाथशिवलिङ्गविध्वंसादिना धर्म्मलोपं जवना मा कार्षुरिति धिया मेवारवासिभिः ब्राह्मणैः युद्धेन तत्प्रतिरोधार्थं—राजसम्मत्या ब्राह्मणवाहिनी रचिता तां चितोरोद्धारकर्म्मणि प्रवर्त्तयेति देवीवचनार्थः । धर्म्मरक्षार्थमेष पन्था ब्राह्मणैरप्यनुसर्त्तुं शक्यत इत्युपदेशार्थमिदं संलपनम्, पश्चात्स्फुटीभविष्यति चेति ध्येयम् ।

राजा । तच्च वहिस्तिष्ठति (१), अभ्यन्तरन्तु तेन दुष्प्रवेश-मेव, प्रविविक्षूणामरीणां हि नालिकमुक्तास्त्रेण वधो दुर्वारः । तदेवं सुनिश्चितायां ब्रह्महत्यायां कथं नामाहं प्रवर्त्तकः स्याम् ।

देवी । चिंतणिज्जं एदं जइ णाम अप्पणा बह्मणाणं पउत्ती ण भवे ।

[चिन्तनीयमेतद् यदि नाम आत्मना ब्राह्मणान्तं प्रवृत्तिः न भवेत् ।]

राजा । यदि ते स्वयं प्रवर्त्तेरंस्तथाप्यस्ति विचारावसरः । यतो जानाम्येव तत्र (२) भगवतां श्रीगुरूणामाज्ञाम्—

धर्म्मोपरोधे सति भूसुरोऽपि
गृह्णीत शस्त्रं परतश्च शाम्येत् ।
स्वभावसौम्या तटिनी तपान्त-
भीमापि धत्ते शरदि प्रसादम् ॥ (३)

---

(१) तच्च=तदपि—ब्राह्मणसैन्यमपि, यथास्मत्सेना चितोराद् वहिर्देशे तिष्ठति तथा ब्राह्मणसेनापि ।

(२) तत्र = तस्मिन् ब्राह्मणसैन्ये । ( विषये सप्तमी ) ।

(३) धर्म्मोपरोधे धर्म्महानिसम्भावनायां भूसुरोऽपि ब्राह्मणोऽपि शस्त्रं गृह्णीत, अस्माकं शस्त्रग्रहणाभावे धर्म्महानिर्भविष्यतीति सम्भावनायां ब्राह्मणोऽपि शस्त्रं गृह्णीयात् । परतश्च=तादृशशङ्कानिवृत्तौ धर्म्मरक्षायां सत्यां शाम्येत् शस्त्रं परित्यजेत्, रणचर्च्चामपहाय ब्राह्मणोचितां शान्तिं भजेत् । अत्र दृष्टान्तः, स्वभाव-सौम्या स्वभावेन सौम्या स्रोतोमार्द्दवनिर्म्मलत्वादिगुणवती तटिनी नदी तपान्ते

चितोरजयाभावे को ब्राह्मणानां धर्म्मोपरोधः ? यदि विनापि तं युवजनसुलभयुद्धौत्सुक्येन वा कारणान्तरेण वा स्वयं प्रवर्त्तेरंस्ते युद्धाय, निषेद्धव्या (१) एव मे भवेयुः ।

देवी । इमस्सिं विसए भअवं सिरीगुरुदेओ पुच्छिदव्वो ।

[ अस्मिन् विषये भगवान् श्रीगुरुदेवः प्रष्टव्यः । ]

राजा । तत्र भवान् एकलिङ्गनाथप्रधानपुरोधाः आचार्य्य-शैलदेवस्तदर्थं निवेदितः ।

( प्रविश्य ) कञ्चुकी । जयति देवः, सदेवीकं देव-मिच्छति द्रष्टुमाचार्य्यशैलदेवः पुरोधाः ।

राजा । अविलम्बमिह प्रवेशय । देवि, सुलक्षणमेतत (२) ।

ततः प्रविशति पुरोधाः शैलदेवः ।

पुरोधाः । विजयतां सदेवीको राजा ।

राजा । ( उत्थाय ) आचार्य्य ! अभिवादये, इदमासन-मास्यताम् ।

देवी । आचालिअ वंदामि ।

[ आचार्य्य ! वन्दे । ]

---

ग्रीष्मान्ते वर्षासु इत्यर्थः, भीमापि खरस्रोतस्त्वाविलत्वादिना भीषणापि शरदि शरत्काले वर्षावसाने प्रसादं सौम्यतां धत्ते धारयति । अत्र दृष्टान्तालङ्कारः ।

(१) वर्णाश्रमधर्म्माणां राज्ञैव रक्षणीयत्वात्, धर्म्मोपरोधाभावे युद्धं ब्राह्मणानां पापायैवेति तत्प्रतिषेधस्य राजकर्त्तव्यत्वादिति भावः ।

(२) एतत=नामकीर्त्तनमात्रेणात्र तदागमनं सुलक्षणम्=शुभलक्षणम् ।

पुरोधाः । स्वस्ति वाम् । परिगृह्यतामासनम् ।

राजा । ( उपविश्य ) मन्ये चित्तोरादागतोऽत्रभवान्, तदध्वश्रमखिन्नस्यात्रभवतो भगवतां श्रीगुरूणाञ्च कुशलं वेदितुमिच्छामि ।

पुरोधाः । ममास्ति कुशलं राजन् भावत्ककुशलाश्रितम् ।
सिद्धिभाजां गुरूणान्तु कुशलेऽपि स्वतन्त्रता ॥ (१)

ते तु श्रीमन्तमाशिषा संवर्द्धयन्तः प्रश्नस्योत्तरमाहुः,—


म्भस्तम्भनिवेशितप्रतिकृतिर्देवर्षिसङ्घः सती-
चित्यानीश्वरलिङ्गपीठनिचयः साचाच्चितोरेश्वरी ।
विप्राश्चार्च्चनरक्षणादिनिरतास्तत्रासतां हा कथं
यत्राभक्ष्यपलैः पलाण्डुपचनैर्गन्धः सदा तन्यते ॥ (२)

---

(१) मम कुशलं भावत्ककुशलाश्रितम्, भवदीयकुशलाधीनम् अस्ति भवति, भवतामिदं भावत्कं ( भवतष्ठक्छसौ—पा० ४।२।११५ ) सिद्धिभाजां गुरूणां तु कुशलेऽपि स्वतन्त्रता स्वाधीनत्वम्—स्वाधीनकुशलाः, सिद्धिमन्त इति भावः ।

(२) यत्र पलाण्डुपचनैः पलाण्डुपाकैः अभक्ष्यपलैः अखाद्यमांसैः गन्धः सदा विस्तार्य्यते तत्र तस्मिन् स्थाने कुम्भस्तम्भे राणाकुम्भस्थापितजयस्तम्भे निवेशिताः प्रतिकृतयः प्रतिमूर्त्तयो यस्य सः देवर्षिसङ्घः देवाः ब्रह्मादयः, ऋषयो मरीच्यादयः तेषां सङ्घः समूहः, सतीनां धर्म्मलोपाशङ्कया अग्निप्रविष्टानां चित्यानि चितास्थानानि ईश्वरलिङ्गानि शिवलिङ्गानि पीठानि देवीप्रतिकृतयः तेषां निचयः समूहः, साक्षात् स्वयं-मूर्त्यधिष्ठिता चितोरेश्वरी देवी अर्च्चनरक्षणादिषु तत्तद्देवमूर्त्तिषु तत्तद्देवता-पूजनतत्तन्मूर्त्तिसंरक्षणभूषणादिषु निरताः तत्पराः विप्राश्च कथमासतां कथं तिष्ठन्तु ।

इत्यादिधर्म्मबाधापरिहरणार्थं विप्रैरपि तत्र शक्यते ग्रहीतुं शस्त्रमिति ।

राजा । हन्त प्रतिहतस्तावदेको विघ्नः, तथापि बृहन्नालिक-तप्ताय:पिण्डमुखे ब्राह्मणप्रेषणं वा तदनुमननं वा मया कर्त्तुम् अशक्यमेव ।

पुरोधाः । राजन् ! एवं धर्म्मरतस्य ते स्वयमेव दैवं सर्व्व-मुपनयति ।

देवी । आचालिअ भोदि कोदूहलं फुडं एदं जाणिदुं ।

[ आचार्य्य ! भवति कौतूहलं स्फुटमेतज् ज्ञातुम् । ]

पुरोधाः । श्रूयताम्, भगवत्याश्चितोरेश्वर्य्याः पूजामहो-त्सवः समारब्धः । तत्र तत्पुरोहितेनायुष्मता भद्रदेवेन सह-स्रावृत्तसप्तशतीपाठवेदपारायणनिर्व्वर्त्तनाय परःसहस्रास्तापसाः समाहूताः । तदर्थमुपकल्पिताश्च पटमण्डपाः । अत्र चितोर-शासकस्य सागरसिंहस्यानुमतिमप्यायुष्मान् नारायणः कस्या-श्चन सिद्धतापस्याः साहायकेन समग्राहीत् । इत्येवं तापस-च्छद्मानः पुस्तकादिसम्भारव्याजगृहीतशस्त्राश्चितोरं प्रविष्टा ब्राह्मणयोधाः ।

---

हा खेदे । प्रतिमूर्त्यधिष्ठिता देवादयः चितानुरागिण्यो देवीभूताः सत्यः शिवः शिवा विप्राश्च अभक्ष्यमांसादिपाकगन्धेन स्थानत्यागिनस्तत्प्रवृत्ता या भवन्ति । इति भावः ।

देवी। (स्वगतम्) अवि णाम तावसी—वहिणी वीरा भवे ? आदु कुदो से सिद्धी (प्रकाशम्) मरुमज्झपड़िदस्स पिआसाउलस्स भाईरहीप्पवाहो ओदिण्णो।

[अपि नाम तापसी भगिनी वीरा भवेत् ? अथवा कुतोऽस्याः सिद्धिः (प्रकाशम्) मरुमध्यपतितस्य पिपासाकुलस्य भागीरथीप्रवाहोऽवतीर्णः। ]

राजा। (सविस्मयहर्षम्) आचार्य्य ! सत्यमद्याभिलाष-पूर्त्तेर्द्वारमिव पश्यामि।

यतः—


संघातभेदजननाय यमात्मदास-
मेकं शिशोदकुलकज्जलकालिमाङ्कम्।
दिल्लीश्वरः किल चकार चितोरराजं
शत्रुः स नो हितकरोऽजनि दैवशक्त्या॥ (१)

---

(१) संघातेत्यादि—। दिल्लीश्वरः, आत्मदासम् आत्मनः स्वस्य दास्ये स्थितं एकं यं शिशोदकुलकज्जलकालिमाङ्कम्, शिशोदकुलस्य वाप्पावंशधरराणाराहुपवंशस्य कज्जलमालिन्यचिह्नतुल्यम् अकीर्त्तिकरमिति यावत् संघातभेदजननाय वाप्पाकुलापत्य-धाराधटितो यः संघातः ऐकमत्ययुक्तः समूहः तस्य भेदजननाय विच्छेदसम्पादनार्थं चितोरराजं राणेत्युपाधिदानेन चितोरस्य राजानं किल चकार किलेत्यलीके, सोऽस्माकं शत्रुः दैवशक्त्या दैवप्रभावेण हितकरोऽजनि, हितकृज्जातः मेवारवासिनः सर्व्वे क्षत्रिया वाप्पावंशानुरागेणोदयपुरपतेरमरसिंहस्यानुगतास्तमेव राणेति मन्यन्ते, चितोरप्रदेशे यदि तद्वंशीय एव कश्चिद् राणा संज्ञयाभिहितो राजा स्यात् मेवारवासिनां कियतां तदनुरागोऽपि सम्भवेत् कुलैक्यात्, इति मत्वा दिल्लीश्वरः पूर्व्वंत एव स्वाश्रितं राणाप्रतापसिंहवैमात्रेयभ्रातरं चितोरप्रदेशस्याधिपत्येऽभि-षिषेच, तस्य सागरजीतीतिहासप्रसिद्धं नाम, तस्य नामापि कश्चिदपि न जग्राह,—

पुरोधाः। राजन्, एवमेतत्, अथ भगवतां नियोगस्तावद-परो वर्त्तते।

राजा। (साञ्जलिबद्धम्) किमाज्ञापयन्ति गुरवः?

पुरोधाः। 'वत्स मेवारपते! आगामिषष्ठदिवसप्रदोषात् प्राक्सूर्य्योदयं सप्तमदिवसस्य ससखीजनया वत्सया समं सशालुम्ब्रापतिनायुष्मता मदन्तिकमागन्तव्यम्' इति।

राजा। (सहर्षम्) अहो भाग्यम्, तीर्थयात्राप्रत्यागतानां श्रीगुरूणां चरणदर्शनानुमतिश्चिरादद्य लब्धा।

देवी। (सहर्षम्) महांतो एसो अणुग्गहो।

[महान् एषः अनुग्रहः।]

राजा। अपि ज्ञायतेऽत्र भवता संक्षिप्तो गुरुनियोगोऽय-मितरजनव्यावर्त्तको न वा? (१)

पुरोधाः। राजन्!

---

(अत्रापि पद्ये तस्य नामोल्लेखो नास्ति) दिल्लीश्वराधीनत्वात् तस्य चितोराधिपत्यं संज्ञामात्रेण, न तु तत्त्वतः, इति किलशब्दप्रयोगः, इत्येवमस्मदहितसाधनाय नियुक्तः स खलु कुलाकीर्त्तिकरः शत्रुः, तापसप्रवेशानुमतिदानेन तद्वासव्यवस्थापनेन चास्माकं हितमेवाकार्षीदितीयं दैवशक्तिरिति विस्तृतोऽर्थः।

(१) ससैन्यैन बहिराक्रमणं मया कर्त्तव्यं न वेति प्रश्नाशयः। अर्थस्तु—गुरूणां नियोगवाक्ये येषामागमनं स्पष्टं निर्दिष्टं तदन्यो नागमिष्यति इति इतर-जनस्य प्रतिषेधात्मको वाक्यार्थो वा ते आगच्छेयुरेव सैनिकादीनां यथाप्रयोजन-मानयनं कार्य्यमिति स्वायोगव्यवच्छेदो वा? इति।

आशीर्गुरूणां खलु पात्रभेदात्
फलोपधाने भजते विशेषम् ।
तुल्येऽपि वर्षे सिकतासु शोष-
मार्द्रक्षितौ व्यक्तिमुपैति चाम्भः ॥ (१)

अतः कृतं विमर्शेन (२), चितोरदुर्गप्रवेशोपायस्तापस्या विहितः । तदेषा लिपिः, ( इत्युत्तरीयबन्धाल्लिपिं निःसार्य्य ) इयं चितोरशासकस्य करमुद्राङ्किता रुद्धकवाटसंवृतसदोलशिविकाद्वारकस्य चितोरदुर्गप्रवेशानुज्ञानलिपिः ( इति राज्ञेऽर्पयति ) इयमन्या लिपिश्च देवीमुद्दिश्य तापस्या दत्ता ( इति देव्यै समर्पयति ) ।

राजा । ( वाचयित्वा ) इयमाचार्य्योक्तस्वरूपा प्रवेशलिपिः । किन्तु चोरवदस्माभिः प्रवेष्टव्यं न वीरवत् ।

पुरोधाः । वीर्य्यप्रधाने खल्वायोधने वीरायितव्यं कूटास्त्रप्रधाने जवनयुद्धे तु कोऽयं वीर्य्यावीर्य्यविचारः ? तथापि

---

(१) आशीरित्यादि—। गुरूणाम् आशीः मङ्गलाशंसनं पात्रभेदात् आशीः विशेषं प्राप्य विशेषम्—साफल्यवैफल्यरूपवैलक्षण्यं भजते प्राप्नोति, शिष्यान् प्रति गुरूणां शुभाशीर्व्वचनप्रयोगस्य तुल्यत्वेऽपि कस्मिंश्चित् शिष्ये तत्साफल्यं कस्मिंश्चिद् वैफल्यं भवति, अत्र शिष्यस्य गुरुभक्तेरुत्कर्षोऽपकर्षश्च हेतुरिति अत्र च भवतो भक्तिप्रकर्षादुत्कृष्टफलमिति भावः, अत्र दृष्टान्तमाह तुल्य इति,—वर्षस्य वृष्टिजलपातस्य तुल्यत्वेऽपि समपरिमाणत्वेऽपि सिकतासु वालुकासु शुष्कता आर्द्रक्षितौ सरसभूमौ दृश्यता च भवतीत्यर्थः । (२) विमर्शः = संशयः । ससैन्येन मया गन्तव्यं न वेति राजप्रश्नार्थमुन्नीय पुरोधसो वचनमेतत् ।

सशालुम्नापतिना भवता गूढ़पुरुषदर्शितवर्त्मना भद्रदेवाश्रमं यावच्छिविकया गन्तव्यं ततश्च निर्णीतकर्त्तव्येन वीरवदेवे-त्यस्माकमभिप्रायः ।

राजा । आज्ञेति गृह्णामि (१) ।

पुरोधाः । राजन् ! श्रीमत्सान्निध्यसुखव्यासक्तमनसा प्रत्यासन्नापि सन्ध्या नोपलक्षिता, तथा हि—

कुलायमभिधावतां भवति कूजितं पक्षिणां
प्रतीचि वियतीक्ष्यते दिनमणेः सरागप्रभा ।
त्वरां दधति किङ्करा निशि निशान्तसज्जाकृते
विवर्त्तयति सर्व्वतः समयनामरूपो हरः ॥ (२)

---

(१) अभिप्राय इति रूपेण यदुक्तं सा आज्ञा इति निश्चित्य मया गृह्यते आज्ञा गुरूणां ह्यविचारणीयेति न्यायात् ।

(२) कुलायमित्यादि—। कुलायं नीड़म् अभिधावतां आभिमुख्येन वेगात् पततां पक्षिणां कूजनं रवो भवति, प्रतीचि वियति पश्चिमे गगने दिनमणेः सूर्य्यस्य सरागप्रभा रक्ताभा ईक्ष्यते दृश्यते,—किङ्कराः = किङ्कर्य्यश्च किङ्कराश्चेत्येक-शेषात् किङ्कराः निशि रात्रौ निशान्तसज्जायाः निशान्तस्य प्रासादभवनस्य सज्जायाः प्रसाधनस्य कृते निमित्तं त्वरां क्षिप्रतां दधति भजन्ते, निशि भवनसज्जा पुष्पानु-लेपनादिनिधानं दीपाधारादिव्यवस्थापनं तल्पकल्पनादिश्च । हरः समय-नामरूपः समय इति नामरूपं यस्य तादृशः सन् सर्व्वतः सर्व्वावच्छेदेन विवर्त्तयति परिवर्त्तयति कालसंज्ञां तद्रूपं च गृह्णन् शिव एव प्रतिक्षणं सर्व्वतः परिवर्त्तनं साधयतीति सामान्येन पक्षिकूजनादिविशेषाणां समर्थनादर्थान्तरन्यासः । एतेन वर्णनेन स्वीयसायंकृत्याय राजधानीस्थस्वमठगमनमिष्टमिति सूचितम् ।

राजा । समाप्तसायन्तनकर्म्मणामत्रभवतां पुनरिह दिदृक्षया निवध्यतेऽयमञ्जलिः ।

पुरोधाः । राजन्नेवमस्तु तदिदानीं साधयामि ।

( इति निष्क्रान्तः । )

देवी । अज्जउत्त, दिट्ठिआ वड्ढसि, जा तावसी सा वीरा ।

[ आर्य्यपुत्र ! दिष्टया वर्द्धसे, या तापसी सा वीरा । ]

राजा । ( सविस्मयम् ) कथमिव ?

देवी । विचारेहि एदं ( इति लिपिमर्पयति ) ।

[ विचारय एतत् । ]

राजा । ( वाचयति ) ।

विधिमुखपरिज्ञातं भूतश्रुतिप्रभवं गुणा-
च्युतभुजगतद्वित्वप्रेक्ष्यं युगानलनायकम् ।
प्रथमघटितो वर्णः स्वान्ते यदाधित तन्महद्-
वसुजलनिधिव्यापि ब्रह्माक्षरं च विचिन्त्यताम् ॥ (१)

---

(१) विधीत्यादि—। विधिमुखानां ब्रह्मप्रमुखाणां परिज्ञातं भूतश्रुतिप्रभवं भूतानि पृथिव्यादीनि श्रुतयो वेदाः तेषां प्रभव आविर्भावो यस्माद् गुणाच्युतभुजं गुणाः परिणामिनः सत्त्वादयः, अच्युतः अविकारी आत्मा तौ भुनक्ति पालयति यत् तयोर्भुजं पालकं वा इगुपधत्वाद् भुजधातोः कर्त्तरि क-प्रत्ययात्, गुणाच्युतभुजं गतद्वित्वप्रेक्ष्यं गतं द्वित्वं द्वैतं येषां तैः प्रेक्षणीयं द्वैतज्ञान-विरहितानां साक्षात्करणार्हं युगानलनायकं युगानि सत्यादीनि चत्वारि अनलाश्च

संख्यासङ्केतलिपिः ( विमृश्य ) अहो पुण्यविनीतं वैदुष्यममुष्याः। यतः संख्यालब्धस्वरव्यञ्जनसङ्घातेन वीरा

---

तेषां नायकं ब्रह्मणः सर्व्वनेतृत्वात्, प्रथमघटितो वर्णः अग्रजन्मा ब्राह्मणः यत् अक्षरं स्वान्ते मनसि आधित अस्थापयत् तत्, वसवो मयूखाः किरणाः तेषां जलनिधिः समुद्रः सूर्य्यः मयूखानां समुद्रं सूर्य्यं व्याप्नोति,—ज्योतिषां ज्योतिरिति श्रुतेः, यद्वा वसून् गणदेवताविशेषान् जलनिधिञ्च समुद्रञ्च व्याप्नोति वसुभिश्चरामीति, मम योनिरप्स्वन्तः समुद्र इति च ऋग्वेदमन्त्रवर्णात्। सर्व्व[illegible]ापीत्यर्थः। ब्रह्मस्वरूपमक्षरं अविनाशि वस्तु, चोऽवधारणे अविनाशि वस्त्वेव [illegible] चिन्त्यताम् विशेषेण चिन्तनीयम्। चितोरोद्धारादेश्चिन्ताविषयत्वेऽपि, अनित्यत्वादेषां ब्रह्मचिन्तैव विशेषेण कर्त्तव्या। यद्वा सर्व्वव्यापित्वाद् ब्रह्मणः चितोरेऽपि ब्रह्मभावना कर्त्तव्येत्येकोऽर्थः। अन्यश्च—लेखिकाया नामबोधकः। तथा हि—विधिमुखानि चत्वारि—तेषु परिज्ञातं चतुःसंख्यया चतुर्थस्वररूपमक्षरं ज्ञायते, चतुर्थस्वरः ईकारः, भूतश्रुतिप्रभवं भूतानि पञ्च, श्रुतयो वेदाश्चतस्रः—अङ्कस्य वामगत्या पञ्चचत्वारिंशत्संख्या (४५) सम्पद्यते। अकारादारभ्य गणितेभ्यः षोड़शभ्यः स्वरेभ्यः पश्चात् सप्तदशादिक्रमेण ककारादिव्यञ्जनगणनायां पञ्चचत्वारिंशत्संख्यया दन्त्यौष्ठ्यवकार उपस्थाप्यते, तस्य प्रभवः वैखरीरूपेण प्रकृष्टप्रकाशो यतः, स्वरहीनवकारस्य वर्णरूपेण बहिरुच्चारणं न सम्भवतीति, विधिमुखपरिज्ञातमक्षरम् ईकारस्तेन वकारस्योच्चारणे 'वी' इति सम्पन्नं भूतश्रुतिप्रभवं विधिमुखपरिज्ञातमक्षरमित्यन्वयः, अक्षरमिति चतुर्थचरणस्थं प्रत्येकमन्वेति, अतएव तत्र तदुत्तरं चकारः प्रयुक्तः। गुणाच्युतभुजगतद्वित्वप्रेक्ष्यमक्षरमित्यन्वयः; गुणास्त्रयः, अच्युतभुजाः चत्वारः, अङ्कस्य वामगत्या त्रयश्चत्वारिंशत्संख्यासम्पत्तिः, ततो रेफस्य पूर्व्वोक्तरीत्या लाभात् तद्गतं तत्प्राप्तं यद् द्वित्वप्रेक्ष्यं द्वित्वसंख्यया ज्ञाप्यमक्षरमाकारः, तेन 'रा' इत्यस्य लाभः, युगानलनायकं युगानि चत्वारि, अनलास्त्रयः तत्संख्ययाऽङ्कवामगत्या चतुस्त्रिंशत्-

दासीति नाम निवेदितं न तु तापसीति, अर्थान्तरं च ब्रह्म-ध्यानोपदेशरूपमिति ।

देवी । अज्जउत्त, अज्ज सुप्पहादं णादिवेर-प्पसमस्स किदे अज्ज ज्जेव उवाओ चिंतणिज्जो ।

[ आर्य्यपुत्र ! अद्य सुप्रभातं (१) ज्ञातिवैरप्रशमस्य कृते अद्यैवोपायश्चिन्तनीयः । ]

राजा । तदानीं वीरा लिपिमजानतापि मया दैवप्रेरितेनेव तदर्थमेव राधसामत्रागमनं प्रार्थितम् । मन्ये—

स्नेहप्रसन्नगुरुपादकृपोपगूढाः
कर्त्तास्महे यदुपपादयिता तदिष्टम् ।

---

संख्यालाभः, तेन दकारस्य पूर्व्वोक्तरीत्योपस्थितिः स्वरहीनस्य दकारस्योच्चारणानर्हत्वेनासत इव स्थितस्य नायकं नेतृ श्रवणपथप्रापकम् । प्रथमघटितो वर्णोऽकारः, यत् ( अक्षरं ) स्वान्ते स्वस्य अन्ते अव्यवहितोत्तरदेशे आधित स्थापितवान् महद् गुरु तदक्षरं आकारस्वरूपम्, 'दा' इत्यस्य लाभः । वसवः अष्टौ, जलनिधयश्चत्वारः, ज्योतिःशास्त्रे तथा व्यवहारात्, मिलित्वा प्रागुक्तरीत्या अष्टचत्वारिंशत्संख्या भवति, तदुपस्थाप्यं सकारं व्याप्नोति विशेषेण प्राप्नोति, तथाविधो ब्रह्मा कमलजश्चतुःसंख्याबोधको यत्र तच्च अक्षरं 'सी' इति चतुःसंख्ययेकारबोधनात् । तद्विचिन्त्यताम् तेन वीरा दासीति नाम सम्पन्नम् ।

(१) सुप्रभातम्=प्रभातस्य सौष्ठवं शुभहेतुत्वं वर्त्तते श्रीगुरूणामादेशमारभ्य वीरा वार्त्ताधिगमपर्य्यन्तानां शुभानां संघटनात्, ज्ञातिवैरं चण्डशक्तकुलयोर्व्विरोधः ।

दैवेन पौरुषमिवोद्बलितं यदि स्यात्
क्षत्रं द्विजाग्र्यमहसा किमतो न सिध्येत् ॥ (१)

तदेहि सन्ध्यामुपास्य मन्त्रयिष्यामहे ।

( इति निष्क्रान्तौ । )

इत्यमरमङ्गलनामनाटके चितोरप्रवेशोपाय-
लाभाभिधः षष्ठोऽङ्कः समाप्तः ।



---

(१) स्नेहेत्यादि—। स्नेहेन अस्मासु वात्सल्येन न त्वस्मद्गुणेन, प्रसन्ना ये गुरुपादाः गुरुचरणाः पूज्यजनयोग्योऽयं पादशब्दप्रयोगः जीवत्सु तात-पादेष्वित्यादिवत् तेषां कृपया उपगूढाः आलिङ्गिताः तया गुप्ताः यत् कर्त्तास्महे करिष्यामहे तत् ( कर्म्म ) इष्टम् अभीष्टम् उपपादयिता उपपादयिष्यति । तत्र हेतुमाह दैवेन उद्बलितं प्रबलीकृतं पौरुषमिव द्विजाग्र्यमहसा द्विजाग्र्यस्य ब्राह्मणस्य तेजसा क्षत्रं क्षत्रियः यदि उद्बलितं स्यात्—अतः पौरुषात् बलाच्च किं न सिध्येत् । क्षत्रमित्यत्रार्द्धर्चादित्वात् वैकल्पिकक्लीबत्वम् । सामान्येन विशेष-समर्थनरूपोऽर्थान्तरन्यासः ।

षष्ठस्याङ्कस्य टीकैषामरमङ्गलनाटके ।
पाठके प्रीतिमाधातुं रचितावसिता मिता ॥

---

# सप्तमोऽङ्कः

ततः प्रविशति भगसिंहः ।

भगसिंहः । आदिष्टोऽस्मि बलसमुद्योजनाय देवेन । किन्तु मदर्थिते कर्म्मणि यावदस्मदनुकूलमादेशं नाधिगच्छामि तावन्न मे सज्जति मनः समराय ।

यदि—शक्तान्वयप्रबलशौर्य्यगुणावरुद्धा
मेवारराजमुपयाति रणे जयश्रीः ।
किन्तु,—सेनाग्रभागपरिचालनगौरवेण
चण्डान्वयो भवति कीर्त्ति विशेषभागी ॥ (१)

तदिदमसहनीयं नाम, तदेतत्प्रतिचिकीर्षया भूयो भूयो देवाय निवेदितमपि नार्थाय कल्पते, सान्त्ववचनेनैव

---

(१) शक्तेत्यादि—। रणे समरे जयश्रीः जयलक्ष्मीः शक्तान्वयस्य शक्तवंशस्य प्रबलः प्रकृष्टो यः शौर्य्यगुणः शौर्य्यमेव गुणः उत्कर्षसाधकधर्म्मः अथच रज्जुः तेन अवरुद्धा आवद्धा अन्यत्र प्रतिरुद्धगमना अथच अवरोधमन्तःपुरमानीता सती मेवारराजम् उपयाति भजते । चण्डान्वयः चण्डवंशः सेनाग्रभागस्य सेनाया वाहिन्याः योऽग्रभागः पुरोभागस्तस्य परिचालनगौरवेण सञ्चालनमहिम्ना कीर्त्ति-विशेषं चण्डवंशीयस्यामुकस्य सैनापत्येन युद्धजय इति ख्यातिविशेषं भजते । पूर्व्वार्द्धे श्लिष्टैकदेशविवर्त्तिरूपकम् उत्तरार्द्धे उक्तनिमित्ता विभावना, शौर्य्यरूप-कारणं विनापि कीर्त्तिविशेषभागित्वोक्तेः ।

निवर्त्तयितुं यतते देवः। पूर्व्वेद्युः सविशेषं पुनरिदमावेदितम्। इहाद्य तदादेशमपेक्षमाणस्य मे मुहूर्त्तमपि युगायमानं भवति।

(नेपथ्ये) भो भो सामन्तभणसिंहप्रभृतयः सेनापतयः! ससैनिका मामनुगन्तुं सज्जीभवन्तु भवन्तः।

भण। अहो! चण्डवंशीयानां प्रधानस्य प्रतिनिधिर्ब्बाँन्दाठक्कुरोऽयं प्रतिपदमुद्योतितात्मगर्व्वमनुशासकः सकलसेनापतीनाम् इत एवाभिवर्त्तते। दुःसहोऽस्य गर्व्वः। तदिदानीम् अप्राप्तदेवनिदेशस्यापि विलम्बासहं मे चेतः, यथातथा भवतु, स्थिरोऽयं मे निश्चयः,—

शक्तात्मजाश्चण्डकुलं निरस्य
सेनाग्रभागं परिचालयन्तु।
मेवारभूर्व्वा हतशक्तवंशा
चण्डान्वयं सम्मनुतां बलाग्र्यम्॥ (१)

(इति साटोपं (२) परिक्रामति)।

---

(१) शक्तात्मजाः शक्तसिंहपुत्राः। निरस्य दूरीकृत्य। सेनाग्रभागपरिचालनं मेवारप्रदेशे विशिष्टसम्मानसूचकम्। वा अथवा हतशक्तवंशा विलुप्तशक्तकुला मेवारभूः चण्डान्वयं बलाग्र्यं सेनाग्र्यं सेनाग्रभागस्थं तत्परिचालकमिति यावत् सम्मनुताम् सम्मानेन गृह्णातु। हतशक्तवंशेत्यनेन एकस्य शक्तवंश्यस्य जीवने चण्डवंशस्य बलाग्र्यतया ग्रहणं न भविष्यतीति सूचितम्। चण्डवंशो बलाग्र्य इति सम्मननं प्रति हतशक्तवंशेति पदार्थस्य हेतुत्वात् काव्यलिङ्गालङ्कारः।

(२) साटोपम् = सगर्व्वम्।

ततः प्रविशति बान्दाठक्कुरः ।

बान्दाठक्कुरः । (भो भो सामन्तभणसिंहप्रभृतयः इत्यादि पुनः पठति)। केवलं देवस्याभियातव्यदेशविशेष-निर्द्देशिनी चरमानुमतिः प्रतीच्यते । (१)

भण । (सत्वरमुपसृत्य सोपहासम्) जयति जयति देवः । नियोगमनुपालयन्तो भृत्या वयमुपस्थिता एव ।

बान्दा । (सक्रोधम्) सामन्तभणसिंह ! कस्तावदयं प्रकारः ? (२)

भण । (सोपहासम्) यथा भवान् अनुशास्ति ।

बान्दा । न खलु पुरातनपद्धतिमुल्लङ्घ्य किञ्चिदनुशिष्टं मया ।

भण । पुरातनपद्धतिरिति कापुरुषवचनम्, युद्धचर्य्या पुनर्व्वीरतन्त्रा ।

बान्दा । (सहास्यम् (३)) भो ! वीराग्रगण्य !

आरम्भे सतुरङ्गभङ्गविधिना शक्तान्वयज्यायसा
वीर्य्यं दर्शितमद्भुतं गुणनिधे ! दौवारियुद्धे त्वया ।

---

(१) प्रातः सज्जितबलैर्भवद्भिर्भवितव्यं ततश्च कतमस्मिन् प्रदेशेऽभियातव्य-मिति मया चरमुखाद् रात्रिवार्त्तामवगम्य वक्तव्यमिति राजनिर्द्देशोऽनेन सूचितः ।

(२) त्वमपि प्रथमश्रेणीस्थः सामन्तः, अहमपि तथेति तुल्ययोरावयोः प्रभु-भृत्यसम्बन्धाभावेऽप्येवमुक्तिस्ते मां प्रत्युपहासस्यैव रूपम् । इत्याशयेनाह—कोऽयं प्रकारः = किमिदम् आचरणम् ?

(३) हास्यम् उपहाससूचकम् आनन्दप्रकाशकञ्च भवति । प्रकरणात् प्रथममेवात्र हास्यं व्याजस्तु आनन्दस्य ।

यद्व्रीड़ा विजिताजिता कुलभुवां भीतिप्रदा सन्ततं
तत्संस्मृत्य सखे ! ध्रु वं सुमहती श्लाघा समालम्ब्यते ॥(१)

भग। (सक्रोधम्) रे वृथागर्व्वित !

जयो भङ्गोऽथवा योऽस्तु युद्धे स खलु मामकः ।
नाहं परबलक्रीतयशाश्चण्डान्वयो यथा ॥ (२)

---

(१) हे गुणनिधे, गुणाकर, (सोपहासम्बोधनम्) शक्तान्वयज्यायसा शक्तकुलज्येष्ठेन त्वया दोवारियुद्धे दोवारिचेत्रस्य युद्धे आरम्भे आरम्भदशायां सतुरङ्गभङ्गविधिना सतुरङ्गं तुरङ्गयौगपद्येन यो भङ्गविधिः पलायन[illegible]रः सतुरङ्गस्य तुरङ्गेन सहितस्य यो भङ्गविधिरिति वा, अथ च सतुरङ्गेन अश्वारूढ़ेन यो भङ्गविधिः भङ्गस्य शत्रुपराजयस्य विधिः विधानं तेन अद्भुतं विस्मयावहं वीर्य्यं दर्शितम्। वास्तवपक्षे, दर्शितमित्यन्तम् उपहासवचनम्, पलायितमिति तदर्थः प्रशंसापक्षे सतुरङ्गेन अश्वारूढ़ेन त्वया कर्त्रा यो भङ्गविधिः भङ्गः शत्रुजयः तद्विधिः, तेन अद्भुतं वीर्य्यं त्वया प्रदर्शितमिति,—अजिता सती कुलभुवां सद्वंशजातानां सन्ततं भीतिप्रदा भयजननी यस्य वीर्य्यप्रदर्शनस्य व्रीड़ा लज्जा त्वया विजिता पलायने न रणस्थल-त्यागस्य लज्जा विज़िता लज्जया स्वगोपनमकृत्वा निर्लज्जेन त्वया स्पर्द्धा क्रियते इत्युपहासपक्षे; प्रशंसापक्षे च, यद् यस्माद् वीर्य्यप्रदर्शनाद्धेतोः अजिता भीतिदा कुलभुवां व्रीड़ा त्वया विजिता, अन्ये कुलभुवो युद्धे वीर्य्यप्रदर्शनं कर्त्तुमशक्नुवन्तो लज्जिताः भीताश्च जनापवादाद् भवन्ति, त्वं तु वीर्य्यप्रदर्शनाद् हेतोर्न लज्जया जितः, लज्जैव त्वया विजिता त्वां न स्प्रष्टुं शशाक। हे सखे, तद् अद्भुतवीर्य्यप्रदर्शनं संस्मृत्य सम्यक् स्मृत्वा ध्रुवं निश्चितं सुमहती अत्यधिका श्लाघा स्पर्द्धा समालम्ब्यते समाश्रीयते। व्याजस्तुतिः।

(२) स जयो वा भङ्गः पराजयो वा मामकः मदीयः खलु, ममैव, न तु परकीयोऽपि स मयात्मन्यारोप्यते इत्येतदाह नाहमिति—चण्डवंशो यथा परबलेन

बान्दा। (सरोषम्) रे निरर्गलमृषाकटुप्रलापिन्! किं कथयसि?—

'परबलक्रीतयशाश्चण्डान्वयः' इति? श्रूयताम्—

आचण्डं रिपुसङ्घभङ्गनिपुणः कोऽस्मत्समो दृश्यते?
कस्यास्मत्प्रबलं बलं ननु यशः क्रीणीमहे येन वा।
शत्रूत्सादन-देशरक्षण-मखे ये सन्ततं दीक्षिता-
स्तेषां नो यशसा रवेरिव रुचा भान्तीतरे सङ्गिनः॥(१)

---

शक्तवंश्यादिबलेन क्रीतं विनिमितं यशो येन सः भवति अहं तथा नेत्यर्थः। अत्र परिवृत्त्यलङ्कारः उपमा च।

(१) आचण्डं मूलपुरुषाच्चण्डात् प्रभृति अस्मत्समः अस्माभिः सदृशः रिपुसङ्घभङ्गनिपुणः रिपुसङ्घभङ्गे शत्रुसमूहपराजये निपुणः कुशलः को दृश्यते दृष्टिगोचरो भवति, वा अथवा अस्मत् अस्मत्तः चण्डवंशापेक्षयेत्यर्थः कस्य बलं सैन्यं शारीरशक्तिर्वा प्रबलम् अधिकम्, येन बलेन यशः क्रीणीमहे विनिमिनुमः। व्यतिरेकं दर्शयित्वान्वयमाह—शत्रूत्सादनेति, शत्रूणां वैरिणाम् उत्सादनम् उन्मूलनं देशरक्षणं देशस्य उदयपुरराजस्य रक्षणं पराधिकारप्रतिरोधेन कल्याणस्थापनं तद्द्वयमेव मखः यज्ञः तत्र दीक्षितानां व्रतिनां नः अस्माकं चण्डवंशीयानामित्यर्थः यशसा कीर्त्या रवेः सूर्य्यस्य रुचेव प्रभयेव इतरे अन्ये सङ्गिनः सहचराः रविप्रभापक्षे इतरे तेजोभिन्नाः सङ्गवन्तः संसृष्टाः भान्ति प्रकाशन्ते सूर्य्यप्रभा संसृष्टपक्षे प्रकाशः दृश्यता उज्ज्वलता च, चण्डवंशसहचरपक्षे प्रकाशः प्रसिद्धिः शौर्य्यख्यातिः।

भण। अरे रे परयशोवञ्चनपातकमलीमसात्मश्लाघिन्!

रणपुरसमरे ममानुजाना-
मखिलबलाचलवल्लयोधनाम्नाम्।
स्मरसि न यदि, नापि तामतुल्यां
स्मरसि मदात्मजपूर्णमल्लकीर्त्तिम्? ॥ (१)

---

सूर्य्यपक्षे प्रभासंसर्गो द्विविधः संयोगरूपः प्रतिबिम्बरूपश्च, घटादयो रविप्रभासंयुक्ता दृश्या भवन्ति, दर्पणादयः प्रतिबिम्बोपेता उज्ज्वला भवन्ति। एवं च यथा सूर्य्यस्य प्रकाशो न तत्सङ्गिगुणेन, तथा चण्डवंशीयानां यशो न तत्सहचराणां शक्तवंश्यादीनां यशसा सम्पद्यते प्रत्युत त एव चण्डवंशीयानां यशसा ख्यातिभाजो भवन्तीति भावः। अत्र रूपकमुपमा च।

(१) भणजीति प्रसिद्धो भणसिंहः शक्तसिंहस्य ज्येष्ठपुत्रः, तदनुजाः षोडश, तेषु अखिलो बलोऽचलो वल्लो योधश्चैते पञ्च महावीराः। दिल्लीश्वरस्य द्वितीयं मेवाराभियानं रणपुरेऽभूत, तत्राखिलादीनां विक्रमेण दिल्लीश्वरबलं पराजितम्। भणसिंहपुत्रः पूर्णमल्लोऽल्पवयस्कोऽपि विशिष्टविक्रमेण युध्यमानो बहूनरीन् निपातयन् सम्मुखसमरे निहतः। एतदाह—रणपुर इति। अखिलादिनाम्नां ममानुजानां यदि न स्मरसि, स्मरणार्थधातुयोगे कर्म्मणि वैभाषिकी षष्ठी, ममानुजान् यदि न स्मरसीत्यर्थः। तां प्रसिद्धाम् अतुल्याम्, अल्पवयस्कस्य बहुशत्रुवीरनिपातनपूर्व्वकवीरशय्याग्रहणजन्याम् अनुपमां कीर्त्तिमपि न स्मरसि इति काकुः, किं न स्मरसि? इत्यर्थः। पूर्णमल्लवीर्य्यकीर्त्तिस्तदानीं सर्व्वैरुद्गीता, तद्विस्मरणं न सम्भवति, तद्गोपनं तु सम्भवत्येव भवादृशामिति व्यङ्गः।

ये तावत् केशवदास-मुकुन्ददास हरिदासादयः(१) कुला-न्तरजाः तेषामप्यात्मोत्सर्गं (२) बहुकृत्वो जवनविताड़नस्य निदान (३) मपि विस्मृतवानसि ? अथवा कृतमनेन अलीकात्मश्लाघारतस्य (४) ते परगुणस्मारणेन, श्रूयताम्—

यदि रे बलाधिकतया प्रगल्भसे
त्यज वाग्विसर्गमबलाजनोचितम् ।
कुरु शस्त्रमुद्यतमशस्त्रपाणिषु
प्रहरन्ति शक्ततनया न जात्वपि ॥ (५)

---

(१) केशवदासः चौहानसंज्ञकक्षत्रियः मुकुन्ददासहरिदासौ राठोरसंज्ञक-क्षत्रियौ । आदिपदेन झालाशनिगुर्व्वादीनां ग्रहणम् ।

(२) एते समरक्षेत्रे शत्रून् निघ्नन्तो वीरगतिमलभन्त । आत्मोत्सर्गम् = जवन-विताड़नाय जीवनसमर्पणम् ।

(३) तेषामात्मोत्सर्गदर्शनेन सर्व्वे क्षत्रियवीराः प्राणोत्सर्गपणाः युयुधिरे, तस्मान्मेवारनाथस्य जयोऽभवत्, निदानम् आदिकारणं केशवदासादीना-मात्मोत्सर्ग इत्यर्थः ।

(४) अलीकात्मश्लाघारतस्य परगुणस्मारणं विफलम्, स्मरणेऽपि तदनभ्युप-गमादिति भावः ।

(५) रे इति नीचसम्बोधनम् । बलाधिकतया बलैरधिकाः श्रेष्ठा वयमित्यभि-मानेन प्रगल्भसे धृष्टतां करोषि अबलाजनोचितं स्त्रीजनयोग्यम्, वाग्विसर्गं वाचां विसर्गं कण्ठतो बहिःप्रकाशनं त्यज संवृणु । शस्त्रमुद्यतं कुरु, उद्यतशस्त्रो भव । शक्ततनयाः जातु कदाचिद् अपि अशस्त्रपाणिषु न प्रहरन्ति, अस्त्राघातं न कुर्व्वन्ति । सामान्येन वैधर्म्येण विशेषस्य चण्डवंशीयपुरुषविशेषस्यास्त्रधारण-समर्थनादर्थान्तरन्यासः । मञ्जुभाषिणीच्छन्दः ।

एवं च (१),—

भवत्वेकतश्चण्डवंशस्तवासौ
भवत्यन्यतः शक्तवंशो ममायम् ।
द्वयोराहवे यत्र पक्षे जयः स्याद्
अनीकाग्रणीस्तस्य नेतैव नान्यः ॥ (२)

इतीमं वीरजनोचितमङ्गीकुरु समयबन्धम् ।

बान्दा । अरे पलायनवीर ! अनवसरोऽयमात्मश्लाघ्यस्य इत्यद्यापि बान्दाठक्कुरस्य पुरतः परिस्फुरसि, यदि पुनस्तत्रैव तवेदृगाग्रहः, तथैवास्तु ।

( इति खड्गमुद्यच्छति । )

उभौ । शृण्वन्तु, सर्व्वे एव मामकीनाः—

व्यालोलभल्लकरवालकरालरंह-
श्चण्डान्वयज्वलनतेजितहेतितेजः ।

---

(१) एवम् = आवयोः शस्त्रग्रहणे, चः समुच्चये, कर्त्तव्यान्तरद्योतनाय ।

(२) तव असौ चण्डवंशः एकतः एकस्यां दिशि भवतु अस्तु, मम अयं शक्तवंशः अन्यतः अपरदिशि भवतु, असावित्यनेन स्वविप्रकर्षः अयमित्यनेन स्वसन्निकर्षः सूचितः । द्वयोः कुलयोराहवे युद्धे यत्र यस्मिन् पक्षे जयः तस्य पक्षस्य नेता नायक एव अनीकाग्रणीः मेवारराजसेनाग्रभागपरिचालकः स्यात् ; अन्यो न स्यात् अनीकं सेना । जयेन नेतृत्वस्य विनिमयात् परिवृत्तिव्यङ्गः, क्रयादि-शब्दाभावात् । भुजङ्गप्रयातं छन्दः ।

भस्मीकरोतु गुरुगौरवलङ्घनाङ्कः-
क्षोभार्त्तशक्तकुलकण्टकगुल्मजालम् ॥ (१)

उपक्रमस्तु भवत्वावाभ्याम्, तदेहि समरक्षेत्रमवतरामः। (इत्युद्यतखड्गौ परिक्रामतः)।

ततः प्रविशति सम्भ्रान्तः पुरोधाः।

पुरोधाः। भो भोश्चण्डशक्तकुलप्रवीरौ! विरम्यतां विरम्यताम्—



---

(१) हे गौरवलङ्घनाङ्कःक्षोभार्त्त, चण्डान्वयकर्त्तृकं यत् स्वेषां गौरवलङ्घनं तदेव अङ्कः पापं दुःखजनकत्वात् तेन यः क्षोभः वैमनस्यं तेनार्त्तः पीड़ितः तत्सम्बोधने, (अङ्कः शब्दः सकारान्तः पापवाची) हे चण्डान्वयज्वलन चण्डवंशस्य दहनतुल्य, हे गुरु वृहत्तर शक्तकुल! (नपुंसकलिङ्गकुलशब्दविशेषणत्वेनात्र गुरुशब्दस्य नपुंसकलिङ्गत्वात् संबुद्धौ गुणस्य वैकल्पिकतया हे गुरु इति।) ते तव अजितहेतीनाम् अपराजितानामस्त्राणां तेजः, कण्टकगुल्मजालं क्षुद्रशत्रुगुल्मसमूहम् अर्थात् चण्डवंशं भस्मीकरोतु। व्यालोलेत्यादिरंहोऽन्तं—हेतितेजोविशेषणम्। इति भणसिंहोक्तिपक्षः। व्यालोल·········रंहाः चण्डान्वय इति कर्म्मधारयसमासः; स एव ज्वलनः पावकः तस्य तेजितानां निशितानाम् उज्ज्वलानाञ्च हेतीनाम् अस्त्राणां शिखानाञ्च तेजः, गुरुगौरवेत्यादिजालमित्यन्तं गुरूणां पूज्यानाम्, गौरवलङ्घनेन यदङ्कः तेन यः क्षोभः खेदः तेन ऋतः प्राप्तः (ऋते च तृतीयासमासे इति वार्त्तिकसूत्रेण वृद्धिविधानात् क्षोभार्त्त इति) विचलितं दार्ढ्यच्युतं यत् शक्तकुलं तत्स्वरूपकण्टकगुल्मजालं भस्मीकरोतु, इति बान्दाठक्कुरोक्तिपक्षः। व्यालोलैः प्रचलितैः भल्लकरवालैः भल्लास्त्रतरवारिभिः करालं भीषणं रंहो वेगः प्रसर इति यावत् यस्येति, पक्षद्वये समानम्।

जन्मभूमेः परिक्लेश-हानये भवदायुधम् ।
न तत्क्लेशकृते भ्रातृ-हत्यायां विनियुज्यताम् ॥ (१)

उभौ । (विलोक्य) अये ! भगवदेकलिङ्गप्रधान-पुरोधाः शैलदेवः प्रतिषेधवाचमादत्ते, कष्टमन्तरायः समापतितः । (उद्यतं खड्गं प्रतिसंहृत्य) । आर्य्य ! वन्दे । (इति प्रणमतः) ।

पुरोधाः । अन्योन्यविरोधरहिताश्चिरं जन्मभूमि-मङ्गलाय जीवन्तु श्रीमन्तः ।

बान्दा । आर्य्य ! मदोद्धतानां शासनं न विरोधः । तथाप्यनतिक्रमणीयमार्य्यवचनमिति ततोऽपि विरतोऽस्मि ।

भण । आर्य्य ! बलाधिकानां बलाग्रग्यनेतृत्वं जन्मभुवो मङ्गलायैव, तदर्थमयमस्माकमुद्यमः, तथापि ब्राह्मणप्रतिषेध इति रणां विरतोऽस्मि ।

पुरोधाः । वत्स भणसिंह ! विदितमेव भवतां यदय-

---

(१) तत्क्लेशकृते तस्या जन्मभूमेः क्लेशः तत्क्लेशः तस्य कृते तदर्थम्, कृते इत्यस्याव्ययत्वेऽपि तेन षष्ठीसमासो न निषिद्धः 'पूर्व्वोत्तरसाहचर्य्यात् कृदव्ययमेव (निषेधसूत्रे) गृह्यते' इति रक्षितोक्तेः तस्याः सिद्धान्तकौमुदीसम्मतत्वाच्च । भ्रातृहत्यायां एकजन्मभूमिकत्वाद् भ्रातृशब्दप्रयोगः । भ्रातृहत्यायां न विनियुज्यताम् । विनियुज्यतामिति कर्म्मणि प्रयोगः । पूर्व्वार्द्धवाक्यार्थहेतुकं काव्यलिङ्गम् ।

मर्थो मानसिंहप्रणिधिना कुलद्वयविरोधाय समुद्भावितः।
तत्र पूर्व्वमवहितोऽपि कथमिदानीं व्यामोहमापद्यसे ?

भग। (स्वगतम्) किमिदं देवस्य वचनम् ? उत स्वयं पुरोधसः ? यद्भवतु। (प्रकाशम्) आर्य्य ! अस्मद्विवेकफलमिदम्, न व्यामोहः, तथा हि—

न शत्रुरपि हेयोक्तिः सूर्य्यं सूर्य्य इति ब्रुवन्।
न मित्रमप्युपादेयवचनं ब्रुवदन्यथा॥ (१)

तद्यंद्यपरीक्षितबलानामयोग्यानामपि प्राधान्यम् अत्रभवद्भिर्ब्बहुमन्यते तद्धतमेव जन्मभूमिमङ्गलम्।

पुरोधाः। वत्सौ ! विदितमेव भवतोः, युष्मत्कुलरिपुर्म्मानसिंहो दिल्लीश्वरकृतावमानादुन्मत्तो दिल्लीनगरादम्बरपुरं नीतो भिषग्भिरुपचर्य्यते ख्यापितश्च विश्रामसुखमनुभवतीति। वदन्ति चानपेक्षाः (२) प्रवक्तारः,—

उदयपुरपतिं पराजिगीषुः
स्वकृतिफलेन विमान एव मानः।

---

(१) सूर्य्यं सूर्य्य इति ब्रुवन् तस्मिंस्तद्बुद्धिं जनयन् शत्रुरुपादेयवचनः ग्राह्यवचनो भवति, सत्यत्वात् तद्वचनस्य, अन्यथा = सूर्य्यं प्रकारान्तरेण चन्द्रत्वादिना ब्रुवत् कथयत् मित्रमपि उपादेयवचनं ग्राह्यवचनं न भवति तस्य वचनस्य मिथ्यात्वात्। अप्रस्तुतप्रशंसा।

(२) अनपेक्षाः = पक्षपातरहिताः।

नवजवनपतेर्व्विरागपात्रं
दिनविकलेन्दुवदम्बरेऽस्ति लीनः ॥ (१)

---

(१) उदयपुरपतिम् उदयपुरराजम् अमरसिंहं पराजिगीपुः पराजेतुमिच्छुः मानः मानसिंहः स्वकृतिफलेन स्वस्य या कृतिः प्रयत्नः चरप्रयोगवाराङ्गनानियोगादि-प्रवृत्तिः तत्फलेन तत्फलीभूतेन कर्म्मणा नवजवनपतेः सेलिमस्य विरागपात्रं विरागभाजनम् अतएव विमानः विगतमानः सन् दिनविकलेन्दुवद् दिनपरिम्लान-चन्द्र इव अम्बरे अम्बराज्ये स्वराजधान्याम्, चन्द्रपक्षे आकाशे लीनोऽस्ति, निष्क्रियभावेनावस्थितः चन्द्रपक्षे प्रभाशून्यतया लयप्राप्त इव...प्रायोऽस्ति। जिगीषाहेतुककृतिहेतुकं कर्म्म, कर्म्महेतुको जवनपतेर्व्विरागः तद्धेतुको माननाशः तद्धेतुकाम्बरे निष्क्रियतया स्थितिरिति कारणमालालङ्कारः। अम्बरयोर्भेदेऽप्यभे-दाध्यवसायादतिशयोक्तिस्तन्मूलोपमा च। पुष्पिताग्राच्छन्दः। संक्षिप्तश्लोकस्या-शयस्तु—

भारतेश्वरत्वदशायां जाहाङ्गीरनामप्राप्तो सेलिमो मानसिंहकृतम् उदयपुरपतौ समरसिंहादिचरप्रयोगं वाराङ्गनादिनियोगं ज्ञातवाननुमतवांश्च, तेन च फलसिद्धि-रवश्यम्भाविनीति मानसिंहकर्म्मसाफल्यविश्वासेन निश्चिकाय। पश्चात् तद्वैफल्ये नामरसिंहस्य मानसिंहवर्णिता व्यसनित्वयुद्धभीरुत्वादिवार्त्ता मिथ्येति निश्चयो जातः, अमरसिंहस्य गूढ़समरायोजनवीरत्वयोः स्वल्पीयसा सैन्येन स्वीयप्रभूत-सैन्यविनाशनस्य प्रतीतेश्च ततश्च मानसिंहं प्रति तस्य विरागो जात इति कवेः कल्पना। इतिहासे च कारणान्तरमुक्तम्। फलं तु दिल्लीश्वरस्य विरागः स्वस्य मानभङ्गस्ततश्च मानसिंहस्य स्वराजधान्यां प्रत्यागमनं मनःपीड़ा दिल्लीश्वरकर्म्मवैमुख्येन कियन्तं कालं व्याधिच्छलात्तत्रावस्थानमितीतिहासेन तुल्यम्। फलस्येतिहासप्रसिद्धिमनुसृत्य नायकचरितोत्कर्षाय कल्पनम्—कालिदासभवभूतिभट्टनारायणादिभिरङ्गीकृतमित्येतत्कविनाप्यनुष्ठितमिति तत्त्वम्।

यथा भवतु प्रशममुपलम्भितो दैवेन। तन्नियुक्तः सेनापति-रपसारितश्चितोराज्जवनराजेन। अन्यच्चास्ति कल्याणकारणं किञ्चित् (१) तदेवमभ्युदयकाले यदात्मबलविध्वंसनी युष्मत्-प्रवृत्तिस्तदिदं विधिवैमुख्यमेव मन्ये।

भग। आर्य्य! अभ्युदयाकाङ्क्षी तावत्—

यदमङ्गलचिह्नं तत् पुष्टिरूपमपि त्यजेत्।
तनौ शोथसमुद्भूता पीनतापि निवार्य्यते॥ (२)

तन्मे स्वबलपोषणी प्रवृत्तिरेवेयमन्यथा सम्भाव्यते साम्प्रत-मार्य्येण (३)।

पुरोधाः। (साधिक्षेपम्) तिष्ठत्विदमसूयाविजृम्भितम्।

वान्दा। आर्य्य!

---

(१) अन्यदित्यनेन चितोरस्य वर्त्तमानावस्था पूर्व्वाङ्कवर्णिता सूचिता, रहस्यत्वेन नोक्ता।

(२) अमङ्गलस्य यत् चिह्नं लक्षणं पुष्टिरूपमपि पुष्टे रूपमिव रूपं यस्य तदपि। त्यजेत् परिहरेत्। पुष्टिः वृद्धिः कर्त्तृपदं गद्योक्तम् अभ्युदया-काङ्क्षीति। एतत् समर्थयते तनौ शरीरे शोथसमुद्भूता श्वयथुरोगाद् उत्पन्ना पीनतापि स्थूलत्वमपि निवार्य्यते औषधादिना निवर्त्त्यते। तस्याः पीनतायाः आपातपुष्टिरूपत्वेऽप्यमङ्गलस्य रक्ते सलिलाधिक्याद् भाविनोऽनर्थस्य लक्षणत्वात्। विशेषेण सामान्यसमर्थनादर्थान्तरन्यासः।

(३) तत् तस्मात् स्वबलपोषणी जन्मभूमिहितार्थं स्वशक्तेर्वृद्धिकरी एषा मे प्रवृत्तिः चण्डवंशप्रभावनाशने प्रयत्नः साम्प्रतम् आर्य्येण भवता अन्यथा जन्म-भूमेरहितकरोति सम्भाव्यते बुध्यते।

एवं विकत्थमानस्य मूढस्योत्पथवर्त्तिनः ।
विदधे शासनं न्याय्यं न चेद्विघ्नकरो भवान् ॥

पुरोधाः । वत्सौ ! ब्राह्मणोचितं यतितं मया श्रीमन्तौ प्रशममुपलम्भयितुम्, तत्राशक्तः पुनरिदानीं विदितवृत्तान्तस्य राज्ञो निदेशम् अनुश्रावयामि ।

उभौ । ( कृताञ्जलिः ) किमाज्ञापयति देवः ।

पुरोधाः । "द्वौ पक्षावन्तलादुर्गं (१)
समामाक्रामतां पृथक् ।
प्रागन्तर्व्विशतस्तत्र
भाव्या सेनाग्रनेतृता ॥" इति ।

---

(२) द्वौ पक्षौ शक्तवंशः चण्डवंशश्चेति वादिप्रतिवादिनौ अन्तलादुर्गं पृथग् विभिन्नांशावच्छेदेन समं युगपत् आक्रामताम् आस्कन्दताम् । तत्र = तयोः पक्षयोर्म्मध्ये, प्राक् प्रथमम् अन्तर्व्विशतः दुर्गाभ्यन्तरं प्रविशतः पक्षस्येत्यर्थात्, सेनाग्रनेतृता सेनाग्रनायकत्वं भाव्या = अवश्यलभ्या । प्राप्त्यर्थकभूधातोरावश्यके ण्यति कर्म्मणि रूपम् । अन्तर्व्विशत इत्यत्र कर्त्तरि षष्ठी । अस्य विवरणम्— "अन्तला"—इतिहासप्रसिद्धस्थानविशेषः, यः उण्टला इति नाम्ना तद्देशीयैरुच्यते । यत्र किल मेवारपतीनां तदभिधया प्रसिद्धो दुर्ग आसीत्; हृतश्च पश्चाज्जवनैः । नीतिनिपुणो मेवारपतिः श्रीमानमरसिंहोऽन्योन्यप्रतिद्वन्द्विचण्डशक्तकुलयोरेकतरप्राधान्यनिर्णयस्य हेतुत्वेन तत्र प्रथमप्रवेशमेव निरदिक्षत् । तदुत्साहद्विगुणितविक्रमाः कुलद्वयप्रवीरा अहमहमिकतया तस्य द्वावंशावाक्रान्तवन्तः । तत्र चण्डवंशप्रधानपुरुषः—प्रथमप्रवेशोद्यतो जवनैर्न्निहतोऽपि—तदनन्तरस्थानीयेन वीरेण बान्दाठक्कुरेण दुर्गस्योपरि निक्षिप्तस्ततश्च चण्डवंशीयानामुत्कटजयध्वनिबहुली-

अयमर्थश्चण्डकुलश्रेष्ठेन शालुम्ब्रापतिनापि स्वीकृतः। तदेतद्राजनिदेशपत्रं सद्य एव लप्स्यते श्रीमद्भ्याम्।

उभौ। आर्य्य! यद्येवं तदेते साम्प्रतमेव बलसमुद्योजनाय प्रतिष्ठामहे। (इति त्वरितं निष्क्रान्तौ)।

पुरोधाः। एतदेवास्मद्देशस्यानर्थाय, यत् सर्व्वगुणसम्पन्ना अपि एकेन सजातिद्वेषेण गोमूत्रविन्दुना दुग्धकुम्भा इव नितरां विनश्यन्ति।

(नेपथ्ये—कलकलः)।

विलोक्य—

अमी साक्षान्नृपादेश-वर्द्धितोत्साहशक्तयः।
अभियान्त्यन्तलादुर्गं चण्डशक्तसमुद्भवाः॥

तदहमपि स्वकृत्यसम्पादनाय साधयामि।

(इति निष्क्रान्तः)।

इत्यमरमङ्गलनामनाटकेऽन्तःक्षोभनिवारणाभिधः
सप्तमोऽङ्कः समाप्तः।

---

कृतत्वरावेगः शक्तकुलप्रवीरपुरुषो निजमृत्युनापि स्वपक्षप्राधान्यं रक्षितुकामो द्वारकीलश्रृङ्खलनिरुद्धं स्वदेहमुद्धर्त्तुं स्वपक्षहस्तिनं तथा न्ययुङ्क्त यथा—तस्य स्वर्गद्वारं विपक्षस्य च दुर्गद्वारमपावृतं बभूव किन्तु चण्डवंशस्यैव प्रथमप्रवेशो जातः। इत्यैतिहासिकी वार्त्ता।

सप्तमाङ्कस्य टीकेयं नाटकेऽमरमङ्गले।
गले पाठार्थिनां न्यस्ता समाप्ता विमलाभिधा॥

---

# अष्टमोऽङ्कः

## विष्कम्भकः ।

ततः प्रविशति सुबला ।

सुबला । सिद्धतावसीं पेक्खिदुं भट्टिणी सविसेसं उक्कंठिदा । अहं उण तं अण्णेसिदुं जधादंसिदं एदं भअवदीए चिदोरेस्सरीए मंदिरंगणं असमए आअदा । जदो इमस्सिं रत्तिसेसे तावसी इध णिअमेण आअच्छदि त्ति जाणिदं मए । ( विलोक्य ) दाणीं इध ण कोवि दीसदि । ता जाव क्खणं पड़िपालेमि ।

[ सिद्धतापसीं प्रेक्षितु भर्त्री सविशेषम् उत्कण्ठिता । अहं पुनः तां अन्वेष्टुं यथादर्शितम् एतद् भगवत्याः चितोरेश्वर्य्याः मन्दिराङ्गनम् असमये आगता । यतः अस्मिन् रात्रिशेषे तापसी इह नियमेन आगच्छतीति ज्ञातं मया । इदानीम् इह न कोऽपि दृश्यते । तद् यावत् क्षणं प्रतिपालयामि । ]

( ततः प्रविशति मयूरपिच्छसम्मार्ज्जनीहस्ता सिद्धतापसी । )

सिद्धतापसी । अहो बलवत्तरः स्नेहबन्धः, येन देव्या देवस्य च दर्शनाय तथा समुत्कण्ठा जायते, नवपटमण्डपसन्निवेशेन(१)

---

(१) पटमण्डपसन्निवेशेन = पटनिर्म्मितः मण्डपः पटमण्डपः (मध्यपदलोपि-कर्म्मधारयः) वस्त्रनिर्म्मितगृहं पटस्य मण्डप इति षष्ठीतत्पुरुषो वा, जन्यत्वसम्बन्धः षष्ठ्यर्थः, समवाय इति न्यायमतम् । अर्थस्तु पूर्व्ववत् । तस्य सन्निवेशः सज्जीकरणं तेन ।

सङ्कुचितायामस्यापि (१) प्राङ्गणस्य सम्मार्ज्जनेऽद्य विलम्बासहमिव मे चेतः, अन्येद्युश्च विलम्ब एव प्रमोदहेतुरासीत्, एतदेव हि मे भगवतीप्रसादलाभस्यैकं साधनम्।

सुबला। ( अग्रतो विलोक्य ) कं पि आअच्छंतं विअ पेक्खासि, मंदो आलोओ, ण विभाविअदि इत्थिआ वा पुरिसो वा।

[ कमपि आगच्छन्तमिव प्रेक्षे, मन्द आलोकः, न विभाव्यते (२) स्त्री वा पुरुषो वा। ]

सिद्ध० ज्ञातं मया तावदार्य्यनारायणादिहागता देवी, देवस्तु शिविकया प्रविश्यार्य्यभद्रदेवाश्रमं परिज्ञाततत्त्वः शालुम्ब्रापतिना देवीदासादिभिः क्षात्रसैनिकैस्तापसयोद्धृभिश्च मन्त्रयितुमवतिष्ठते प्राक् सूर्य्योदयाच्चात्रागमिष्यतीति, तत् त्वरितमेव स्वकर्म्म निर्व्वर्त्तयामि। ( प्राङ्गणधूलिमादाय शिरसि हृदये चार्पयन्ती ) अपूर्व्वोऽयं रेणुमहिमा शान्तमिव मे हृदयम्। ( मयूरपिच्छेन सम्मृजन्ती गायति )—

जननि जन-वन्दिते मम वपुषि निन्दिते
भवदजिररेणुरिति चित्रम्।

---

(१) संकुचितायामस्य = संकुचितः स्वल्पीभूतः आयामः विस्तारो यस्य सः तस्य। चितोरेश्वरीमन्दिरप्राङ्गणं सुविस्तृतमासीत्, इदानीं पटगृहसज्जीकरणेन स्वल्पपरिसरं जातमित्यर्थः।

(२) विभाव्यते = अनुभूयते।

न खलु पितृकानने विकटमृतकानने
शस्यमपि रोहति पवित्रम् ॥
सदनमदिरामदं निरयपरिणामदं
सुखमिति हि नाम निरशेषम् ।
प्रकृतसुखसंस्तव - स्तदनुजनितस्तव
प्रचुरकृपयेति तदुपैषम् ॥
भोगसुखशोकयो-र्भवभुजगतोकयो-
र्ददतमयि मातरवसादम् ।
विहितपरमोदय-क्षपितविषयामय-
प्रशममुपयामि तव पादम् ॥ (१)

---

(१) जननीत्यादि—। हे जनवन्दिते जननि ! निन्दिते मम वपुषि भवदजिररेणुरिति चित्रम् । विकटमृतकानने पितृकानने पवित्रं शस्यमपि न रोहति खलु । निरयपरिणामदं मदनमदिरामदं सुखमिति हि निरशेषं नाम, तव प्रचुरकृपया प्रकृतसुखसंस्तवः तदनुजनित इति तद् उपैषम् । अयि मातः ! भवभुजगतोकयोः भोगसुखशोकयोः अवसादं ददतं विहितपरमोदयक्षपितविषयामय-प्रशमं तव पादम् उपयामि । इत्यन्वयः ।

हे जनवन्दिते = लोकपूजिते, जननि ! निन्दिते मम वपुषि = जन्मना कर्म्मणा च गर्हिते मम देहे, भवदजिररेणुः = भवदीयमन्दिरप्राङ्गणधूलिः रोहतीति शेषः इति चित्रम् आश्चर्य्यम्, चित्रत्वे हेतुमाह—न खल्विति । विकटमृतकानने = मृतकानां शवानाम् आननानि मुखानि, मृतकाननानि, विकटानि तानि यत्र, विकटत्वं विकार-विशेषः तच्च दुर्गन्त्यनुमापकम् एतेन विशेषणेन काशीप्रमुखगङ्गातीरश्मशानव्यवच्छेदः, तस्य पवित्रत्वात्, तत्र मृतानां दुर्गत्यसम्भवात्, तत्स्थानोत्पन्नशस्यादेः पवित्रत्वाच्च,

सुबला। (सहर्षम्) सरसंजोएण आणामि, एसा क्खु अज्जा वीरा, जाए सिद्धतापसी त्ति णाम इध जादं। ता णं उवसप्पामि। (उपसृत्य विलोक्य) ण सो कहणमसिणो केसवासो,

---

अमेध्यप्रभवांस्तथेति स्मृतेरपवित्रस्थानोत्पन्नानां भक्षणेन पापोत्पत्तेरपवित्रत्व-निश्चयात्। हि यतः—तादृशे पितृकानने श्मशाने पवित्रं शुद्धं शस्यम् अपि मुद्गश्वेतसर्षपादिकम् अपि न रोहति न उत्पद्यते अथच नारोहति खलु निश्चये तद्रूद्रस्य धूलिभस्मादेरपवित्रत्वे तु कथैव नास्ति अपिकारेणेत्यर्थः सूचितः। यतः, अपवित्रे श्मशानस्थले पवित्रं शस्यमपि न रोहति, तस्मादपवित्रे मदीयदेहे पवित्राणां भवदीयमन्दिरप्राङ्गणरजसां रोहणासम्भवेऽपि यद्रोहणं तद्विस्मयकारणम्। न खलु पितृकानने इत्यादौ अप्रस्तुतप्रशंसा। अपवित्रे पितृकानने पवित्रशस्यरोहणाभावरूपाद् अप्रस्तुतात्समात्—अपवित्रे गणिकादेहे देवीमन्दिरप्राङ्गणरेणूनां पवित्राणां रोहणा-सम्भवो गम्यते, तेन च गम्यार्थेन चित्रत्वं समर्थ्यते। इति रोहणश्लेषमूलाप्रस्तुत-प्रशंसोपस्थापितोऽर्थान्तरन्यासः। निरयपरिणामदं = निरय एव परिणाम उदर्कफलं तं ददाति यः तम्, मदनमदिरामदम् = मदनः कामः मदिरा मद्यं ताभ्यां यो मदः मत्तता तम्, सुखम् इति सुखस्वरूपमित्यर्थः निरुपमम्, अहं पूर्व्वम् अवधारितवती नाम कुलस्ने, तव प्रचुरकृपया प्रभूतदयया प्रकृतसुखसंस्तवः = यथार्थसुखस्य परिचयः तदनु जनितः तस्य पूर्व्वावधारणस्य अनु पश्चात् उत्पादितः इति हेतोः तद् = यथार्थ-सुखम् उपंपम् = अहं प्राप्तवती। अयि मातः! भवभुजगतोकयोः = संसाररूप-सर्पस्य अपत्यरूपयोः तज्जन्ययोरित्यर्थः भोगसुखशोकयोः विषयसाक्षात्कारजनित-सुखदुःखयोः अवसादम् = क्षयं ददतं जनयन्तं तव पादमित्यनेनान्वयः, पादमित्यस्य विशेषणमाह—विहितेत्यादि। विहितः जनितः परमोदयः महान् अभ्युदयः येन सः क्षपितः तनूकृतः विषयामयः विषयरोगः येन सः तयोर्व्विशेषणकर्म्मधारयः जनितपरमोदयं यथा स्यात् तथा क्षपितः विनाशितः विषयामयो येनेति वा तादृशः

ण तं चइदहरिणीपेक्खणं णअणं, ण सो कसिदसुवण्ण-सवण्णो वण्णो, एसा उण रुक्खसुक्खजड़ा थिरदिट्ठी आरत्तवण्णा। ता किं अज्जा वीरा ? ( निपुणं निरूप्य सहर्ष-विस्मयम् ) अह्मो अज्जा वीरा ज्जेव। एरिसो विसेसो जादो ! ( प्रकाशम् ) अज्जे वंदामि ( इति नमति )।

[ स्वरसंयोगेन जानामि, एषा खलु आर्य्या वीरा, यस्याः सिद्ध-तापसीति नाम इह जातम्। तद् एनाम् उपसर्पामि। न स कृष्णमसृणः केशपाशः, न तत् चकितहरिणीप्रेक्षणं (१) नयनम्, न सः कषित-सुवर्णसवर्णो वर्णः (२), एषा पुनः रूक्षशुष्कजटा (३) स्थिरदृष्टिः (४) आरक्तवर्णा। तत् किम् आर्य्या वीरा ? अहो आर्य्या वीरैव। ईदृशो विशेषो जातः ! आर्य्ये वन्दे। ]

सिद्ध। ( दृष्ट्वा सहर्षम् ) सखि सुबले, चिराद्दृष्टासि,

---

प्रशमः शान्तिः यस्मात् स तम्, उपयामि शरणं करोमि इत्यर्थः। भवभुजगेत्यादौ रूपकम्। मात्राच्छन्दः।

(१) चकितहरिणीप्रेक्षणम् = चकिता भीता या हरिणी तस्याः प्रेक्षणं दृष्टिरिव प्रेक्षणं दृष्टिः यत्र तत् नयनम्।

(२) कपितसुवर्णसवर्णः = कषितं च तत्सुवर्णञ्चेति कषितसुवर्णं विशुद्धतया परीक्षितं स्वर्णमित्यर्थः तेन सवर्णः सदृशः।

(३) रूक्षशुष्कजटा = रूक्षा अचिक्कणा च शुष्का तैलहीना च जटा यस्याः सा।

(४) स्थिरदृष्टिः = स्थिरा अचञ्चला दृष्टिर्य्यस्याः—साधनपराणां दृष्टिरेकत्र-निबद्धा भवतीति सूच्यते।

परिष्वजस्व माम् । (इत्यन्योन्यमालिङ्गति)। अपि कुशलं देवस्य देव्या भवतीनाञ्च ?

सुबला। अज्जे तुए विणा कुदो कुसलं। ता पुच्छामि— किं एव्वं दारुणा सि ? को भट्टिणीए को वा अह्माणं अवराहो जं अविण्णविअ तुमं पलाइदा ?

[आर्य्ये! त्वया विना कुतः कुशलम्। तत् पृच्छामि,—किमेवं दारुणासि ? को भर्त्र्याः को वा अस्माकमपराधः यत् अविज्ञाप्य त्वं पलायिता ?]

सिद्ध। एहि, निर्ज्जनस्यास्य पटमण्डपस्य पार्श्ववर्त्तिनी सर्व्वं कथयामि।

सुबला। तह। [तथा।] (इति उभे तत्र गच्छतः)

सिद्ध। सखि जानामि,—अयोग्यायामपि देव्याः स्नेहं भवतीनाञ्च। स्वप्नलब्धदेवतादेशेनैवं कृतवत्यस्मि।

सुबला। अविण्णविअ पलाअणं किं सिविणआदेसो देवदाए ?

[अविज्ञाप्य पलायनं किं स्वप्नादेशो देवतायाः ?]

सिद्ध। न हि, न हि, किन्तु दिल्लीश्वरस्य महाराजमानसिंहस्य च विप्रियकारिणी तावदहं चितोरगमनानुमतिं देव्याः कथमपि न प्राप्स्यामि, न चाप्राप्तचितोरपुरायाः स्वप्नादेशपालनसम्भव इति च विमृश्य अनन्यगतिकैवानिवेदितपलायनापराधेन दूषितास्मि।

सुबला। जइ णाम ण रहस्सं, सिविणअं भणादु अज्जा।

[ यदि नाम न रहस्यं स्वप्नं भणतु आर्य्या। ]

सिद्ध। सखि, देवतादत्तः स्वप्नो रहस्य एव। एतत्पुन-र्व्विज्ञापयामि—सफलप्रायः स्वप्नः, एकमीप्सितमवशिष्यते।

सुबला। ( सस्मितम् ) तं भट्टिणी ज्जेव णिव्वट्टइस्सदि।

[ तद् भर्त्री एव निर्व्वर्त्तयिष्यति (१)। ]

सिद्ध। ( स्वगतम् ) अन्यादृशो भावोऽस्या ज्ञायते। भवत्वेवम्। ( प्रकाशम्—चिवुकं धृत्वा ) सखि! भगवतां श्रीभीमानन्दस्वामिपादानामुपदेशेन (२) या खलु लब्धस्वरो-दयविज्ञानलेशा (३) स्त्री-मूर्ख-बहुलेऽस्मिन्नगरे सिद्धतापसीति

---

(१) निर्व्वर्त्तयिष्यति = सम्पादयिष्यति। एकमीप्सितमवशिष्यत इति सिद्धतापसीवचनादमरसिंहेन सह तस्या विवाहरूपमभीष्टं मनसिकृत्यैवमुक्तम्।

(२) श्रीभीमानन्दस्वामिपादानाम् = गुरूणां सिद्धानां च नामग्रहणात् पूर्व्वं श्रीशब्दप्रयोगः कर्त्तव्यः—यथा,

देवं गुरुं गुरुस्थानं क्षेत्रं क्षेत्राधिदेवताम्।
सिद्धं सिद्धाधिकारांश्च श्रीपूर्व्वं समुदीरयेत्॥

स्वामिपादाः इति पूज्यताव्यञ्जकः पादशब्दः। भीमानन्द इति नाम, स च महाराणावंशीयानां कुलगुरुः, स्वामीत्युपनाम सन्न्याससूचकम्।

(३) लब्धस्वरोदयविज्ञानलेशा = स्वरोदयः नासावायुगतिविशेषेण शुभा-शुभनिर्णायकशास्त्रम् तदीयस्य विज्ञानस्य तदुपदिष्टविशिष्टज्ञानस्य लेशः क्षुद्रतमांशः, लब्धः शिक्षितः स्वरोदयविज्ञानलेशो यया सा।

ख्यातिमुपगता, त्वन्तु तन्मनोरथदृश्वरी (१) तामप्यतिक्रामसि (२)।

सुवला। (सवैलक्ष्यम्) अज्जे, मा अण्णधा संभावेहि, भोदीए पहावेण आसिसा अ सिरीगुरूण चिदोराधिआरो पच्चासण्णो त्ति भट्टिणीए णिच्चओ। संवुत्ते तस्सिं अप्पडिवंधो भट्टिणा दे उव्वाहो णिव्वट्टणिज्जो त्ति भट्टिणी कामेदि।

[आर्ये मा अन्यथा (३) सम्भावय, भवत्याः प्रभावेण आशिषा च श्रीगुरूणां चितोराधिकारः प्रत्यासन्न इति भर्त्र्या निश्चयः। संवृत्ते तस्मिन् अप्रतिवन्धः भर्त्रा ते उद्वाहो निर्व्वर्त्तनीय इति भर्त्री कामयते।]

सिद्ध। (सविस्मयम्) सखि! किमुच्यते—मेवारनाथो वाराङ्गना (४) पतिर्भवत्वित्यभिलाषो देव्याः?

सुवला। अध इं, भट्टुणं उद्दिसिअ भट्टिणीए भणिदं—वारंगणाओ णाइआओ होंति त्ति कामसुत्तआराणं मुणीणं मदं।

[अथ किम्, भर्त्तारम् उद्दिश्य भर्त्र्या भणितम्—वाराङ्गनाः नायिकाः भवन्तीति कामसूत्रकाराणां मुनीनां मतम् (५)।]

---

(१) तन्मनोरथदृश्वरी = तस्याः सिद्धतापस्याः मनोरथस्य मनोभावस्य दृश्वरी प्रत्यक्षकर्त्त्री दृशधातोः क्वनिप् प्रत्ययस्ततः स्त्रीत्वत्ययात्।

(२) तामप्यतिक्रामसि = तदपेक्षया आधिक्येन वर्त्तसे प्रश्ने कृते तदुत्तरदानं स्वरोदयविज्ञानेन सिद्धतापस्या क्रियते त्वं तु प्रश्नरूपेणापि यदनागतं तस्यापि समाधानं करोषीति तदपेक्षया आधिक्यम्। परिहासोऽयम्। (३) अन्यथा = परिहासरूपेण। (४) वीरदत्ता-जनन्या मरणसमये रहस्यप्रकाशानन्तरं वाराङ्गनात्वपरिज्ञानादियमुक्तिः। (५) वेश्यानां पुनर्भुवां कौमारपरिणीतानां स्वदाराणां च नायिकात्वं कामसूत्रकृता वात्स्यायनेनोक्तम्।

सिद्ध । अहो स्नेहस्य प्रभावः !

साध्वीसङ्गविवर्जितेऽतिमलिने वाराङ्गनानां कुले
सम्भूतापि कथञ्चिदागतयदासत्तिः कृतार्थास्म्यहम् ।
देवी सैव सतीशिरोमणिरपि स्नेहातिभारानता
मत्प्रीत्यै यतमानमानसतया दोषं न मे पश्यति ॥ (१)

सुवला । सिणिद्धअणदुक्खमोअणरदा भट्टिणीए पइदी ।

[ स्निग्धजनदुःखमोचनरता भर्त्र्याः प्रकृतिः । ]

सिद्ध । सखि ! देवी मे प्रेमतन्त्रे (२) गुरुः, देवश्चोपास्य-देवता । गुरोरधीतं मया—

---

(१) साध्वीत्यादि—। साध्वीसङ्गविवर्जिते अतिमलिने वाराङ्गनानां कुले सम्भूतापि कथञ्चित् आगतयदासत्तिः अहं कृतार्था अस्मि । सैव देवी सतीशिरोमणिः अपि स्नेहातिभारानता (सती) मत्प्रीत्यै यतमानमानसतया मे दोषं न पश्यति । इत्यन्वयः ।

साध्वी पतिव्रता तस्याः सङ्गः मिलनं तेन विवर्जिते रहिते अतिमलिने कलङ्किते वाराङ्गनानां वेश्यानां कुले वंशे सम्भूता उत्पन्ना अपि कथञ्चित् केनापि प्रकारेण दैवगत्या इत्यर्थः आगतयदासत्तिः आगता आयाता यस्याः आसत्तिः सन्निधानं यत्र सा, अहं कृतार्था धन्या अस्मि । सैव देवी राजमहिषी स्वयं सतीशिरोमणिः सतीनां श्रेष्ठा अपि स्नेहातिभारानता स्नेहातिशयात् आनता आवर्जिता स्नेहकोमला सतीत्यर्थः मत्प्रीत्यै मदीयसुखनिष्पत्त्यर्थं यतमानमानसतया साग्रहप्रवृत्तचित्ततया मे मम दोषं न पश्यति । मदीयदोषादर्शने स्नेहातिशय एव कारणम् । अन्यथा सर्व्वथा हेयां मां सपत्नीत्वेन कथमङ्गीकर्त्तुं प्रयतेतेति भावः । काव्यलिङ्गमलङ्कारः ।

(२) प्रेमतन्त्रे = प्रेमसिद्धान्ते, प्रेमतत्त्वशिक्षायामिति यावत् ।

उपास्यदेवे जलधिस्वरूपे
विलापयन्ती तटिनीव या स्वम् ।
तद्भावभावान्न पृथग् विभाति
सा विन्दते प्रेमसुखं न चान्या ॥ (१)

अतोऽहं ब्रवीमि—

प्रेम्णः सुखं येन जनेन लब्धं
न तस्य शारीरसुखेऽभिलाषः ।
सुधारसास्वादनतर्पिताय
न रोचते पङ्किलवारिधारा ॥ (२)

---

(१) या ( नारी ) जलधिस्वरूपे—समुद्रस्थानीये उपास्यदेवे प्रेमसाधनविषये अतएव देवे देवत्वेन प्रतीयमाने तटिनी नदी इव स्वम् आत्मानं विलापयन्ती विलीनं कुर्व्वती तस्य = उपास्यदेवस्य तटिनीपक्षे जलधेः, यो भावः = आन्तरधर्म्मः तटिनीपक्षे रूपम्, तस्य भावात् = प्राप्तेः, पृथक्—भिन्नतया न विभाति प्रकाशते, नारीपक्षे समान्तःकरणतया मतभेदाभावादेकत्वेन प्रतीयमाना तटिनीपक्षे समुद्ररूपतया नदीत्वेन पृथग् न विभाव्यते—सा प्रेमसुखं प्रेमानन्दं लभते । अन्या एतद्भिन्ना न च न तु प्रेमसुखं विन्दते । एतेन भक्तिपात्रे समर्पितात्मनो भक्तिसुखमपि व्याख्यातम् ।

(२) येन जनेन स्त्रिया पुंसा वा प्रेम्णः सुखं प्रेमानन्दः लब्धं शारीरसुखे शरीरसंयोगसाध्ये सुखे तस्याभिलाषः स्पृहा न भवतीति शेषः, अत्र दृष्टान्तमाह, सुधारसास्वादनतर्पिताय = सुधाया अमृतस्य यो रसः सुधेव यो रसः इत्युपमानकर्म्मधारयो वा तस्यास्वादनेन पानेन तर्पिताय जनिततृप्तये ( जनाय ) पङ्किलवारिधारा पङ्काविलसलिलधारा न रोचते रुचिविषयो भवति । रुच्यर्थधातुयोगात् षष्ठीवाधिका चतुर्थी । रुचेरिच्छारूपत्वेऽत्र प्रतिवस्तूपमा । ज्ञानादिरूपत्वे दृष्टान्तालङ्कारः ।

इदं हि साञ्जलिबन्धं मे वचनं देव्यै निवेदयितव्यमिति शिरसा शापितासि (१)।

सुबला। (सविषादम्) अज्जे ण केवलं णामदो परमत्थदो वि सिद्धतावसी तुमं सि।

[ आर्य्ये ! न केवलं नामतः परमार्थतोऽपि सिद्धतापसी त्वमसि। ]

सिद्ध। सखि सुबले, देवकर्त्तृकचितोराधिकारकामनापूर्त्तिरेकावशिष्यते, सापि प्रातरेव भविष्यतीत्याशंसे।

यतः,—कुलप्रसिद्धवीर्य्यौजः-ख्यातिस्नेहपरिप्लुतः।
निरूर्म्मिः सागरो जातो नारायणपदाश्रयः ॥ (२)

---

(१) शिरसा शापितासि इत्यस्य 'सिर की सौगन्द' इति प्रादेशिकभाषा। 'माथार दिब्बि' इति वङ्गभाषा। यदि न कथयेः तर्हि मदीयशिरोहरणं त्वया कृतं स्यादित्यर्थः।

(२) कुलेत्यादि—। नारायणपदाश्रयः=नारायणस्य समुद्रशायिनो भगवतो विष्णोः 'नारा आप इति प्रोक्ता आपो वै नरसूनवः। ता यदस्यायनं पूर्व्वं तेन नारायणः स्मृतः॥' इति वचनात्; पादन्यासस्थानं सागरः=समुद्रः, कुलप्रसिद्धवीर्य्यौजः-ख्यातिना=कुलानि जनपदाः तेषु प्रसिद्धा वीर्य्यौजःख्यातिर्य्यस्य, वीर्य्यं तरङ्गनिवारणी शक्तिः ओजः तेजः तयोः ख्यातिः प्रशंसा यस्य तेन स्नेहेन=तैलविशेषेण परिप्लुतः परिगतो व्याप्त इति यावत् सन् निरूर्म्मिः निस्तरङ्गो यथा भवति तथा नारायणपदाश्रयः नारायणस्य तन्नाम्नो ब्रह्मचारिण एकलिङ्गप्रधानपुरोधःशिष्यस्य पदाश्रयः पदस्य व्यवसितस्य आश्रयः पात्रं तन्निर्णीतकर्म्मणो लक्ष्यभूतः अथवा पदानि वाक्यं पदसमूहस्य वाक्यरूपत्वात् आश्रयो यस्य नारायणवाक्ये स्थितः तस्य पदाश्रितः शिष्यायमाणत्वात् चरणाश्रितो वा .सागरः सागरसिंहः कुलस्य वंशस्य प्रसिद्धा या वीर्य्यौजसोः शौर्य्यतेजसोः ख्यातिः कीर्त्तिः तत्र स्नेहेन प्रेम्णा परिप्लुतः पूर्णः सन्

एकस्त्वमात्यो विरुद्धोऽप्यार्य्यनारायणप्रभावेण क्रमादवसीदति (१)।

सुबला। (स्वगतम्) अह्मो, अप्पणो जसो वि ण कामिअदि अज्जाए, (प्रकाशम्) अज्जे, अज्जणाराअणस्स संवादेण सव्वं जाणिदं अह्मेहिं, तेण हि पुणो वि वंदामि सव्वच्चाअपराए अज्जाए चरणकमलाणं।

[अहो आत्मनो यशोऽपि न काम्यते आर्य्यया, आर्य्ये! आर्य्यनारायणस्य संवादेन सर्व्वं ज्ञातम् अस्माभिः, तेन हि पुनरपि वन्दे सर्व्वत्यागपराया आर्य्यायाश्चरणकमले।]

सिद्ध। (ऊर्द्ध्वमवलोक्य)

प्राचीमुखं नववरारुणकान्तिरम्यं
दूरादपेक्षितरविप्रियसङ्गरागात्।
क्रान्तिक्रमात् तदुदयेन तु पावनेन
स्वच्छं तमोमिलितरागलयेन दृश्यम्॥ (२)

---

निरूर्म्मिः मोहमुक्तः येन मोहेनाभिभूतो वाप्पावंशधरोऽपि कुलगौरवमपहाय जवनदास्यमङ्गीचकार तस्मान्मोहान्निष्क्रान्तः, 'शोकमोहौ जराव्याधी जन्ममृत्यू षडूर्म्मयः' इति भागवतटीकायां श्रीधरस्वाम्युक्तेः षट्सूर्म्मिषु मोहस्यैकतमोर्म्मिरूपत्वात्। यद्वा ऊर्म्मिरुत्कण्ठा जवनाधिकाररक्षार्थं यदौत्सुक्यं सैवोत्कण्ठा तच्छून्यो जातः। अत्रोपमाव्यङ्गः।

(१) अवसीदति = निष्प्रभावो भवति, राज्ञा अनादृतवचनो भवतीति यावत्।

(२) दूरादपेक्षितरविप्रियसङ्गरागात् = दूरात् उदयस्थानापेक्षया—दूरस्थानात् उदयलग्नापेक्षया पूर्व्ववर्त्तिलग्नादिति यावत्। अपेक्षितो यो रविप्रियसङ्गः,

सुबला । (स्वगतम्) एदेण अज्जाए अप्पा वण्णिदो ।

---

रविरेव प्रियः पतिः तस्य सङ्गः, तत्र रागात् अनुरागात् प्रतीयमानोत्प्रेक्षा तद्रागादिवेत्यर्थः नववरारुणकान्तिरम्यम् = वरं कुङ्कुमं तद्वद् या अरुणस्य सूर्य्यसारथेः कान्तिः अथ च तेनारुणा रक्तवर्णा कान्तिः प्रभा नवा अचिरागता चासौ वरारुणकान्तिश्चेति तया रम्यं कमनीयं प्राचीमुखं पूर्व्वस्या दिशः प्रथमभागः क्रान्तिक्रमात् सञ्चारक्रमात् सञ्चारक्रमप्रयुक्तेनेत्यर्थः पावनेन सर्व्वपवित्रताहेतुना 'सत्कर्म्मयोग्यो न जनो नैवापः शुद्धिकारणम् । यस्मिन्ननुदिते तस्मै नमो देवाय भास्वते ।' इति स्मृतेः । तदुदयेन तस्य रवेरुदयेन हेतौ तृतीया तमोमिलितरागलयेन तमसा अन्धकारेण मिलितो यो रागः रक्तवर्णता तस्य लयेन हेतुना स्वच्छं निर्म्मलं दृश्यम् । अयं भावः—सूर्य्योदयात् प्राक् चत्वारो दण्डा अरुणोदयकालः, तदानीं सूर्य्य उदयलग्नात् तदंशविशेषाद् वा पूर्व्ववर्त्तिलग्ने पूर्व्ववर्त्तिन्यंशे वा तिष्ठति अतएव तस्य दूरत्वमुक्तम्, प्राचीदिक् आद्यभागेन अरुणोदयरक्ता भवति, अन्धकारस्तु क्षीयमाणभावेन तिष्ठति । ततः सञ्चारक्रमेण सूर्य्यस्योदये जाते प्राचीमुखं निरस्तान्धकारं निरस्तरागञ्च स्वच्छं दृश्यते । तच्चाचिरेण दृश्यम् इति तापसीवचनार्थः अथ च कापि नायिका नायकस्य अपेक्षितसङ्गं प्रत्यनुरागात् कुङ्कुमरागप्रसाधितं कान्तस्यागमनविलम्बात् किञ्चिद् दुःखेनाभिमानेन च मलिनं मुखं ततः कान्तागमनेन च दुःखाभिमानविगमात् प्रसन्नतां बिभर्त्ति, इति व्यवहारसमारोपात् समासोक्तिः ।

वीरायाः अमरसिंहप्राप्तिकामना तदनन्तरं निष्कामप्रेम चैतत्पद्यार्थः सुबलया गृहीतः । अतएव तदुक्तिः 'एतेन आर्य्याया आत्मा वर्णितः' इति ।

सुबलागृहीतार्थस्तु—पूर्व्वावस्थावती वीरा प्राचीशब्दार्थः । तस्या मुखं वदनं दूरात् चितोरोद्धाररूपकालव्यवधानात् अपेक्षितस्य प्रतीक्षितस्य रवेः हिन्दुसूर्य्यस्य हिन्दुसूर्य्य इत्युपाधिः प्रतापसिंहमारभ्य प्रवृत्त इति अमरसिंहस्तन्नाम्नोक्तः तेन यः प्रियसङ्गः प्रीतिविषयमेलनम्, रविप्रियः = स्ववंशीयत्वेन गुणवत्त्वेन च सूर्य्यप्रिय-

[ एतेन आर्य्याया आत्मा वर्णितः । ]

सिद्ध । तन्निर्व्वर्त्तितप्रातर्नियमा देवीमुपस्थास्ये इति प्रथममेव निवेद्यताम् ।

सुबला । एव्वं होदु । [ एवं भवतु । ] ( इति निष्क्रान्ता )

सिद्ध । अहमिदानीमाश्रमं प्रतिष्ठे ( इति परिक्रम्य ) अयं खलु चितोरनितम्बादारोहणमार्गः, अनेनैव पादचारः समारोहयति देवः सुलभचाक्षुषश्च बहोः कालादनन्तरमद्य मे भविष्यति । अहो किमयं तापसीजनविरुद्धो मे दर्शन-रागः ? यावद्विमृशामि । ( विमृश्य ) न हि, न हि, चितोरागतस्य श्रीचितोरेश्वरीदेवीदिदृक्षेव, वृन्दावनधामगतस्य श्रीगोविन्ददिदृक्षेव, वाराणसीमधिजग्मुषः श्रीविश्वनाथदिदृक्षेव तदध्वान (१) मागताया ममायं दर्शनरागः । ( सप्रसादं

---

त्वादमरसिंहः तेन यः सङ्ग इति वा, तत्र रागात्, नवो यो वरः वरणं मनसा वरत्वेन ग्रहणम्, तत्प्रयुक्ता तच्चिन्तासम्भूता या अरुणकान्तिस्तया रम्यं जातमिति शेषः, सात्त्विकभावान्तर्गतस्य वैवर्ण्यस्यात्र निर्देशः । क्रान्तिक्रमात् = गतिक्रमाद् वृत्तिक्रमाद्वा, गतिः परिणतिः, तस्य क्रमः पारम्पर्य्यं तस्मात् एतेन मध्यावस्था-वर्त्तमानावस्थयोर्लाभः, पावनेन चित्तशुद्धिहेतुना तस्य हिन्दुसूर्य्यस्य रविप्रियस्य वा अमरसिंहदेवस्य उदयेन अभ्युदयेन मम नमोमिलितरागलयेन तमोगुणदूषितराग-क्षयात् स्वच्छं प्रशान्तं दृश्यं सखि सुबले ! दृश्यं त्वयेति शेषः । पूर्व्वं यो राग आसीत् तत्र स्वार्थपरतया तामसभावेन मिलनं स्थितम्, सम्प्रति तु सत्त्वप्रकर्षात् निष्काम-प्रेमरूपेणावतिष्ठत इति ।

(१) तस्य अमरसिंहदेवस्य अध्वानम् = पादचारेणागमनपथम् ।

विलोक्य ) नाधुनाप्यालोक्यते, तत्किमिमं पन्थानमतिक्रान्तः स्यात् ? अथवा किञ्चिदवरुह्य पश्यामि । ( इति तथा कृत्वा विलोक्य सहर्षम् ) एष खलु चाराध्यक्षदर्शितवर्त्मा सशालुम्ब्रापतिरागच्छत्याजानुलम्बितबाहुरभिनवजलधरपटल-श्यामलदीर्घकायो रामचन्द्र इवापरः पुण्डरीकविशालनयनो देवः । हन्त निरुध्यते बाष्पपूरेण मे दृष्टिः, कम्पते चरणयुगलम्, पुलकपूर्णा तनुयष्टिः—( सविमर्शम् (१) ।

अश्रुकम्पपुलकादिविकाराः
प्रेम्ण एव न, भवन्त्यपि कामात् ।
तद्भिदा स्वहृदयेन परीक्ष्या
हर्षभोगतृषयोस्तु विवेकात् ॥ (२)

तदेवं दशाया (३) मन्यजननयनपथवर्त्तिनी यावन्न स्यां तावदितः साधयामि । ( इति निष्क्रान्ता )

इति विष्कम्भकः ।

---

(१) सविमर्शम् = ससंशयम् ।

(२) अश्रुप्रभृतयो विकाराः केवलं प्रेम्णो भवन्ति इति न, किन्तु कामादपि भवन्ति । तु पुनः तद्भिदा तयोर्भेदः, स्वहृदयेन आत्ममनसा हर्षभोगतृषयोः निर्म्मला-नन्दभोगाभिलाषयोः विवेकात् विवेकं पार्थक्यज्ञानं विधाय परीक्ष्या = परीक्षणीया ; परीक्षा एकतरनिर्णयहेतुः साधकबाधकविचारः । यदि निर्म्मलानन्द एव स्वहृदयेनानु-भूयते तदा इमे विकाराः प्रेम्णः, भोगाभिलाषश्चेत् लक्ष्यते तदा कामस्येति परीक्षाफलम् इति भावः । (३) तत्=तस्मात्, परीक्षणस्य कर्त्तव्यत्वात् । एवं दशायाम्=विकारावस्थायाम् ।

तत: प्रविशति चाराध्यक्षेण शिवसेनेनोपदिश्यमानवर्त्मा शालुम्ब्रापतिनानुगम्यमानो राजा ।

राजा । शिवसेन ! आर्य्यभद्रदेवाश्रमाद् दोलाशिविका-गमनस्थानमुपदर्शयितुं चितोराभ्यन्तरमागतस्य ततः प्रति-निवृत्तस्य च ते यावान् कालोऽतीतः, साक्षात्तदनुभवमापन्नोऽहं तावता तदधिकेन वा कालेन न प्रविष्टश्चितोरपुरमिति पृच्छामि किमिदं मार्गान्तरम् ?

शिवसेन: । ( साञ्जलिबन्धम् ) देव ! स एव मार्गः, शोधित: सुरक्षितश्चायं मामकीनैः । तदनेनाध्यारोहतु नातिदूरं चितोरपुरं देवः । दिदृक्षातिशयात्कालाधिक्यं मन्यते देवेन ।

राजा । ( सहर्षम् ) नातिदूरं चितोरपुरं तस्यैष मार्गः !

मत्पूर्व्वपूरुषपदाम्बुजपातपूता
पद्या चकास्ति पदवीव दिवो ममैषा ।
यामाश्रितस्य तरसा परमप्रमोदाद्
दुःखं चिरादुपचितं विलयं प्रयाति ॥ (१)

( इति सर्व्वे आरोहणं नाटयन्ति । )

---

(१) मदित्यादि—। पद्या = पन्थाः, चकास्ति = प्रतिभाति । दिवः = स्वर्गस्य । पदवीव = पन्था इव । मत्पूर्व्वपूरुषपदाम्बुजपातपूता मम ये पूर्व्वपूरुषाः बाप्पप्रभृतयः संग्रामसिंहान्ताः तेषां पदाम्बुजपातेन चरणकमलविन्यासेन पूता

शालुम्त्रापतिः । ( सहर्षम् ) देव ! भवदनुवर्त्तनपुण्य-वैभवेन क्षीणकल्मषः प्रत्यक्षं स्वर्गसुखमनुभवामि ।

अपि च,—परं बहुतिथात्कालात् तपोयोगमयात्मनः ।
द्रक्ष्यामि श्रीगुरून् साक्षादहं पुलककञ्चुकी ॥ (१)

शिव । देव ! इदमेव चितोरपुरम् ।

राजा । ( सहर्षावेगम् ) शिवसेन ! किमुच्यते इदमेव चितोरपुरम् ?

शिव । देव ! इदमेव ।

राजा । (सनृत्यमिव) शालुम्त्रापते !

तदेतच्चितोरपुरं तदेतच्चितोरपुरम् ।
किमेषा भूः किं वा त्रिदशवसतिर्नै तदुभयं
यदानन्दं सान्द्रं कमपि तनुते प्रागविदितम् ।

---

पवित्रा एषा पद्या दिवः पदवीव मम चकास्ति, सम्बन्धसामान्ये षष्ठी, मम सकाशे प्रतिभातीति वा, यां पद्यामाश्रितस्य मम परमप्रमोदात् परमानन्दलाभात् चिरादुपचितं चिरप्रवृद्धं दुःखं तरसा वेगेन विलयं प्रयाति द्रुतं विलीयते इत्यर्थः । पदवीव दिव इत्युत्प्रेक्षा ।

(१) पुलक एव कञ्चुकः तदाधिक्यविशिष्टः, नित्ययोगेऽतिशायने इति मतुबर्थत्वेनोक्तेः, अहं तपोयोगमयात्मनः तपश्च शारीरिकं कृच्छ्रचान्द्रायणादि-व्रतं च योगः समाधिश्च तत्प्रधानात्मनः—तत्प्रधानस्वरूपान् श्रीगुरून् बहुतिथात् कालात् परं बहुकालानन्तरं साक्षाद् द्रक्ष्यामि, अव्यवधानेन चाक्षुषविषयं करिष्यामि, चाक्षुषं द्विविधं लौकिकमलौकिकञ्च, तत्र लौकिके साक्षात्काररूपत्वम्,

अपूर्वेयं सृष्टिस्त्रिभुवनविधातुः सुखमयी
रजस्पर्शो यस्या वपुषि पुलकं मे जनयति ॥(१)
(इति चितोरमार्गरेणून् शिरसि वक्षसि च गृह्णाति।)
शालुम्ब्रा। देव!
स्थानभ्रष्टो गिरिवनचरो देवपादानुवर्त्ती
ध्यायं ध्यायं यदमलभुवं नीतवान् यौवनं स्वम्।

---

अलौकिकञ्च सुरभिचन्दनमिति सौरभांशे चाक्षुषं भवति, तत्र साक्षात्काररूपत्वं नास्तीति नै[illegible]यिकसिद्धान्तः, नातः साक्षात्पदस्य वैयर्थ्यम्। पुलककञ्चुकीत्यत्र रूपकम्।

(१) किमित्यादि—। एषा किं भूः भूतलम्, किं वा त्रिदशवसतिः स्वर्गः इति सन्देहेऽतिशयोक्तिमूलकं निश्चयमाह नैतदुभयम् = एतत् चितोरपुरमुभयं न, न भूर्नापि स्वर्गः, यत् यस्मात्, प्राक् पूर्व्वम् अविदितम् अज्ञातं सान्द्रं निविड़ं कमपि अनिर्व्वचनीयम् आनन्दं तनुते विस्तारयति, भुव आनन्दः स्वयमनुभूतो लोकाच्च विदितः स्वर्गस्यानन्दः शास्त्राद् विदितः, अयं सान्द्रानन्दस्तु कुतोऽपि न विदितः, न च तत्स्वरूपं कथमपि वक्तुं शक्यत इत्याह कमपीति। तर्हि चितोर-पुरं यदि न भूः न वा स्वर्गः, किंस्वरूपं तदित्यत आह इयं त्रिभुवनविधातुरपूर्व्वा नवीना सुखमयी आनन्दमयी सृष्टिः रचना, यस्याः सृष्टेः रजस्पर्शः रेणुस्पर्शः मे मम वपुषि शरीरे पुलकं रोमाञ्चं जनयति उत्पादयति, सृष्टिरिति कृदभिहितो भावो द्रव्यवत् प्रकाशत इति न्यायाद् या सृष्टिः स्रष्टुराद्येतिवत् सृज्यमानस्य बोधकम्। अत्र निश्चयान्तः सन्देहालङ्कारः। रजःस्पर्शस्य पुलकजननलिङ्गेन सृष्टेरानन्दमयत्वसाधनादनुमानव्यङ्गः, अनुमानवाचकशब्दस्यासत्त्वात्, तादृश-शब्दस्यासत्त्वेऽपि साध्यसाधनयोः सत्त्वादेवानुमानमिति वदतामत्र स्फुट एवानुमाना-लङ्कारः।

तत्रायातोऽस्म्यहमवितथं हन्त ! जीर्णोऽपि धन्यो
नायं स्वप्नो मतिविकलता नैव सत्यं चितोरम् ? (१)

राजा । शालुम्ब्रापते ! सत्यं चितोरमेवैतत्, किन्त्वाशा-विमुग्धचेतसः पराधीनमप्यपराधीनमिवैतन्मन्यमाना वयं स्वप्नोपमान (२) मानन्दमनुभवामः ।

शालुम्ब्रा । बहुकृत्वो विजितजवनबलस्य देवस्य नायमाशाविमोहः, तापसच्छद्मनान्तः-स्थापित-प्रवीरसाहस्रस्य श्रीगुरुप्रशमितप्रतिकूलदैवशक्तेः शक्तिनियन्त्रितशासनाधिकारिणः सानुगस्य पुरं प्रविशतो देवस्य चितोरभूमिः करगतैवेति मन्ये ।

राजा । ( निश्वस्य ) शालुम्ब्रापते ! स्मरतु भवान्,

---

(१) स्थानभ्रष्ट इत्यादि—। स्थानभ्रष्टः शालुम्ब्राभूखण्डाद् भ्रष्टः विच्युतः, देवस्य प्रतापसिंहदेवस्य पादानुवर्त्ती चरणानुवर्त्ती गिरिवनचरः पर्व्वतकाननचारी सन् यदमलभुवं यां यत्स्वरूपाम् अमलभुवं पवित्रस्थानं ध्यायं ध्यायं पुनः-पुनश्चिन्तयित्वा स्वं ( यौवने ममत्वाधिक्यद्योतनाय स्वमिति ) यौवनं नीतवान् अतिवाहितवान्, अहम् तत्र तस्मिन् चितोरपुरे अवितथं सत्यम् आयातोऽस्मि आगतः ! अतः हन्त हर्षे जीर्णोऽपि जराग्रस्तोऽपि धन्यः भाग्यवानस्मि; एतादृशभाग्योदयस्यासम्भवमाशङ्क्य पुनः पृच्छति—अयं स्वप्नो न ? मतिविकलता बुद्धेर्वैकल्यम् अयथावस्थत्वं न ? सत्यमेव चितोरं सत्यमेवैतत् चितोरपुरम् ?

( २ ) स्वप्नोपमानं = स्वप्नदृष्टसाम्राज्यादिलाभजनितानन्दवत् मिथ्या-भूतम् ।

अवरोधजनवदस्माकमिह प्रवेश (१) मतिक्रान्तपरगुल्मस्थानस्य च ब्राह्मणानुग्रहेण स्वच्छन्दचारं च (२)।

शिव। देव! आसन्नमेव चितोरेश्वरीमन्दिरम्।

राजा। शालुम्ब्रापते! त्वर्य्यताम्, त्वर्य्यताम्, महदुत्कण्ठते मे मनो भगवत्याः श्रीचितोरेश्वर्य्याः श्रीगुरूणां च चरणकमल सन्दर्शनाय। (इति त्वरितं परिक्रामति।)

शालुम्ब्रा। यथाज्ञापयति देवः। (राजानमनुवर्त्तते)

(नेपथ्ये) जयत्यस्रवर्षिद्विषन्मुण्डमाला-



करालाकरालिस्फुरत्काञ्चिलीला।

घनश्यामधामा चतुर्ब्बाहुवामा

चितोरेश्वरी विश्वरीणाग्र्यनामा॥(३)

शिव। श्रूयमाणस्तोत्रगीतम् इदं चितोरेश्वरीमन्दिरम्।

---

(१) अवरोधजनः अन्तःपुरस्था कुलाङ्गना, तद्वत् पटसंवृतरुद्धद्वारशिविकायानेन, इह = चितोरदुर्गारोहणपथे, प्रवेशं = आर्य्यभद्रदेवाश्रमपर्य्यन्तागमनम्।

(२) ब्राह्मणस्य = आर्य्यभद्रदेवस्यानुग्रहेण = सिद्धतापसीसम्पादिततदीयविधानेन ब्राह्मणानां तापसानां प्रच्छन्नरक्षणाधीनतया च अबाधविचरणं न तु स्ववीर्य्येण।

(३) अस्रं रक्तं तद्वर्षिणी गलद्रक्तधारेत्यर्थः द्विषन्मुण्डमाला शत्रुमुण्डरचिता माला कण्ठभूषणं तया कराला भीषणा करालौ करश्रेण्यां स्फुरन्ती प्रकाशमाना काञ्चिलीला रशनाशोभा यस्याः सा, घनश्यामं मेघकृष्णं धाम द्युतिर्यस्याः चतुर्भिर्ब्बाहुभिर्वामा सुन्दरी चतुर्ब्बाहुश्चासौ वामा चेति कर्म्मधारयो वा विश्वरीणं विश्वश्रुतं (रीङ श्रवणे इति दैवादिकरीधातोः क्तप्रत्ययात्) अग्र्यं सर्व्वनामप्रधानं नाम यस्याः सा चितोरेश्वरी जयति। अथ च सैव चितोरस्वरूपा ईश्वरी;

राजा। इदमेव तन्मातृमन्दिरम्। अहो बोधितोऽस्मि गीतस्तोत्रेण चित्तोरादनन्येयमिति। मातश्चित्तोरेश्वरि! मातश्चित्तोरेश्वरि! ( इति द्रुततरं सर्पति। )

शिव। इदं मन्दिरद्वारम्, ( विलोक्य स्वगतम् ) अहो न कोऽपि! स्तोताप्यन्तर्हितः!! ( स्मरणमभिनीय ) आम् एवमेवार्य्यभद्रदेवस्याद्यतनी व्यवस्था (१)। ( प्रकाशम् ) देव! इयमभ्यन्तरस्था भगवती। ( इति प्रदर्शयन् प्रणमति। )

---

अस्रवर्षिणी द्विषन्मुण्डमाला शत्रुमुण्डश्रेणी यस्यां—वाप्पाराव[illegible]रभ्योदयसिंह-पर्य्यन्तं चित्तोरे यावन्ति युद्धान्यासन्, तेषु सर्व्वेषु द्विषतां मुण्डानि, तरवारिच्छिन्नानि भल्लकृत्तानि वा चित्तोरे निपतितानि क्षत्रियास्तु प्रायेणाग्नेयास्त्रैर्निहता इति, अधिकेन व्यपदेशा भवन्तीति न्यायेन द्विषन्मुण्डमालेति कथनं नासङ्गतम्। करालाकरा = कराला भीषणाः दुष्प्रवेशा आकराः खनयो यत्र सा, आलिस्फुरत् काञ्चिलीला = आलिषु—जलधारणार्थं निबद्धेषु वप्रबन्धेषु काञ्चिलीलां बिभ्रती, आलिबन्धा एव यस्याः काञ्चीवत् प्रतीयन्ते, घनश्यामानि तुङ्गतया मेघसान्निध्यात् तेन श्यामानि धामानि गृहा यत्र सा, चतुर्ब्बाहोः विष्णोर्वामा रमणी, पृथिव्या विष्णुपत्नीत्वेन तदेकदेशचित्तोरस्यापि विष्णुपत्नीत्वोक्तिर्नासङ्गता, चतुर्ब्बाहुश्चतुर्भुजा वामा यस्यामिति चतुर्ब्बाहवो या देवानां प्रतिमाः तास्तत्र वर्त्तन्ते इत्येतदभिप्रायेण वा विशेषणमेतत्। यस्या अग्रयं श्रेष्ठं नाम वीरप्रसविनीति यशः विश्वश्रुतम्, सा जयति—पराधीनताकालुष्यं मुक्त्वा द्रुतमेवोत्कर्षं प्राप्स्यति वर्त्तमानसामीप्ये लट्। एतदर्थद्वयमभिसन्धाय राजा वक्ष्यति गीतस्तोत्रेण बोधितोऽस्मीति। अत्र शाब्दः श्लेषालङ्कारः।

(१) यदि कोऽपि राजानं जानीयादिति कृत्वास्मदुपस्थितिकाले विजनीकरणव्यवस्था।

राजा । ( प्रवेशं नाटयित्वा भूमौ लुठन् ) भगवति चितोरेश्वरि !

त्वत्पादपद्मपरिसेवनकर्म्मयोग-
भ्रष्टं शिशोदकुलमुत्कटपापशीर्णम् ।
मातः कृपामयि ! कृपामृतवर्षणेन
स्वस्थं विधाय पुनरङ्कगतं कुरुष्व ॥ (१)

त्रिलोकपालनरते ! धर्म्मकामार्थमोक्षदे !
शरण्ये ! मङ्गले ! श्यामे ! देवि ! रक्त नमोऽस्तु ते ॥

शालुम्ब्री । ( सत्वरमनुसृत्य सास्रम् ) मातः ! एष ते दासः—

चिरं त्वत्पादसेवाशा-भङ्गसङ्गतवेदनः ।
जरसा शिरसा चाद्य नम्रस्ते शैलनन्दिनि ॥ (२)

( इति प्रणमति । )

---

(१) त्वत्पादेत्यादि—। हे कृपामयि मातः ! उत्कटपापेन गुरुणा पातकेन शीर्णं गलितावयवम्, शीर्णमिवेति शीर्णं अतएव त्वत्पादपद्मपरिसेवनकर्म्मयोगभ्रष्टं = तव पादपद्मयोः परिसेवनरूपो यः कर्म्मयोगः समाधिसाधनं कर्म्म तस्माद् भ्रष्टं विच्युतं शिशोदकुलं वाप्पावंशधरराहुपसन्ततिं कृपामृतवर्षणेन कृपैवामृतं तस्य वर्षणेन समर्पणेन स्वस्थं प्रकृतिस्थम् अशीर्णं विधाय पुनः अङ्कगतं क्रोड़स्थं कुरुष्व चिंतोरस्थं विधेहीत्यर्थः । काव्यलिङ्गमतिशयोक्तिश्च ।

(२) चिरमित्यादि—। चिरं दीर्घकालं व्याप्य तव पादस्य सेवा तस्या आशा दीर्घस्पृहा, तस्या भङ्गेन सङ्गता मिलिता [illegible] व्यथा यस्य स [illegible]

( नेपथ्ये ) । भद्रदेव ! स्वागतो मे वत्सः, तद् उपानीयतां शान्तिसलिलम् आशीर्निर्म्माल्यञ्च ।

शिव । एष बहुशिष्यपरिवृतः श्रीगुरुदेवो देवस्याशासानो मङ्गलमिममास्थानपटमण्डपमध्यास्ते तदुपसर्पामः । इत इतो देवः । ( इति सर्व्वे परिक्रामन्ति ) ।

ततः प्रविशति शैलदेवादिभिरुपास्यमानः शान्त्युदकनिर्म्माल्यहस्तेन भद्रदेवेन सह जवनिकान्तरितमध्यैकदेशास्थानपटमण्डपस्थो गुरुर्भीमानन्दः ।

भीमा । शक्तिरेका विजयते चिदचिन्नित्यसत्तया ।
कार्य्यकारणसङ्घात-द्वैतलीला-प्रकाशिका ॥ (१)

सेयं श्रीमदेकलिङ्गनाथचितोरेश्वरीविग्रहाभिव्यक्ता वत्सं प्रति प्रसादलीलामभिनयति ।

---

क्येन आनतदेहः एषः मल्लक्षणः ते दासः इति पूर्व्वतनगद्यान्वितार्थः । हे शैलनन्दिनि पार्व्वति, अद्य शिरसा शीर्षेण ते = तव च = नम्र इति चकारार्थः ते इति कर्म्मणि षष्ठी, त्वां नमतीति भावः । एतावता कालेन वेदनाया अनपनोदनात् काठिन्यं शैलनन्दिनीति सम्बोधनेन सूचितम्, बालकस्य दुःखाभिभवेन मातरं प्रति तथावचनं क्वचिद् युज्यते इत्यधिकारिभेदेन मातृभावस्फुरणभेदो बोध्यः । नमनस्य भेदेऽप्यभेदाध्यवसायादतिशयोक्तिः ।

(१) कार्य्यकारणसङ्घातस्य = कार्य्यकारणपारम्पर्य्येण बहुलीभूतस्यापि कार्य्यत्वेन कारणत्वेन च यद् द्वैतं द्वित्वं तस्य लीला क्रीडाविशेषः तत्प्रकाशिका चिदचितोः पुरुषप्रकृत्योर्या नित्यसत्ता तदुभयवृत्तिरेका कार्य्यानुकूला सत्ता तया एका एकत्वेन [illegible] । शक्तिर्विजयते सर्व्वोत्कर्षेण वर्त्तते इति । [illegible]

भद्र । आर्य्य शैलदेव, तदयं सिद्धान्तः,

प्रसादश्चाप्रसादश्च स्वतन्त्रस्य स्वयेच्छया ।
सूर्य्यः सृजति जीमूतं तच्च संहरति स्वयम् ॥ (१)

शैल । भद्र ! नैतदेवम्, किन्तु—

प्रतापसिंहः सुगृहीतनामा
व्रतं यदातिष्ठत देशवृद्ध्यै ।
धत्ते फलं तद्धि तदात्मजेऽद्य
न कर्म्म वैधं विफलत्वमेति ॥ (२)

---

(१) स्वतन्त्रस्य=स्वाधीनस्य दैवाद्यनधीनस्य, प्रसादः प्रसन्नता च अप्रसादः अप्रसन्नता च स्वया स्वकीयया इच्छया भवत इति शेषः । अत्र दृष्टान्तमाह, सूर्य्य इत्युत्तरार्द्धेन सृष्टौ प्रसादतुल्यत्वं संहारे चाप्रसादतुल्यत्वमिति बोध्यम् । जीमूतो मेघः । सूर्य्यकिरणविशेषैर्व्वाष्पाकर्षणेन मेघो जन्यते,— ततश्च किरणविशेषसम्पर्कादेव मेघो नश्यतीति सूर्य्यस्य तदुभयकारित्वं बोध्यम् ।

(२) सुगृहीतनामा=सुगृहीतं शुभजनकतया गृहीतम् उच्चारितं नाम यस्य सः, यन्नामोच्चारणं शुभजनकं स तादृशः । प्रतापसिंहदेवः= प्रतापसिंहनामा देवो राजा मध्यपदलोपी कर्म्मधारयः । देशवृद्ध्यै देशस्य वृद्ध्यै अभ्युदयाय यत् कर्म्म व्रतमातिष्ठत मया व्रतवन्नियतमिदं कर्त्तव्यमित्येवं रूपतया प्रतिज्ञातवान्, ( आङः प्रतिज्ञायामुपसंख्यानम् इति वार्त्तिकात् आङ्पूर्व्वात् तिष्ठतेरात्मनेपदम् । ) तद्धि तत्कर्म्मैव अद्य तदात्मजे तस्य प्रतापसिंहदेवस्यात्मजे पुत्रेऽमरसिंहे फलं धत्ते अचिरेण धास्यति, पोषयिष्यति वर्त्तमानसामीप्ये लट् । अस्य विशेषस्य सामान्येन समर्थनादर्थान्तरन्यासश्चतुर्थपादेन दर्शितः । वैधं विधिबोधितं कर्म्म न विफलत्वमेति निष्फलं [illegible]

भीमा। भद्रदेव, सत्यमाह शैलदेवः, कर्म्मापेक्षैव तत्प्रसादलीला।

सर्व्वे। ( ससम्भ्रममुपसृत्य ) भगवन्नभिवादये। ( इति प्रणमन्ति )।

भीमा। अपरिहीन-स्वधर्म्माणश्चिरं जीवन्तु श्रीमन्तः। ( इति शान्तिसलिलं निर्म्माल्यञ्च स शालुम्बापतये राज्ञे प्रयच्छति। )

राजा। ( साञ्जलिबन्धम् ) महान् प्रसादः ।

गुरूणामभ्रसदृशां कृपयामृतधारया।
तृषार्त्तास्तर्पिताः स्मोऽद्य चिरं चातकवद्वयम् ॥ (१)

---

स्तदा फलाभावेऽपि 'आत्मा वै जायते पुत्रः' इति स्मृतेः, तत्स्वरूपे तदीयपुत्रे फलसम्पादनान्न निष्फलत्वं तस्येति भावः ॥

(१) चिरं दीर्घकालं व्याप्य चातकवत् चातका इव तृषार्त्ताः तृषा = दिदृक्षया, चातकपक्षे पिपासया आर्त्ताः पीड़िताः वयं अभ्रसदृशाम् अभ्रतुल्यानाम् अभ्रम् आकाशम् मेघश्च, आकाशसादृश्यं निर्म्मलत्वनिःसङ्गत्वादिना मेघसादृश्यममृतवर्षणेन। कृपया कृपारूपया अमृतधारया सुधारससम्पातेन, मेघपक्षे कृपयेव अमृतधारया जलधारया, अद्य तर्पिताः स्मः, तृप्तिं नीयामहे। अत्राभ्रसदृशामिति श्लेपमूलोपमा कृपयामृतधारयेत्यत्र रूपकम् उपमेयपक्षे, उपमानपक्षे प्रतीयमानोत्प्रेक्षा। द्वितीयार्द्धे श्लेषमूलोपमान्तरम्।

भीमा। वत्स ! शिष्यकल्याणापेक्षोऽस्माकमाचार इति युष्माकं धृतिहेतुः (१)।

राजा। भगवन्निदमस्माकं महदाशास्थानम्।

शालुम्ब्रा। एवं लब्धाश्वासः कुतूहली पृच्छामि, कथमियमत्र मध्यविलम्बिनी जवनिका (२) ?

भीमा। अन्तरितमनया संवृतदोलाशिविकाभिरानीतं छत्रदण्डचामराणि, राजसिंहासनं सपरिजना स्वयं वत्सा राजमहिषी चेत्येतत्सर्व्वम् (३)।

धनसारमिदं न बाह्यवज्जनदृष्टेः पथि सर्व्वदास्यताम्।
समये च सुखेन दृश्यतामिति बुद्ध्या च्छदनं प्रकल्पितम् ॥(४)

---

(१) शिष्येति—तीर्थप्रत्यागमनात् परं मया यदत्र स्थितं न च युष्माभिः साक्षात्कारः कृतः, तत्र युष्मत्कल्याणापेक्षैव हेतुः, चितोरेश्वरीप्रसादनं चितोरशासकचराणामसन्देहश्च कल्याणहेतू। गुरुः कल्याणमेव विदधातीति निश्चयो युष्माकमपि सन्तोषकारणमिति भावः।

(२) तस्यां पटमण्डपमध्यभूमौ लम्बमानां जवनिकामवलोकमानेन शालुम्ब्रापतिना कुतूहलिना यत् पृष्टं तदाह कथमिति।

(३) तस्योत्तरम्, अन्तरितं तावदनयेत्यादि। आच्छादितदोलारूपेण राजसिंहासनं सच्छत्रदण्डचामरलोहितपताकमानीतम्। प्रच्छादितशिविकाभिश्च सपरिजना देवी आनीतेत्येतत्सर्व्वं पताकावर्ज्जं वस्तुजातमनया जवनिकया गुप्तमत्र वर्त्तते इत्यर्थः।

(४) सर्व्वमेवेदं धनसारं धनश्रेष्ठं तत्सदृशं गोपनीयम्, 'गोपयेज्जन्मनक्षत्रं धनसारं गृहे मलम्' इति विष्णुधर्म्मोत्तरवचनात्—अतः जनदृष्टिपथे बाह्यवद्

शालुम्ब्रा। भगवन्! भूयः प्रवर्द्धितकुतूहलोऽस्मि (१)।

भीमा। (सहास्यम्) अत्र वत्सस्यामरसिंहस्य सिंहासनारोहणोत्सवः शुभमुहूर्त्तानुरोधेन प्रत्यासन्नः (२)।

शैल। भूतार्थदर्शिनो भगवन्तः, तथा हि—

मेवारभूपरिसरस्य शिरश्चितोर-
मन्त्राधिकाररहितो न हि तस्य राजा।
आपादकण्ठमपि वारिणि लग्नमूर्त्तिः
स्नातः पुमान् भवति नैव शिरस्यसिक्तः॥ (३)

---

घटपटादिबाह्यवस्तुवत् नास्यतां न स्थास्यताम्। समये च शुभमुहूर्त्ते—पुनः दृश्यतामालोक्यतां जनैरिति बुद्ध्या धिया छदनं प्रच्छदनं प्रकल्पितम्, रचितम्। राजच्छत्रादीनामिहेदानीं गोप्यतया तानि जवनिकान्तराले स्थापितानीति भावः। इदं धनसारमित्यत्र परिणामालङ्कारः।

(१) जवनिकाविलम्बनहेतुज्ञानात्पूर्व्वंकुतूहलनिवृत्तावपि नवकौतूहलं भवति कथमिमान्यत्रानीतानीति परिज्ञातुमिति भावः। उदयपुरात् कथमानीतमिति, कथं वास्मिन्नास्थानमण्डपे स्थापितमिति च जिज्ञासाद्वयम्।

(२) तत्र प्रथमाया निवर्त्तनायाह अत्र सिंहासनारोहणोत्सव इति। द्वितीयाया निवर्त्तनायाह शुभमुहूर्त्तापे'त इति। स्थानान्तरे रक्षणे तदानयनाय कालातिपातः प्रसज्येतेति भावः। प्रयोजनमनुरुध्येदं कृतं प्रयोजनानुरोधेन च वैजयन्त्यन्यत्र स्थापितेति वक्ष्यति अतएवेति।

(३) अनेन संक्षिप्तोत्तरेण जिज्ञासानिवृत्तिर्न भवतीति मत्वा शैलदेवो भीमानन्दवचनं व्याचष्टे भूतार्थेत्यारभ्य शिरस्यसिक्त इत्यन्तेन। चितोराधिकारं विना मेवारराज इति संज्ञा न यथार्था भवतीति पूर्वार्द्धं; मूर्धसिक्त—सीमा

राजा। (अपवार्य्य) शालुम्ब्रापते, अस्मदीयपराक्रमे श्रीगुरूणां महान् विश्वासः। युयुत्सुमपि चितोरशासकं मुहूर्त्तमात्रेण विजेष्यामह इति प्रत्ययेनैव सिंहासनारोहण-प्रत्यासत्तिः स्पष्टमुच्यते।

शालुम्ब्रा। (सहर्षम्) देव, नेदं विचारयामः, किन्तु—

अमृतं ददाति गुरुरित्युदीर्य्यते
बहु नैगमैरनुभवस्तु दुर्घटः।
अधुना मया शुभनिदानसंश्रया-
दनुभूयते तदमृतं स्फुटक्रमम्॥ (१)

---

विशेषनिर्द्दिष्टभूखण्डम्। अत्र=चितोरे। तस्य=मेवारभूखण्डस्य। अत्र दृष्टान्त-माहोत्तरार्द्धेन चरणात्कण्ठपर्य्यन्तं सलिलसिक्तोऽपि शिरसि सलिलसेकं विना अयं स्नात इति व्यवहारो न भवतीत्यर्थः।

(१) नैगमैः=शास्त्रविद्भिः, गुरुरमृतं ददाति इति बहु बारंबारम् उदीर्य्यते उच्यते, तु किन्तु अनुभवः अमृतस्यानुभवः दुर्घटः प्रायेण न घटते। अधुना अस्मिन् क्षणे शुभनिदानसंश्रयात् शुभावहदैवयोगात्, यद्वा शुभनिदानस्य मङ्गल-मूलकारणस्य श्रीगुरुकृपायाः संश्रयात् लाभात् मया स्फुटक्रमं व्यक्तपूर्व्वापरभावं यथा स्यात् तथा—तद्=गुरुदत्तम्, अमृतम् अनुभूयते मानसप्रत्यक्षविषयी-क्रियते। अमृतं ददातीत्यत्रामृतशब्दो मोक्षपरः, तदमृतमित्यत्रामृतशब्दोऽमृत-तुल्यतया परमानन्दपरः। श्रीगुरुः शनैः शनैरेकानन्दात् प्रकृष्टानन्दं ततः प्रकृष्टतरं ततस्तदधिकमिति क्रमेण परमानन्दः श्रीगुरुप्रदत्तोऽनुभूयते। चितोराधि-कारोपायलाभानन्दः, चितोरपुरप्रवेशानन्दः, चितोरेश्वरीदर्शनानन्दः, चितोरोद्धार-

( नेपथ्ये )। इत इतो देवः।

शिव। (बहिर्विलोक्य) भगवन्! दूरस्थापितपरिकरो(१) विनीतवेशः सामात्यश्चितोरशासकः सागरसिंहो देवीप्रणामाय समागच्छति।

भीमा। यद्येवम्, तदस्याचरणेऽवहितैरस्माभिर्भवितव्यम्। भद्रदेव, गच्छ त्वं भगवत्या महोत्सवाय (२)। ( इति सङ्केतं ग्राहयति। )

भद्र। यथाज्ञापयति भगवान्।

( इति निष्क्रान्तः। )

ततः प्रविशति सामात्यः सागरसिंहः।

सागर। ( स्वगतम् ) अहो! कीदृग्भीषणं दर्शनं भगवतो महाकालभैरवस्य! कीदृक्स्तनितमन्द्रः (३) कण्ठस्वरः!! अधुनापि तत्स्मरणेन हृत्कम्पो मे जायते। उक्तं च

---

नन्तरकर्त्तव्यस्य राज्ञा सिंहासनारोहणस्य निर्णयवार्त्तया परमानन्दश्चेति स्वानुभवप्रकारो निवेदितः। अमृतपदार्थयोर्भेदेऽप्यभेदाध्यवसायादतिशयोक्तिः।

(१) परिकरो रक्षिवर्गो यानञ्च।

(२) सागरसिंहस्याचरणं यद्यस्मदनुकूलं च भवेत्, सामात्यस्य तस्य बन्धनं रक्षिसैन्यवधश्च भगवत्या महोत्सवः, यद्यनुकूलं स्यात् स्नपनपूजनपारायणहवनस्वरूपो महोत्सवः इति सङ्केतः।

(३) मेघध्वनिगाम्भीरः।

तेन—"रे दुरात्मन् ! युष्मत्कुलदैवतेन भगवता सशक्तिक-महेश्वरेणादिष्ट एव त्वद्दर्शनपथमागतोऽहम्, कथमन्यथाऽस्मद्दर्शनं ते सम्भवेत्"? 'अथ कथमनेन प्रतिमाभङ्गकारिणो न दण्ड्यन्ते जवनाः !' इति मे मनस्युदित एव सरोषं तेन पुनरुक्तम्। "शृणु रे कुतर्ककवलित,—

पाषाणप्रतिमादिभञ्जनजनिः का नोऽमराणां क्षति-
र्भक्तानां हृदये भवेदपि रुजा या भीरुलभ्या सदा।
येऽस्मद्विग्रहरक्षणाय जहति प्राणान्, सुरास्तेऽज्वरा
म्लेच्छानां क इवास्ति पुण्यविभवो येन प्रतीयेमहि ॥ (१)

---

(१) पाषाणप्रतिमादिभञ्जनजनिः = पाषाणप्रतिमादीत्यत्रादिपदेन धातु-मयदारुमयादीनां प्रतिमानाम्, तन्मयलिङ्गानां च लाभः। पाषाणप्रतिमादीनां भञ्जनं भङ्गः तस्माद् जनिरुत्पत्तिर्यस्याः सा क्षतिरपचयः अमराणां नः अस्माकं का? न कापि, प्रतिमादिभङ्गेन नास्माकं दलनं भवति, प्रतिमादीनामस्मत्तो भिन्नत्वात्, यतो वयम् अमरा इति भावः, अतएवात्र काव्यलिङ्गालङ्कारः, भक्तानां= प्रतिमाप्रतिष्ठातृप्रभृतीनामस्मद्भजनपराणां रुजा व्यथा भवेदपि सम्भावनायां लिङ् अपिना स्फुटीकरणम्, या रुजा सदा नित्यं भीरुलभ्या भीरुभिः अनुभवनीया; ये भीरवो भवन्ति तैः परपरिभवजनिताया व्यथा या नित्यलभ्यत्वात् प्रतिमाभङ्गोद्यतानां प्रतिरोधविमुखैरीदृग्व्यथालाभो युक्त इति भावः। ये=ये भक्ताः अस्मद्विग्रहरक्षणाय प्रतिष्ठितदेवमूर्त्तीनां रक्षणाय प्राणान् जहति त्यजन्ति प्रतिष्ठितविग्रहादिभङ्गेऽपि,—तेषां व्यथा न भवति यतः ते अज्वराः व्यथाहीनाः सुरा भवन्ति, मूर्त्तिभङ्गनिवारणोद्यमजनितपुण्यबलादिति तात्पर्यम्, ये तु तान् विजित्य प्रतिष्ठितदेवमूर्त्तिभङ्गनिवारणाय प्रभवन्ति

मूढ़, त्यज जवनदास्यं परित्यज चितोरम्, अन्यथा मदीय-दंष्ट्रान्तरविदलितो भविष्यसि, पश्य मे प्रत्यक्षरूपं पश्य मे दंष्ट्राभीमं वदनम्।" तदेतदत्रापि प्रत्यक्षमिवानुभवामि। ( इति कम्पते (१) )।

अमात्यः। कथमेवं वेपथुर्देवस्य? तदुपविशतु पटमण्डप-प्रत्यासन्नेऽस्मिन् शिलाखण्डे।

सागर। तदहं सर्व्वदुःखहारिणीं मातरं प्रणम्योपविशामि ( प्रणम्योपविश्य स्वगतम् ) उपदिष्टं भगवत्या सिद्धतापस्या अवक्तव्यमिदं देवरहस्यम्, भवत्वेवम्। ( प्रकाशम् ) अमात्य, चिन्ताजनितवायुसमुद्भूतोऽयं वेपथुरित्यवधारय।

---

तेषां रुजाया असम्भव इति भावः। भक्तानुग्रहेण देवताभिः कथं जवनेभ्यः स्वप्रतिमारक्षणं न क्रियते इत्याशङ्कायामाह म्लेच्छानामिति, म्लेच्छानां जवनानां 'ते चात्मधर्म्मपरित्यागान्म्लेच्छत्वं ययुः' इति विष्णुपुराणात्। क इव को नाम पुण्यविभवः पुण्यप्रभावोऽस्ति। येन प्रतीयेमहि ज्ञायेमहि। यदि जवनानां दण्डोऽस्माभिः समपादयिष्यत, तेन दण्डेनास्मासु तेषां प्रत्ययोऽभविष्यत्, प्रत्ययाच्च भक्तिरित्येवं क्रमः पुण्यादेव सम्पद्यते, न खलु तादृक् पुण्यं जवनानामस्तीति नास्माभिरिह दण्डो दीयते, भक्तानुग्रहोऽस्माकमस्त्येव, किन्तु ये भीरवः, तेषां भक्तिर्न दृढ़ा, वीराणामस्मत्प्रतिमादिरक्षार्थं प्राणात्यये देवत्वलाभात् सुखातिशयः नतु व्यथा, प्राणपरित्यागाभावे प्रतिमाभङ्गोद्यतानां पराजयेन भाव्यं नतु प्रतिमाभङ्ग इति न भक्तानां प्रतिमाभङ्गजनिता व्यथा भवति, तस्माद् भक्तानुग्रहेण प्रतिमाभङ्गादिकारिष्वस्माभिर्दण्डो देय इतीयमपि शङ्का न युक्तेत्याशयः।

(१) कम्पते इति, तत्स्मरणादेव सञ्जातत्रासः इति शेषो भावगम्यः।

असा। (स्वगतम्) चितोराक्रमणोद्योगोऽमरसिंहस्य वर्त्तत इति यच्चारमुखात् श्रुतम्, किं तदेव चिन्त्यते ? तदस्त्वेवम् (प्रकाशम्) सजनोऽयं पटमण्डपः तच्चिन्ताविषयं जिज्ञासुरपि निवृत्तोऽस्मि।

सागर। दुष्कृतं हि ख्यापनीयं भवतीति धर्म्मविदां समयः (१)। तदलं ते जनाकर्णनत्रासेन। किन्तु विदितमेव पुनर्जिज्ञाससे, तथापि (२) ब्रवीमि श्रूयताम्—

सर्व्वस्मादधिकं धनं तदधिको दिल्लीपतेरादर-
स्तत्रोपाधि-पदागमो यदि पुनस्तुच्छं पदं ब्रह्मणः।
एवं मूढधियो गतो बहुतिथः कालोऽल्पभाग्यस्य मे
यस्मिन् नो गणितं कुलं न महिमा धर्म्मो न शौर्य्यं न च॥(३)

---

(१) धर्म्मविदां समयः = ख्यापनेनानुतापेन तपसाध्ययनेन च। पापकृन्मुच्यते पापादिति मन्वादीनां सिद्धान्तः।

(२) तथापि = त्वया विदितमपि, पूर्व्वं मदुक्तमपीति यावत्। ब्रवीमि = विषयान्तरं मया चिन्त्यते, इति भ्रमात्त्वेयं जिज्ञासेति चेत् तद्भ्रमापनोदनाय कथयामीति भावः।

(३) सर्व्वस्माद् दिल्लीपतेरादरादिप्राप्तेः पूर्व्वं धनमेव सर्व्वस्मात् काम्यवस्तुजातादधिकमिति बुद्धिरासीत्, दिल्लीपतेः = दिल्लीश्वरस्य 'दिल्लीश्वरो वा जगदीश्वरो वा' इति प्रशस्यमानस्य आदरः = बहुमानः, तस्मात् = धनादधिकः काम्यतरः, वचनम्। तत्र = दिल्लीपतेरादरे पुनः आधिक्यपक्षे उपाधिपदागमः = राजेत्याद्युपाधिः, पदं— तदुचितं राजसभायामुत्कृष्टमासनम्, तयोरधिगमः प्राप्तिर्यदि तदा ब्रह्मणः पदं = ब्रह्मलोकः तुच्छम् = अकिञ्चित्करं भवतीति शेषः। तदुपाधिपदयोर्ब्रह्मलोकापेक्षयाधिककाम्यत्वात्। एवम् = वर्णितप्रकारेण। मूढधियः = मोहग्रस्तबुद्धेः।

शालुम्ब्रा। निर्व्विण्ण इवायं लक्ष्यते।

अमा। देव! भवत्वेवम्, किन्तु बहुराजप्रार्थनीयमिदं राजत्वम्, विशेषतो दुर्ल्लभं हि राणानामलक्षणं चितोरराज्यम् (१), पुण्यहेतुश्च प्रजारक्षा, स्पृहणीयो मानविशेषश्चेति न खलु पूर्व्वविवेकः सर्व्वथा हेयः (२)।

सागर। (सावेगम्) अमात्य!

---

अल्पभाग्यस्य अल्पं भाग्यं पूर्व्वजन्मार्ज्जितपुण्यं यस्य तस्य, मे बहुतिथः बहूनां पूरणः (तस्य पूरणे डट् पा० ५।२।४८) बहुशब्दाद् डटि तिथुगागमात्, (बहु-पूगगणसङ्घस्य तिथुक् पा० ५।२।५२) कालो गतः, अतीतः, यस्मिन् = यत्र काले कुलं = शिशोदकुलं नो = न गणितम् = संख्यातम् आदरणीयाणां संख्याने स्थापितम्, महिमा = महत्त्वं चरित्रोत्कर्षः न गणित इति लिङ्गव्यत्ययेनानुकर्षणीयम्, धर्म्मः = क्षात्रधर्म्मः न गणित इति पूर्व्ववदनुकृष्यते, शौर्य्यं पराक्रमः च न गणितम्। एतेषां गणने जवनवैरितया प्रसिद्धक्षात्रधर्म्मरतशिशोदकुलोत्पन्नस्य मे शौर्य्ये सत्यपि शूरतमं ज्येष्ठभ्रातरमपहाय जवनदास्याङ्गीकारो नाभविष्यदिति भावः। मोहं प्रति अल्पभाग्यताया हेतुत्वात् काव्यलिङ्गालङ्कारः। अप्रस्तुतात् चिन्ताहेतुभूत-पूर्व्वभावात् प्रस्तुतस्य चिन्तास्वरूपस्य गम्यमानत्वादप्रस्तुतप्रशंसा च। धनादिकमकिञ्चित्करं कुलादिगणनमेव श्रेयस्ततश्चेदानीं मया किं कर्त्तव्यमिति चिन्त्यते, इति चिन्तास्वरूपम् पद्येन नाभिधीयते, किन्तु गम्यत इति ध्येयम्।

(१) चितोरराष्ट्रम्।

(२) पूर्व्वविवेकः = पूर्व्वनिश्चयः उपाधिपदाधिगमस्य श्रेष्ठत्वनिश्चयः। सर्व्वथा न हेयः ब्रह्मपदस्य तुच्छत्वविवेकस्तु हेय एवेति सूचयितुं सर्व्वथेति।

राजत्वं मे नैव, दास्यं यदेतत्,
राज्यं नेदं गोत्रशौर्य्यश्मशानम् ।
रक्षा नेयं किन्त्वसौ प्रेतवृत्तिः,
मानो नायं न्यक्कृतिः सर्व्वथैषा ॥ (१)

राजा । अवधीरितामात्यवचनेन युक्तमभिहितमार्य्येण तर्जितं नारायणसिद्धतापसीभ्याम् ।

अमा । देव ! भारतेश्वरकर-च्छायायां सर्व्वे राजानस्तुष्टा एव निषीदन्ति, तत्कथमेवमुच्यते देवेन ?

राजा । ( कर्णौ पिधाय ) शान्तं पापम् ।

सागर । ( सभ्रूभङ्गम् ) अमात्य ! अन्येषां मम च महद् वैषम्यमस्ति, यतः,—

येषां शोणितविन्दुशेषवपुषां तेजोनिरुद्धाश्चिरं
न स्प्रष्टुं किमुताधिकर्त्तुमरयः शक्ता धरित्रीमिमाम् ।

---

(१) मे मम राजत्वं नैव नास्त्येव यद् यस्मात् एतत् शासकत्वं दास्यं दासत्वं परनियोगवर्त्तित्वात्, इदं चितोरं मे 'इत्यनुवर्त्तते मम राज्यं राष्ट्रं न, किं तर्हि—गोत्रस्य वंशस्य यत् शौर्य्यं तस्य श्मशानं ध्वंसस्थानम्, इयं रक्षा प्रजापालनं न, किन्तु असौ परोक्षरूपा प्रेतवृत्तिः, प्रेताः श्मशाने तिष्ठन्ति जीवतश्च प्रेतत्वं नयन्ति, मदीया रक्षापि तथा—अहमपि श्मशाने तिष्ठामि स्वयं यथा दासोऽन्यानपि तथा कर्त्तुं प्रवृत्तः, अतएव अयं न मानः एषा सर्व्वथा न्यक्कृतिः नीचैः करणम् । अत्र काव्यलिङ्गनिश्चयालङ्कारौ ।

तद्वंशे मम जन्म ; हा ! तदरिभिः सा भूरियं निर्ज्जिता
पाशेनेव नियम्यते ननु मया, मत्तोऽस्ति कोऽन्योऽधमः ॥(१)

भीमा। प्रियं नः, निरस्तो हि समरसन्देहः, विनैव नरघातं भगवत्या महोत्सवः सम्पत्स्यते।

राजा। अन्तर्गूढ़व्यथोद्गारी खल्वयं वचनसन्दर्भः। एवमाकर्णयन् अस्य पितृव्यता-परिचये शिथिललज्जोऽस्मि।

अमा। कुलाभिमानजनितनिर्व्वेदादेवमुच्यते देवेन। वयन्तु जानीमहे—यशसा वीर्य्येण च देव एव श्रेयान्।

सागर। (सनिर्व्वेदम्) भो मा मैवम्, पश्य—

वर्त्तन्ते बहवः सुमन्दमतयो ये पापवृत्तिं श्रिताः
सर्व्वेषामहमेव निन्दिततमो लज्जाघृणावर्ज्जितः।

---

(१) अन्ये तावदहमिव नानुतप्ताः अतः कथञ्चित् तुष्टा भवितुमर्हन्ति, मम तु निरतिशयोऽनुताप इत्याशयेनाह येपामिति। शोणितस्य विन्दुः शोणितविन्दुः, शेपोऽवशेपो यत्र तद्वपुर्य्येपां तेपां तेजो निरुद्धाः शौर्य्यप्रतिरुद्धाः अरयः शत्रवः चिरं दीर्घकालम् इमां स्प्रष्टुं न शक्ताः अधिकर्त्तुं किमुत ! स्पर्शनाशक्तानामधिकारकथैव नोदेति। तद्वंशे तेपां कुले मम जन्म, हा खेदे तदरिभिः तेषामरिभिः निर्ज्जिता विजिता इयं सा पूर्व्वमस्पृष्टा भूः प्रदेशः मया करणभूतेन पाशेनेव बन्धनरज्ज्वेव नियम्यते वध्यते ननु कुत्सने मत्तो मदपेक्षया अधमः अन्यः कोऽस्ति नास्त्येव। अत्र काव्यलिङ्गमुत्प्रेक्षा विपमश्चैतेऽलङ्कारः।

दस्योर्दास्यमुपागतेन हि मया तस्यैव वृद्ध्यै प्रभो-
रम्बायाः परिधानमम्बरमहो ! हर्त्तुं समाकृष्यते ॥ (१)

भीमा। स्वाधीनमुदयपुरराज्यमेवेदानीं मेवारभूमेर्लज्जा-निवृत्तिहेतुत्वेन वसनस्थानीयमिति निपुणं परिदेवितं सागर-सिंहेन।

राजा। हन्त ! अनुतापशुद्धमार्य्यस्य हृदयं प्रतिभाति।

शालुम्ब्रा। ( सागरसिंहमुद्दिश्य ) साधु राजपुत्र ! साधु ! अवस्थया लघुस्त्वं न प्रकृत्येति ज्ञायते। तथा हि,—

यैर्धनोद्भूतदुष्टाशावात्ययानीतभूतिभिः।
गिरिग्रावेव संच्छन्नस्त्वमस्माभिर्न लक्षितः॥ (२)

---

(१) सर्व्वेषामिति निर्द्धारणे षष्ठी, पापवृत्तिमाश्रितानामतिमन्दमतीनां सर्व्वेषां मध्ये अहमेव निन्दिततमः, अतिशयेन निन्दितः। तत्र हेतुः, लज्जेति। घृणा = दया जुगुप्सा वा। लज्जाघृणावर्ज्जितत्वं प्रमाणयति दस्योर्दास्यं प्राप्तवता मया प्रभोः प्रभुभूतस्य तस्यैव दस्योरेव वृद्धयै लाभाय अम्बाया जनन्याः परिधान-मम्बरं परिधानरूपेण स्थितम् अम्बरं वस्त्रं हर्त्तुम् अपहर्त्तुं समाकृष्यते अवमोच्यते अहो धिक्। लज्जाकरुणयोः लज्जाजुगुप्सयोर्व्वा सत्त्वे दस्युदासत्वं मातृपरिहित-वस्त्रहरणप्रयत्नश्च न भवेताम्। पूर्व्वार्द्धे काव्यलिङ्गम्। उत्तरार्द्धोक्तकार्य्येण लज्जाघृणाशून्यत्वरूपकारणसमर्थनादर्थान्तरन्यासः। दस्युर्ज्जवनराजः। अम्बा जन्मभूमिः परिधानाम्बरमुदयपुरराज्यमिति वक्ष्यते। तथा चातिशयोक्तिः।

(२) यौवनजनिता या दुष्टाशा धनाद्याशा वात्येव वातालीव, उपमानपक्षे च धनाद्याशेव वात्या तयानीता या भूतयः उपमेयपक्षे सम्पदः, उपमानपक्षे भस्मानि,

अमा। (सचिन्तम्) देव! प्रभुर्ज्जवनराजोऽपि स्मर्त्तव्यः।

सागर। (साक्षेपम्) स्मरामि हन्त! स्मरामि,—

भग्नो देवालयसमुदयश्चूर्णिता मूर्त्तयस्ता
ध्वस्ता सौधावलिरभिमता तोरणो निष्कवाटः।
साध्वीवृन्दज्वलनपतनोद्देश एषोऽपि येषा-
माहुः क्रौर्य्यं वत पुनरहं सेवकस्तत्सजातेः॥(१)

राजा। शालुम्ब्रापते! मर्म्मच्छिदुरमेतत्।

अमा। मृष्यतु देवः, न तत्स्मरणार्थमभिहितं मया, किन्तु यथा देवस्य गौरवरक्षणकामो भारतेश्वरोऽवमन्यमानो

---

ताभिः आवृतः गिरिग्रावेव गिरेरङ्गभूतः ग्रावा शिला इव अस्माभिः त्वं न लक्षितः बुद्धः। जवनानुग्रहलब्धसम्पत् त्वं स्वरूपतो नास्माभिः परिज्ञातः। अत्र गिरिपदोपादानं ग्राव्णस्तत्सम्बन्धद्योतकं तेन सागरस्य प्रकृत्या राणावंशेना-विच्छेदः सूचितः। उक्तिरियं राजपुत्रोद्देशेन दूरतः। पश्चादिदं स्फुटी-भविष्यति। पूर्णोपमा।

(१) ताः = देवालयस्थाः, मूर्त्तयः देवप्रतिमाः। अभिमता सौन्दर्य्येण जनप्रिया। निष्कवाटः प्राचीनमहार्घकवाटशून्यः। एषः सन्निहितः साध्वीवृन्दस्य सतीसमूहस्य ज्वलने अग्नौ यत् पतनं पातः तस्योद्देशः स्थानं येषां क्रौर्य्यं नृशं-सत्त्वमाहुः भग्नदेवालयसमूहचूर्णितदेवप्रतिमाविध्वस्तसुरम्यसौधावलिनिष्कवाट-तोरणसतीवह्निपतनस्थानानि येषां नृशंसत्वं प्रकाशयन्तीत्यर्थः, वत खेदे, अहं पुनः तत् सजातेः पूर्व्वतनविध्वंसकस्याल्लाउद्दीनस्यापि ग्रहणात् तत् सजातेरिति; जवनस्य दासोऽस्मि। अचेतनेषु देवालयादिषु वचनसम्बन्धाभावेऽपि वचन-सम्बन्धाध्यवसायादतिशयोक्तिः।

महाराजमानसिंहं तन्नियुक्तसर्व्वाध्यक्षसेनापतिमपसार्य्य देवमेव स्वराज्यमिति कृत्वा चितोरं रक्षितुमादिष्टवान् (१), तदेव स्मर्त्तुमावेदितम् ।

सागर । अमात्य ! द्विगुणमिदं शोकस्थान (२) मद्य सागरसिंहहतकस्य । तथा हि,—

मदीयकुलकामिनीकमलिनीकुलं व्याकुलं
ज्वलज्ज्वलनमाविशद् यदवमर्शनाशङ्कया ।
सुतोऽपि यवनीकृतो मम दुरात्मभिर्यैः स्त्रिया
त एव जवना ननु प्रभुतया नियच्छन्ति माम् ॥ (३)

---

(१) अस्यार्थः—महाराजमानसिंहमवमन्यमानत्त्रियुक्तसेनापतिं पदच्युतं कृत्वा भारतेश्वरः भवन्तमेवादिष्टवान् । चितोरप्रदेशस्तवैव राज्यमिति त्वयैव रक्षणीयं नात्र ते कश्चित् प्रभुत्वव्याघातको भविष्यतीति । मानसिंहसेनापतिवार्त्ता तृतीयाङ्केऽस्ति ।

(२) इदं = स्मरणम्—दिल्लीश्वरस्य मां प्रति नियोगवचनस्मरणमित्यर्थः । द्विगुणं शोकस्थानं शोकविषयः शोकहेतुरिति यावत् । कारणस्य द्वैगुण्यात् कार्य्यस्य शोकस्यापि द्वैगुण्यमिति भावः ।

(३) मदीयकुलकामिनीकमलिनीकुलं मदीयकुलकामिन्य एव कमलिन्यः पद्मिन्यः तासां कुलं समूहः, यदवमर्शनाशङ्कया = यैः अवमर्शनमपमानजनकः स्पर्शः, तस्याशङ्कया सम्भावनया व्याकुलं सत् ज्वलज्ज्वलनं ज्वलन्तमनलम् आविशत् प्रविवेश, एतेन आकब्वराक्रमणकालीनवृत्तं वर्णितम् । यैः दुरात्मभिः कर्त्तृभिः सुतः मम पुत्रश्च स्त्रिया कयाचित् सुन्दर्य्या जनन्या करणभूतया यवनीकृतः नतु जवनीकृतः, जवनत्वस्य देशविशेषाभिजनत्वरूपस्य मत्पुत्रे सम्भविरहेण मिश्रजातित्वरूपयवनत्वं सम्पादितम् ...

भीमा। महाकुलप्रसूतानां कुतश्चिद्विकृतात्मनाम्। (१)
सत्सङ्गादि-हते मोहे (२) भवत्येवानुशोचनम्॥

राजा। तदुक्तमार्य्येण, यत् सदृशं मे तातानुजस्य।

भीमा। 'प्रमादे हि प्रभवो रक्षणीया मन्त्रिभिः' इति पुनरपि कथ्यते—त्वरितं युद्धोद्यम एव हितो देवाय (३)।

सागर। (साधिक्षेपम्) भो हितानुशासक! तदिदानीम्—
संग्रामो जवनैः समं भवतु मे न क्षत्रियैर्बन्धुभि-
र्दैवस्थानमिदं सजातिरुधिरैर्न प्रोक्षितुं साम्प्रतम्।

---

तत्रासत्त्वाद् यवनीकृत इति च्विप्रयोगः। त एव जवनाः महावैरिण इत्यर्थः, मां प्रभुतया प्रभुभावेन नियच्छन्ति नियन्त्रितं कुर्व्वन्तिः—इदं त्वया कर्त्तव्यमित्यादिरूपेणेति तात्पर्य्यम्। ननु कुत्सने आत्मग्लानिसूचकमिति यावत्। सागरसिंहस्य सुतो यवनीकृतो 'महव्वत खान्' इति नाम्ना प्रसिद्धो दिल्लीश्वरस्य महावीरः सेनापतिरासीदितीतिहासविदः। कुलकामिनीकमलिनीत्यत्र रूपकम्। 'भीमसिंहपत्नीपद्मिनीवत् पश्चादपि तज्जातीया बह्व्यः कुलकामिन्यो ज्वलनमविशन्' इति सूचयितुं कमलिनीति। जवना इति बहुवचनं सपारिषद-समहिषीकदिल्लीश्वरस्य बोधनाय।

(१) कुतश्चित् = दैवघटितात् कारणात्, विकृतात्मना मोहयुक्तानाम्।

(२) सत्सङ्गादि-हते = सत्सङ्गादिना हते निराकृते आदिपदात् शास्त्रपाठविचारयोः परिग्रहः। मोहे प्रमादे।

(३) राज्ञां प्रमादे मन्त्रिभिरुपदेष्टव्यमिति हेतोः। देवाय हित इत्यत्र हितशब्दयोगात् षष्ठीबाधिका चतुर्थी।

देवीप्रीतिमहोत्सवे पशुतया वध्याः कुलद्वेषिणः
स्वात्मा वा बहुपापकर्म्ममलिनो नान्योऽस्ति पक्षो मम ॥ (१)

अमा। (स्वगतम्) उदयपुरनाथस्य बलोद्योगश्रवणेन, भूयो भूयो दिल्लीश्वरपराजयवार्त्तया, नवपण्डितसाहचर्य्येण, सिद्धतापसीप्रभावेण शिशोदकुलस्य बहुशः कीर्त्तिस्थानदर्शनेन च भावशबला (२) मवस्थाम् आपन्नो देवो महाराजमानसिंह इव राजकार्य्याक्षमो जातः, तदेनं परित्यज्य दिल्लीगमनमेव मे श्रेयः। (प्रकाशम्) यद्येवं मुञ्चतु मां देवः।

सागर। ममाप्येतदभिमतम्, अमात्यो हि राज्ञः शोभते, राजतापि योग्यस्य न खल्वहं चितोरस्य योग्यो राजा, नापि हठादाच्छेत्ता दस्युरूपो जवनाधिपः। किन्तु—

ज्येष्ठस्य मे सुकृतिनः सुगृहीतनाम्नः
पुत्रो गुणेन जनकस्य समो महात्मा।

---

(१) जवनैः समं सह मे मम संग्रामो युद्धं भवतु, बन्धुभिः ज्ञातिभिः पितृस्वस्रीयादिभिश्च क्षत्रियैः न = संग्रामो युद्धं न भवतु। इदं चितोरपुरं देवस्थानं सजातिरुधिरैः प्रोक्षितुं सेक्तुम्, न साम्प्रतम् न युक्तम्। देवीप्रीतिमहोत्सवे देव्याश्चितोरेश्वर्य्याः प्रीतिहेतौ महोत्सवे कुलद्वेषिणः कुलवैरिणः जवनाः पशुतया वध्याः पशुरूपेण हननीयाः वा अथवा बहुपापकर्म्ममलिनः बहुपापकर्म्मभिः मलिनः स्वात्मा स्वदेहे वा पशुतया वध्यः, अन्यः = ईदृशपक्षद्वयाद् भिन्नो मम पक्षो नास्ति।

(२) भावशबलाम् = दुःखभयानुतापलज्जादिभिर्भावैर्म्मनोवृत्तिभिः, शबलां—मिश्रिताम्।

जेतुं चितोरनगरीं विहितक्रमो य-
स्तस्यास्तु पूर्व्वजपदं समरं विनैव ॥ (१)

शालुम्ब्रा । ( बहिर्भूयोपसृत्य ) कुमार ! शालुम्ब्रापतिरभिवादयते ।

सागर । शालुम्ब्रापतिः ! ( इत्यर्द्धोक्त्या विस्मयं नाटयति ) ।

शालुम्ब्रा । ( बहिर्भवन्तं राजानमङ्गुल्या निर्दिश्य ) एष भवतो ज्येष्ठभ्रातुष्पुत्रो देवोऽमरसिंहः ।

राजा । (उपसृत्य) तात ! अभिवादये ।

सागर । (सविस्मयहर्षोत्कम्पगद्गदम्) अहो ! किमयं स्वप्नः ?

यं भिया प्रथमं नित्यं स्मृतवानस्मि दुर्म्मनाः ।
पश्चाद्दिदृक्षया सोऽयं वत्सो मे नेत्रगोचरः ॥ (२)

---

(१) सुगृहीतनाम्नः सुकृतिनः पुण्यकर्म्मणो मदीयज्येष्ठस्य मदीयज्येष्ठभ्रातुर्महाराणाप्रतापसिंहस्य तनयो गुणेन जनकस्य समः जनकेन तुल्यः, तृतीयाया वैकल्पिकत्वात् जनकस्येति षष्ठीप्रयोगः महात्मा महामनाः यः चितोरं जेतुं विहितक्रमः कृतोद्योगः, समरं विनैव, पूर्व्वजानां पूर्व्वपुरुषाणां पदं स्थानं तस्य अस्तु, स एव राजा भवतु नाहं योग्यो रावेत्यादिनोपक्रमवाक्येन ज्येष्ठभ्रातृतनयस्य योग्यताया गम्यत्वात् समालङ्कारव्यङ्गः ।

(२) प्रथमं = पूर्व्वं चितोरशासनाधिकारप्राप्तिदशायां भिया भयेन आक्रमणशङ्कया यं नित्यं प्रतिदिनं स्मृतवानस्मि, पश्चात् = तदनन्तरसमये निर्व्वेदोदयकाले

( बाहू प्रसार्य्य ) तदेहि वत्स ! एहि शालुम्ब्रापते !

चिरं जवनदास्येन सञ्चिताशेषपातकः ।
स्वाधीनदेहसंश्लेषदानादेषोऽद्य शोध्यताम् ॥ (१)

( इति परिष्वज्य ) अहो ! निर्वृतोऽस्मि ।

अमा । ( स्वगतम् ) अयमवसरो मे पलायनस्य ।

( इति त्वरितं निष्क्रान्तः । )

राजा । ( दृष्ट्वा स्वगतम् ) गच्छत्वयमिदानीं वराकः ।

भीमा । (बहिर्भूय) वत्स ! चिराय निर्वृतोऽहम् ।

सागर । ( भीमानन्दं दृष्ट्वा ) शालुम्ब्रापते ! क एष साक्षादेकलिङ्गनाथसमतेजा मयि स्नेहसम्भाषां प्रयुङ्क्ते ?

शालुम्ब्रा । एष शिशोदकुलगुरुर्भगवान् भीमानन्ददेवः ।

सागर । ( सावेगम् ) भगवन् !

---

दिदृक्षया दर्शनेच्छया यं स्मृतवानस्मि इति पूर्व्वेण सम्बन्धः स वत्सः अमरसिंहः मे नेत्रगोचरः, दृष्टिविषयो वर्त्तत इति शेषः। पर्य्यायालङ्कारः ।

(१) चिरं दीर्घकालं व्याप्य जवनदास्येन जवनस्य दिल्लीश्वरस्य दासत्वेन सञ्चिताशेषपातकः कृतनिखिलगुरुपापः एषः=मल्लक्षणो जनः अद्य स्वाधीनदेहस्य जवनाधीनताशून्यतया पवित्रस्य शरीरस्य संश्लेषदानात् सम्यक् संयोगसम्पादनात् शोध्यतां पवित्रीक्रियताम् त्वयेति शेषः प्रार्थनायां लोट् । स्वाधीनदेहस्य पावनत्वमनेन व्यञ्जितम् । जवनदास्येनेत्यत्र हेतौ करणे वा तृतीया ।

चिरं चितोरसंस्थोऽपि विदितोऽप्यसकृन्मया ।
पापव्रीड़ातमोमुष्टदृष्टिना नेक्षितो गुरुः ॥ (१)

अस्मिन् क्षणे तु—

स्नेहावलोकसम्भाषा-निवारितभयत्रपः
पतितः पतितो दासः श्रीपादकमलद्वये ॥ (२)

( इति साष्टाङ्गं प्रणमति । )

भीमा । उत्तिष्ठ वत्स ! कृतकिल्विषोऽपि जातानुशयोऽसि, मरणवैकल्पिकं प्रायश्चित्तमनुतिष्ठ; पापमुक्तो भविष्यसि ।

सागर । भगवन् ! ममापि महापातकिनः पापमोक्षो भविष्यतीति महदिदमाश्वासस्थानम्, वीतस्पृहोऽस्मि जीविते,

---

(१) चिरं षण्मासाधिककालं चितोरसंस्थः चितोरावस्थितोऽपि असकृत् = अनेकधा विदितोऽपि आप्तवाक्याज्ज्ञातोऽपि गुरुः, पापव्रीड़ातमोमुष्टदृष्टिना मया नेक्षितः न साक्षाद्दृष्टः । पापं जवनदास्यजनितं पातकं च व्रीड़ा च तज्जनिता लज्जा च ते एव तमः अन्धकारः तमोगुणप्रभवत्वात् तमोगुणरूपश्च, तेन मुष्टा अपहृता दृष्टिः दर्शनशक्तिः अथच हितनिश्चयः यस्य, सः तेन । रूपकालङ्कारः । दृष्टेर्भेदेऽप्यभेदाध्यवसायादतिशयोक्तिश्च ।

(२) स्नेहावलोकः सस्नेहदृष्टिः सम्भाषा सम्भाषणं च ताभ्यां निवारिते भयत्रपे भयं मृत्युभयं त्रपा लज्जा च यस्य स पतितः पातकदूषितो दासः श्रीपादकमलद्वये कुलगुरुश्रीचरणकमलद्वये पतितः निपतितः । प्रथमार्द्धार्थस्य प्रणिपातं प्रतिहेतुत्वात् काव्यलिङ्गालङ्कारः ।

तदयमञ्जलिः, दूरीभवत्विदं मे राज्यबन्धनम्, स्वीकरोतु मदर्पितं चितोरराज्यं वत्सः, सङ्गच्छतां खलु मणिःकाञ्चनेन।

भीमा। (राजानं प्रति) वत्स! श्रुतं ते पितृव्य-वचनम्?

राजा। (स्वगतम्) सूर्य्यवंशसमुद्भूतः श्रीप्रतापस्य नन्दनः।
प्रतिग्रहफलं दैन्यं कथं स्वीकर्त्तुमुत्सहे॥ (१)

अथवा—यथा मन्यन्ते गुरवः।

(प्रकाशम्) कुलधर्म्ममीमांसका भगवन्त एवात्र प्रमाणम्। (२)

भीमा। वत्स! सागरसिंह! प्रतिग्रहो हि ब्राह्मणोचितो धनागमोपायः। क्षत्रियोचितस्तु जय एव।

सागर। यथाज्ञापयन्ति गुरवः (इति राजानं करे गृहीत्वा)

कुलप्रदीपेन कुलान्धकारो
वत्स त्वयाहं विजितः प्रकृत्या।

---

(१) सूर्य्यवंशसमुद्भूत इत्यनेन क्षत्रियत्वं चिन्तितम्, श्रीप्रतापस्येत्यनेन क्षात्रधर्म्मरक्षणदार्ढ्यं चिन्तितम्। कृते प्रतिग्रहे दैन्यमेव कातर्य्यमेव स्वीकृतं स्यात्, न चासौ शूराणां क्षत्रियाणां धर्म्म इति भावः।

(२) कुलं क्षात्रकुलं तस्य धर्म्मः तन्मीमांसकाः तत्र सम्मानितविचारकाः, भगवन्तः = श्रीगुरवः प्रमाणं प्रमिति साधनम्। यदुपदेक्ष्यन्ति तदस्माभिः पालनीय मिति भावः। कुलधर्मोल्लेखेन स्वाभिप्रायो द्योतितः।

पुरप्रविष्टस्य रणोद्यतस्य
जानामि ते वीर्य्यजितं स्वमद्य ॥ (१)

तत् स्ववीर्य्यविजितमेतत् प्रतिपद्यतां वत्सश्चितोरराज्यम् ।

राजा । तात ! क्षात्रधर्म्मगौरवेणोल्लङ्घितमर्य्यादः क्षन्तव्योऽस्मि ।

सागर । वत्स ! जातिधर्म्ममनुरुन्धानो भवान् बहुमन्तव्य एव न पुनः क्षन्तव्यः । तदादिशतु राजरूपेण कृत्यशेषं समापयितुं वत्सः ।

राजा । शिवसेन ! मद्वचनाद् विज्ञाप्यन्तां तापसयोद्धारस्तत्र तत्रावस्थिता देवीसिंहादयः प्रवीराश्च, तातमेनमनुगच्छन्तः स्थापयन्तु दुर्गशीर्षे त्वत्परिरक्षितां मार्त्तण्डमण्डललक्षणामस्मत्कुलवैजयन्तीमुद्घोषयन्तु च चितोराधिकारमङ्गलप्रवृत्तिं सर्व्वत्रेति ।

शिव । यथाज्ञापयति देवः ।

---

(१) कुलप्रदीपेन कुलस्य वंशस्य प्रदीपवत् प्रकाशकेन औज्ज्वल्यसम्पादकेनेति फलितार्थः । त्वया, कुलान्धकारः, कुलस्यान्धकारवत् मालिन्यकरः, अहं प्रकृत्या स्वभावेन जितः, प्रदीपस्यान्धकारविजयस्वभावत्वात् । अत्र यथासंख्यालङ्कारः द्वयोर्व्विशेषणयोः पूर्व्वापरीभावस्य त्वया अहमित्येतयोर्द्वयोर्व्विशेष्ययोः पूर्व्वापरीभावानुसारित्वात् । आकस्मिकपुरप्रवेशदर्शनेन पूर्व्वश्रुतचारवाक्यसंवादाच्च रणोद्यतस्येत्युक्तम् । तृतीयचरणस्थपदद्वयार्थस्य स्वपराजयं प्रति हेतुत्वात् काव्यलिङ्गम् । वस्तुतः अत्रानुमानालङ्कारः । जानामीति स्पष्टवचनात् ।

सागर। नमो नमो गुरुचरणेभ्यः, नमो नमश्चितोरेश्वर्य्यै नमो नम एकलिङ्गनाथाय। (इति शिवसेनेनानुगम्यमानो निष्क्रान्तः)।

(नेपथ्ये कलकलः)

भीमा। शैल। पश्य कुतस्त्योऽयं कलकलः।

शैल। (निरूप्य) महाराणासन्दर्शनाय मिलतां पौराणामानन्दकोलाहलोऽयम्।

भीमा। स्पष्टभाषितमपि श्रूयते, आकर्णय तावदिदम्।

शैल। (आकाशे) वत्स नारायण! किमुच्यते—

जातोऽन्तलादुर्गजयो जातो रिपुकुलक्षयः।
प्रशान्तकलहक्षोभं चण्डशक्तकुलद्वयम्॥

तदिदमावेदयितुं महाराजमुपस्थितो धावक इति? प्रियं नः, विश्रामय धावकम्, अनन्तरमेव राजसन्दर्शनं भविष्यति।

राजा। (सहर्षम्) भगवन्, श्रीपादकृपया सर्व्वतो निवृत्तोत्कण्ठोऽस्मि।

भीमा। वत्स, निस्तीर्णप्रतिज्ञोऽसि। तदुज्झिताधिष्ठाने पित्र्यसिंहासने तव शुभाधिरोहणमनुजानामि,—

सहिष्या राज्यरक्षैकरतया वीरवन्द्यया।
सह सिंहासने तिष्ठ राजते हि निशा शशी (१)॥

---

(१) निशा = रात्र्या, निशाशब्दस्य तृतीयैकवचने वैकल्पिका 'निश्' इत्येतदादेशात्। अत्र दृष्टान्तालङ्कारः। तन्मूलः कारणेन कार्य्यसमर्थनरूपोऽर्थान्तरन्यासश्च।

राजा । शिरसा गृहीतमिदं भगवद्वचनम् ।

शालुम्ब्रा । उद्धृतं मे हृदयशल्यम् । (१)

भीमा । शैलदेव, भगवदेकलिङ्गनाथप्रधानपुरोधास्त्वमसीति स्वोचितमनन्तरकृत्यमनुतिष्ठ ।

शैल । यथाज्ञप्तमनुतिष्ठामि ( जवनिकामुत्सार्य्य ) राजन्निदमभिमन्त्रितं सिंहासनम् एषा सपरिजना देवी,—तदलङ्क्रियतां सदेवीकाधिष्ठानेन चिरपरित्यागनि:श्रीकमेतत् । ( इति स्वस्ति वाचयित्वा आसनारोहणमन्त्रं पठति । )

राजा । नमः श्रीचितोरेश्वर्य्यै, नमः श्रीगुरुविप्रचरणेभ्यः । नमः पितृचरणेभ्यः ।

देवी । णमो णमो महादेवीए, णमो णमो अज्जउत्तचरणकमलाणं, णमो णमो सिरीगुरुबह्मणचरणकमलाणं । ( इत्युभौ सिंहासनमधिरोहतः । ( छत्रधारिणी छत्रं धारयति चामरधारिण्यौ चामरं च वीजयतः । )

[ नमो नमो महादेव्यै, नमो नम आर्य्यपुत्र-चरणकमलाभ्याम,
नमो नमः श्रीगुरु-ब्राह्मणचरणकमलेभ्यः । ]

---

(१) शालुम्ब्रापतिना पूर्व्वं सिंहासनारोहणप्रतिषेधात्, तेन चामरसिंहस्य तदस्पर्शप्रतिज्ञानात्, इयन्तं कालं यावत्तदस्पर्शाच्च, शालुम्ब्रापतेर्यद् दुःखं तदेव तेन हृदयशल्यत्वेनोक्तम् ।

( नेपथ्ये गायति )

विधिवदमरसेवानन्दिताधर्म्मवैरि-
क्षपणनियतभावा भीम-भक्तिप्रसन्ना ।
बहुकरतनुमध्या स्मेरवक्त्रा घनाङ्गी
जयति शिवपदान्तः श्रीचितोरेश्वरी नः ॥ (१)

---

(१) विधिवदित्यादि—। विधिवद् यथाविधि अमरैः देवगणेन या सेवा परिचर्य्या तया आनन्दिता, हृष्टा धर्म्मवैरिणामसुराणां क्षपणे विनाशने नियतः स्थिरो भावो यस्याः, 'इत्थं यदा यदा बाधा दानवोत्था भविष्यति । तदा तदावतीर्य्याहं करिष्यम्यरिसंक्षयम्' इति सप्तशत्युक्तेः । भीमा चासौ भक्तिप्रसन्ना चेति विशेषणकर्म्म ... णा भक्तेषु प्रसन्ना सौम्या चेत्यर्थः । बहुकरं बहवः कराः ... यस्याः छि ... घनाङ्गी मेघाङ्गी ज ... यस्याः सा श्रीचितोरेश्वर ... सञ्चारहीनमिति यावत् करोतु ... न्त्वोरन्त इत् इति सौपद्मसूत्रात् ।

पक्षान्तरे—अमरः पतिरमरसिंहः त ... धर्म्मवैरिणो जवनाः । भीमो भीमानन्दः तस्य ... अवसादरहिता । बहुकरतनुमध्या बहुकरी बहु ... विशेषणकर्म्मधारयः, बहु करोतीति कृञोऽणपवादकटप्र ... क्षामा' क्षीणकटितटा घनाङ्गी अशिथिलावयवा शिवं मङ्ग ... यस्याः सा श्रीचितोरेश्वरी श्रीरिव चितोरराजमहिषी नः

देवी । ( अपवार्य्य सहर्षम् ) अज्जउत्त, वीराए सरसंजोओ सुनिअदि ।

[ आर्य्यपुत्र ! वीरायाः स्वरसंयोगः श्रूयते । ]

राजा । ( सहर्षम् ) हर्षस्थानान्तरमिदम्, अपि च श्लिष्टबन्धोऽयं त्वया देवतायामिव भक्त्यतिशयमावेदयतीति

ब्रह्मचारिणोरेकः

जयत्येकलिङ्गेश्वरप्रातिभाव्य-　　　त
　　स्थितो राजलेखाञ्चितो हिन्दुसूर्य्यः ।
तमः सन्ततं वैरिवर्गं निरस्यन्
　　श्रिया मण्डितः संज्ञयेवैष देव्या । ...

---

देवी । ... महादेवीए, णमो णमो अज्जउत्तच... कमलाणं, णमो णमो सिरीगुरुबह्मणचरणकमलाणं । ( इत्य... सिंहासनमधिरोहतः । ( छत्रधारिणी छत्रं धारयप्रतिनिधित्वे स्थितः धारिण्यौ चामरं च वीजयतः । )　'एकलिङ्ग का दिवान' इति

[ नमो नमो महादेव्यै, नमो नम आर्य्य...　...: देवा इव इति समासाद् राज्ञां
...तयोरेकोऽर्थः, तैरञ्चितः पूजितः, रेखा-
नमो नमः श्रीगुरु-ब्राह्म...त्रयसमूह इत्यर्थो वा । एकलिङ्गशिवपदे राजा
...वत् तेनाञ्चितः सम्मानितः, तेन ज्ञापित इति
...ति, तमःसन्ततं तमोगुणव्याप्तं जवनतदनुयायिरूपं

(१) शालुम्बापतिना पूर्व्वं...रीकुर्व्वन् देव्या सह संज्ञयेव स्वनाम्नेव श्रिया सम्पदा तदस्पर्शप्रतिज्ञानात्, इयन्तं का अमरसिंह इति नामैव सम्पदादिवन्मण्डनहेतुरिति भावः, हृदयशल्यत्वेनोक्तम् । ...ज्ञा पत्नी तथा अमरसिंहस्य देवी । सूर्य्यश्च सन्ततं व्याप्तं

लब्धा चान्तलादुर्गविजयवार्त्ता

तदस्मिन् कल्याणानुबन्धे—

संपूज्यन्तां बलिभिरभितो देवता भक्तिदत्तैः

संप्रोद्यन्तां न... समन्तात् ।

...हर्षम्) हर्षस्थानान्तरमि...

संस्थ... ...देशे

...त्वया देवतायामिव भक्त्यतिशय...

...भर्त्तुः ॥

ब्रह्मचारिणोरेकः

जयत्येकलिङ्गेश्वरप्रातिभाव्य- ...मिदं व... ...नम् ।

स्थितो राजलेखाङ्कितो हिन्दुसूर्य... ...भः—

तमः सन्ततं वैरिवर्गं निरस्यन्

श्रिया मण्डितः संज्ञयेवैष देव्या ॥

---

देवी । ... णमो महादेवीए, णमो णमो अज्ज...त्त... कमलाणं, णमो णमो सिरीगुरुबह्मणचरणकमलाणं । ... सिंहासनमधिरोहतः । (छत्रधारिणी छत्रं धार...गी स्वयं धारिण्यौ चामरं च वीजयतः ।) ...न पौराश्च जय-

[नमो नमो महादेव्यै, नमो नम आर्य...

...णुरामि ?

नमो नमः श्रीगुरु-ब्राह्म...

...तःपरमपि प्रियमस्ति—

---

...रोद्धरणं, समग्रा

(१) शालुम्बापतिना पूर्व्वं शत्रुकराद्विमुक्ता ।

तदस्पर्शप्रतिज्ञानात्, इयन्तं व आर ...

हृदयशल्यत्वेनोक्तम् । ...

...ालङ्कारः । अर्थस्तु स्पष्टः ।

